# पञ्चतन्त्रम् ।



श्रीविष्णुशर्म्मणा सङ्कलितम् ।



वि, ए, उपाधिधारिणा पण्डितकुलपतिना

श्रीजीवानन्दविद्यासागरभट्टाचार्य्येण

विरचितया व्याख्यया समलङ्कृतम्

तेनैव संस्कृतं प्रकाशितञ्च ।



पञ्चम संस्करणम् ।



कलिकातानगर्य्याम् ।

सिद्धेश्वरयन्त्रे

मुद्रितम् ।

इं १८९५ ।



पण्डितकुलपतिः

श्रीजीवानन्दविद्यासागर वि, ए,

*PANDIT JIBANANDA VIDYASAGARA B, A.*

*Superintendent Free Sanskrit College, Calcutta.*

श्रीगणेशाय नमः।

# पञ्चतन्त्रम्।



ब्रह्मा रुद्रः कुमारो हरि-वरुण यमा वह्निरिन्द्रः कुवेर-
श्चन्द्रादित्यौ सरस्वत्युदधियुगनगा वायुरुर्वीभुजङ्गाः।
सिद्धा नद्योऽश्विनौ श्रीर्दितिरदितिसुता मातरश्चण्डिकाद्याः
वेदास्तीर्थानि यज्ञा गणवसुमुनयः पान्तु नित्यं ग्रहाश्च ॥ १ ॥
मनवे वाचस्पतये शुक्राय पराशराय ससुताय।
चाणक्याय च विदुषे नमोऽस्तु नयशास्त्रकर्त्तृभ्यः ॥ २ ॥

---

ग्रन्थारम्भे प्रारिप्सित परिसमाप्तिकामो ग्रन्थकृत् दुरदृष्टप्रशमनाय देवादीन् सङ्कीर्त्त्य तदाशिषं कामयते। ब्रह्मेति। ब्रह्मा हिरण्यगर्भः रुद्रः शिवः, कुमारः कार्त्तिकेयः, हरिर्विष्णुः वरुणः जलदेवः यमः शमनः, वह्निः अग्निः इन्द्रः देवराजः कुवेरः धनपतिः, चन्द्रः सोमः आदित्यः सूर्य्यः, सरस्वती वाग्देवी, उदधिः समुद्रः युगानि कृतादीनि नगाः पर्वताः शैलवृक्षौ नगावगावित्यमरः। वायुः पवनः, उर्वी पृथिवी, भुजङ्गाः पन्नगाः, सिद्धाः देवयोनिविशेषाः नद्यः सरितः गङ्गा-प्रभृतय इत्यर्थः अश्विनौ अश्विनीकुमारौ, श्रीः लक्ष्मीः दितिः कश्यपपत्नी दैत्य-जननी इत्यर्थः अदितिसुताः देवा इत्यर्थः चण्डिकाद्याः चण्डीप्रभृतयः मातरः मातृवर्गाः वेदाः ऋक्सामयजुरथर्वरूपाश्चत्वारः तीर्थानि पुण्यक्षेत्राणि काश्यादीनि यज्ञाः दर्शपौर्णमासादयः गणाः प्रमथाः शिवानुचरविशेषा इत्यर्थः वसवः अष्ट-संख्यकाः मुनयः व्यासादयः ग्रहाश्च नवसंख्यका रव्यादयश्च नित्यं सततं पान्तु रक्षन्तु अस्मानिति शेषः। स्रग्धरावृत्तं म्रभ्नैर्यानान्त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयमिति तल्लक्षणात् ॥ १ ॥

साम्प्रतं नीतिशास्त्रकारान् प्रणमति मनवे इति। मनवे स्वायम्भुवाय, वाच-स्पतये वृहस्पतये, शुक्राय, ससुताय सपुत्राय व्याससहितायेत्यर्थः पराशराय,

सकलार्थशास्त्रसारं जगति समालोक्य विष्णुशर्मेदम्।
तन्त्रैः पञ्चभिरेतच्चकार सुमनोहरं शास्त्रम्॥ ३॥

तद्यथा अनुश्रूयते। अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तत्र (क) सकलार्थिकल्पद्रुमः प्रवरमुकुटमणिमरीचिमञ्जरीचर्चितचरणयुगलः (ख) सकलकलापारङ्गतोऽमरशक्तिर्नाम (ग) राजा बभूव तस्य त्रयः पुत्राः परमदुर्मेधसो बहुशक्तिरुग्रशक्तिरनन्तशक्तिश्चेति नामानो बभूवुः। अथ राजा तान् शास्त्रविमुखान् आलोक्य सचिवान् आहूय प्रोवाच। भो! ज्ञातम् एतत् भवद्भिः यन्ममैते पुत्राः शास्त्रविमुखा विवेकरहिताश्च। तत् एतान् पश्यतो मे महद्दपि राज्यं न सौख्यम् आवहति। अथवा साध्विदमुच्यते।

अजातमृतमूर्खेभ्यो मृताजातौ सुतौ वरम्।
यतस्तौ स्वल्पदुःखाय यावज्जीवं जड़ो दहेत्॥ ४॥

---

विदुषे चाणक्याय च नयशास्त्रकर्तृभ्यः पूर्वोक्तेभ्योऽन्येभ्य इति भावः नमः प्रणतिरस्तु आर्य्यावृत्तमिदं यस्याः प्रथमे पादे द्वादशमात्रा तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्य्येति तल्लक्षणात्॥ २॥

सकलेति। एष विष्णुशर्म्मा जगति सकलानां अर्थशास्त्राणां सारं समालोक्य समालोच्येत्यर्थः पञ्चभिः तन्त्रैः भागविशेषैः एतत् सुमनोहरं शास्त्रं नीतिशास्त्रमित्यर्थः चकार। आर्य्यावृत्तमिदम्॥ ३॥

(क) सकलेति। सकलानां अर्थिनां याचकानां कल्पद्रुमः कामप्रद इत्यर्थः प्रवरेति। प्रवराणां महतां पराजितनृपतीनां प्रणतानामिति भावः मुकुटमणीनां किरीटरत्नानां या मरीचिमञ्जर्य्यः मयूखावल्यः तासां चयेन समूहेन चर्चितं रञ्जितं चरणयुगलं यस्य तथोक्तः।

(ख) सकलेति। सकलाः समग्रा याः कलाः चतुःषष्टिप्रकारा विद्याः तासां पारः अन्तः तम्।

(ग) अमरेति। अमरस्य शक्तिरिव शक्तिः यस्येति तथोक्तः। परमेति। परमा दुष्टा मेधा येषां ते अतिदुर्बुद्धय इत्यर्थः।

अजातेति। अजातमृतमूर्खेभ्यः पुत्रेभ्य इति शेषः अपेक्षार्थे पञ्चमी। मृताजातौ

वरं गर्भस्रावो वरमृतुषु नैवाभिगमनम्

वरं जातः प्रेतो वरमपि च कन्यैव जनिता।

वरं बन्ध्या भार्य्या वरमपि च गर्भेषु वसतिः

न चाविद्वान् रूपद्रविणगणयुक्तोऽपि तनयः॥ ५॥

किं तया क्रियते धेन्वा या न सूते न दुग्धदा।

कोऽर्थः पुत्रेण जातेन यो न विद्वान् न भक्तिमान्?॥६॥

वरमिहवा सुतमरणं मा मूर्खत्वं कुलप्रसूतस्य।

येन विबुधजनमध्ये जारज इव लज्जते मनुजः॥७॥

---

सुतौ वरम मनाक्प्रियौ देवाहृते वरः श्रेष्ठे त्रिषु क्लीवे मनाक्प्रिय इत्यमरः। यतः यस्मात् तौ मृताजातौ स्वल्पदुःखाय भवत इति शेषः॥ जड़ः मूर्खः पुत्रः यावज्जीवम् दहेत् ज्वालयेत्। मूर्खः पुत्रः यावज्जीवं क्लेशप्रद इति भावः। पथ्यावक्त्रं वृत्तं युजोश्चतुर्थतो येन पथ्यावक्त्रं प्रकीर्त्तितमिति तल्लक्षणात्॥ ४॥

वरमिति। गर्भस्रावः अकाले गर्भनिःसरणं वरं मनाक् प्रियः ऋतुषु रजोनिर्गमादारभ्य षोड़शसु निशासु इत्यर्थः अभिगमनं स्त्रीसङ्गमो नैव वरम्। जातः उत्पन्नः पुत्रः प्रेतः मृतः वरम्। कन्या एव जनिता वरम्। बन्ध्या अप्रसवा भार्य्यापि वरम्। गर्भेषु वसतिः स्थितिः गर्भादनिःसरणमित्यर्थः अपि वरम्। रूपद्रविणगणयुक्तः रूपवान् धनराशिवान् अपि तनयः अविद्वान् मूर्खश्चेदिति शेषः न च वरमिति शेषः। शिखरिणी वृत्तं रसैरुद्रैश्छिन्ना यमनसभलागः शिखरिणीति तल्लक्षणात्॥ ५॥

किमिति। तया धेन्वा गवा किं क्रियते? या धेनुः न सूते न प्रसवं करोति न दुग्धदा न दुग्धं ददातीत्यर्थः। दुग्धदानासमर्थया अप्रसविन्या धेन्वा नास्ति प्रयोजनमित्यर्थः। यः पुत्रः न विद्वान् न भक्तिमान् पित्रादिष्विति शेषः न धार्मिक इति पाठान्तरम्। तेन पुत्रेण जातेन उत्पन्नेन कोऽर्थः किं प्रयोजनम्? ॥ ६॥

वरमिति। इह जगति सुतमरणं वरं वा, कुलप्रसूतस्य सत्कुलोद्भवस्य मूर्खत्वं मा भवतु इति शेषः। येन मूर्खत्वेन मनुजः मानवः विबुधजनमध्ये पण्डितसमितौ जारज इव उपपतिज इव जारस्तूपपतिः समावित्यमरः। लज्जते। यद्ययं कुलप्रसूतः तदास्य कथं मूर्खत्वं तस्मात् जारजोऽयमिति विदुषां प्रतीतेर्लज्जेति भावः। आर्य्यावृत्तम्। उपमालङ्कारः तदुक्तं दर्पणे। साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमा द्वयोरिति॥ ७॥

गुणिगणगणनारम्भे न पतति कठिनी ससम्भ्रमा यस्य ।
तेनाम्बा यदि सुतिनी वद बन्ध्या कीदृशी भवति ॥ ८ ॥

तदेतेषां यथा बुद्धिप्रकाशो भवति तथा कोऽप्युपायोऽनुष्ठीयताम् । अत्र च मद्दत्तां वृत्तिं (घ) भुञ्जानानां पण्डितानां पञ्चशती तिष्ठति । ततो (ङ) यथा मम मनोरथाः सिद्धिं यान्ति तथा अनुष्ठीयतामिति । तत्रैकः प्रोवाच । देव ! द्वादशभिर्वर्षैर्व्याकरणं श्रूयते (च) । ततो धर्मशास्त्राणि मन्वादीनि अर्थशास्त्राणि चाणक्यादीनि कामशास्त्राणि वात्स्यायनादीनि । एवं च ततो धर्मार्थकामशास्त्राणि ज्ञायन्ते । ततः प्रतिबोधनं (छ) भवति । अथ तन्मध्यतो सुमतिर्नाम सचिवः प्राह । (ज) अशाश्वतोऽयं जीवितव्यविषयः (झ) । प्रभूतकालज्ञेयानि शब्दशास्त्राणि । तत्संक्षेपमात्रं शास्त्रं किञ्चिदेतेषां प्रबोधनार्थं चिन्त्यतामिति । उक्तञ्च यतः ।

---

गुणीति । गुणिगणानां विद्वद्वृन्दानां गणनारम्भे संख्याप्रसङ्गे यस्य नाम्नीति शेषः । कठिनी खड़ीति प्रसिद्धिः । सम्भ्रमा सगौरवा न पतति गौरवपूर्वकं यन्नाम न लिख्यते इति भावः तेन पुत्रेण अम्बा माता यदि पुत्रिणी पुत्रवती भवति, तदा बन्ध्या कीदृशी भवति वद बन्ध्या तादृशी जननी च तुल्येति भावः । आर्य्यावृत्तम् ॥ ८ ॥

(घ) वृत्तिं जीवनोपायभूतां भूसम्पत्तिमित्यर्थः ।

(ङ) ततः पण्डितानां पञ्चशत्या इत्यर्थः । मनोरथाः कामाः ।

(च) श्रूयते पठ्यते इत्यर्थः ।

(छ) प्रतिबोधनं ज्ञानं पाण्डित्यमित्यर्थः ।

(ज) अशाश्वतः अनित्यः क्षणभङ्गुर इत्यर्थः ।

(झ) जीवितव्यविषयः जीवनकाल इत्यर्थः । प्रभूतकालज्ञेयानि बहुकालवेद्यानि ।

अनन्तपारं किल शब्दशास्त्रं स्वल्पं तथायुर्बहवश्च विघ्नाः।
सारं ततो ग्राह्यमपास्य फल्गु हंसैर्यथा क्षीरमिवाम्बुमध्यात्॥९॥

तदत्रास्ति विष्णुशर्मा नाम ब्राह्मणः सकलशास्त्रपारङ्गमः छात्रसंसदि लब्धकीर्त्तिः, तस्मै समर्पयतु एतान्। स नूनं द्राक् प्रबुद्धान् (ञ) करिष्यतीति। स राजा तदाकर्ण्य विष्णुशर्माणमाहूय प्रोवाच। भो भगवन्! मदनुग्रहार्थमेतान् अर्थशास्त्रं प्रति द्राग्यथा (ट) अनन्यसदृशान् विदधासि तथा कुरु। तदा अहं त्वां शासनशतेन योजयिष्यामि। अथ विष्णुशर्मा तं राजानमूचे। देव! श्रूयतां मे तथ्यवचनम्। नाहं विद्याविक्रयं (ठ) शासनशतेनापि करोमि। पुनरेतांस्तव पुत्रान् मासषट्केन यदि नीतिशास्त्रज्ञान् न करोमि ततः स्वनामत्यागं करोमि। किं बहुना। श्रूयतां ममैषः सिंहनादः (ड)। नाहमर्थलिप्सुर्ब्रवीमि (ढ) ममाशीतिवर्षस्य व्यावृत्तसर्वेन्द्रियार्थस्य न किञ्चिदर्थेन प्रयोजनं किन्तु त्वत्-

---

अनन्तेति। शब्दशास्त्रम् अनन्तपारम् अशेषं किल निश्चितम्। तथा आयुः जीवनकालः स्वल्पं तत्रापि बहवो विघ्नाः व्याघाताः शास्त्रालोचने इति शेषः ततः तस्मात् जनैः हंसैर्यथा अम्बुमध्यात् क्षीरमिव दुग्धमिव फल्गु असारम् अपास्य त्यक्त्वा सारम् उत्कृष्टं वस्तु ग्राह्यम्। उपजातिवृत्तं स्यादिन्द्रवज्रा यदि तौ जगौग इति उपेन्द्रवज्रा प्रथमे लघौ सेति अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति तल्लक्षणात्। उपमालङ्कारः॥ ९॥

(ञ) द्राक् झटिति। प्रबुद्धान् ज्ञानसम्पन्नान्।

(ट) अनन्यसदृशान् असाधारणान्।

(ठ) शासनशतेन शतसंख्यकसम्प्रदानपत्रेणेत्यर्थः।

(ड) सिंहनादः सिंहवद्गर्जनम्।

(ढ) अर्थलिप्सुः धनलालसः। अशीतिवर्षस्य अशीतिवर्षवयस्कस्य। व्यावृत्तसर्वेन्द्रियार्थस्य इन्द्रियभोग्यवस्तुषु निस्पृहस्येत्यर्थः।

प्रार्थनासिद्ध्यर्थं सरस्वतीविनोदं (ण) करिष्यामि। तल्लिख्यतामद्यतनो दिवसः यदि अहं षण्मासाभ्यन्तरे तव पुत्रान् नयशास्त्रं प्रति अनन्यसदृशान् न करिष्यामि ततो नार्हति (त) देवो देवमार्गं सन्दर्शयितुम्। अथासौ राजा तां ब्राह्मणस्यासम्भव्यां प्रतिज्ञां श्रुत्वा ससचिवः प्रहृष्टो विस्मयान्वितः तस्मै सादरं तान् कुमारान् समर्प्य परां (थ) निर्वृतिमाजगाम। विष्णुशर्म्मणापि तानादाय (द) तदर्थं मित्रभेद-मित्रप्राप्ति—काकोलूकीय—लब्धप्रणाशापरीक्षितकारकाणि चेति पञ्च तन्त्राणि रचयित्वा पाठितास्ते राजपुत्राः। तेऽपि तानि अधीत्य मासषट्केन यथोक्ताः (ध) संवृत्ताः। ततः प्रभृति एतत्पञ्चतन्त्रकं नाम नीतिशास्त्रं बालावबोधनार्थं भूतले प्रवृत्तम्। किं बहुना।

अधीते य इदं नित्यं नीतिशास्त्रं शृणोति च।
न पराभवमाप्नोति शक्रादपि कदाचन॥ १०॥

कथामुखमेतत्॥

---

(ण) सरस्वतीविनोदं सरस्वत्या वाग्देव्या विनोदं शास्त्रचर्चामित्यर्थः।

(त) देवः जगदीश्वरः देवमार्गं स्वर्गपथं परलोकमित्यर्थः सन्दर्शयितुं नाम इति शेषः न अर्हति परलोके मम सद्गतिं न विदधातु इति भावः।

(थ) निर्वृतिं सन्तोषम्।

(द) तदर्थं तेषां राजपुत्राणां कृते इत्यर्थः।

(ध) यथोक्ताः यथाकथिताः पण्डिता इत्यर्थः।

# अथ मित्रभेदो नाम प्रथमं तन्त्रम् ।

अथातः प्रारभ्यते मित्रभेदो नाम प्रथमं तन्त्रम् ।

यस्यायमादिमः श्लोकः ।

वर्द्धमानो महान् स्नेहः सिंहगोवृषयोर्वने ।
पिशुनेनातिलुब्धेन जम्बूकेन विनाशितः ॥ १ ॥

तद्यथा अनुश्रूयते । अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तत्र (क) धर्मोपार्जितभूरिविभवो वर्द्धमानको नाम वणिक्पुत्रो बभूव । तस्य कदाचिद्रात्रौ शय्यारूढ़स्य चिन्ता समुत्पन्ना यत्प्रभूतेऽपि वित्ते अर्थोपायाश्चिन्तनीयाः कर्त्तव्याश्चेति । यत उक्तञ्च ।

न हि तद्विद्यते किञ्चिद्यदर्थेन न सिद्ध्यति ।
यत्नेन मतिमांस्तस्मादर्थमेकं प्रसाधयेत् ॥ २ ॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमांल्लोके यस्यार्थाः स च पण्डितः ॥३॥

न सा विद्या न तद्दानं न तच्छिल्पं न सा कला ।

---

वर्द्धमान इति । वने सिंहगोवृषयोः सिंहवृषभयोः वर्द्धमानः वृद्धिं गच्छन् महान् स्नेहः प्रणयः अतिलुब्धेन पिशुनेन खलेन जम्बूकेन शृगालेन विनाशितः विध्वंसितः ॥ १ ॥

(क) धर्मेति । धर्मेण धर्मशास्त्रोक्तवृत्त्या उपार्जितः सञ्चितः भूरिर्महान् विभवः सम्पद् येन तथाभूतः ।

न हीति । यत् अर्थेन न सिद्ध्यति तत् किञ्चिदपि वस्तु न हि विद्यते सर्वमेव अर्थसाध्यमिति भावः । तस्मात् मतिमान् प्राज्ञो जनः यत्नेन एकं केवलम् अर्थं साधयेत् अर्जयेत् ॥ २ ॥

यस्येति सुगमम् ॥ ३ ॥

नेति । याचकैः अर्थार्थिभिः धनिनां समीपे इति शेषः यत् न गीयते न

न तत् स्थैर्य्यं हि धनिनां याचकैर्यन्न गीयते ॥ ४ ॥
इह लोके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां सर्वदा दुर्जनायते ॥ ५ ॥
अर्थेभ्योऽपि हि वृद्धेभ्यः संवृत्तेभ्यस्ततस्ततः ।
प्रवर्त्तन्ते क्रियाः सर्वाः पर्वतेभ्य इवापगाः ॥ ६ ॥
पूज्यते यदपूज्योऽपि यदगम्योऽपि गम्यते ।
वन्द्यते यदवन्द्योऽपि स प्रभावो धनस्य च ॥ ७ ॥
अशनादिन्द्रियाणीव स्युः कार्य्याण्यखिलान्यपि ।
एतस्मात्कारणाद्वित्तं सर्वसाधनमुच्यते ॥ ८ ॥
अर्थार्थी जीवलोकोऽयं श्मशानमपि सेवते ।
त्यक्त्वा जनयितारं स्वं निःस्वं गच्छति दूरतः ॥ ९ ॥

---

कीर्त्त्यते तत्किमपि नेति शेषः। तथाहि, सा विद्या न, तद्दानं न, तत् शिल्पं न, सा कला न, तत् स्थैर्य्यं मर्य्यादाशालित्वं न अयं भावः याचकेन धनिसमीपे धनलाभार्थं तदुपासनार्थिना तस्य धनिनः सर्वा विद्या सर्वं दानं सर्वं शिल्पज्ञानं सर्वा च चतुःषष्टिप्रकारा नृत्यादिविद्या सर्वप्रकारा मर्य्यादाशालिता च अस्तीति ज्ञात्वा प्रशस्यते इति ॥ ४ ॥

इहेति। इह अस्मिन् लोके संसारे परोऽपि जनः धनिनां स्वजनायते स्वजन इवाचरति। दरिद्राणान्तु स्वजनोऽपि सर्वदा दुर्जनायते दुर्जन इव आचरति ॥५॥

अर्थेभ्य इति। पर्वतेभ्यः आपगा इव नद्य इव ततस्ततः समन्तादित्यर्थः वृद्धेभ्यः वृद्धिं गतेभ्यः संवृत्तेभ्यः सम्भूतेभ्यः अर्थेभ्यः सर्वाः क्रियाः संसारयात्रोपयोगिनो व्यापाराः प्रवर्त्तन्ते सम्पद्यन्ते। उपमालङ्कारः ॥ ६ ॥

पूज्यते इति। अपूज्यः पूजानर्होऽपि यत् पूज्यते अगम्यः यत् समीपे गमनमपि अकर्त्तव्यं सोऽपि यत् गम्यते अवन्द्योऽपि अनभिवन्द्योऽपि यत् वन्द्यते प्रणम्यते, स धनस्य प्रभावः धनेनैव सर्वे पूज्या गम्या वन्द्याश्च भवन्तीति भावः ॥ ७ ॥

अशनादिति। अशनात् भोजनात् इन्द्रियाणीव यतः वित्तात् अखिलानि सर्वाणि कार्य्याणि स्युः परिपोषं भजन्ते। एतस्मात् कारणात् वित्तं धनं सर्वसाधनं सर्वकार्य्यनिष्पादकम् उच्यते कथ्यते बुधैरिति शेषः ॥ ८ ॥

अर्थार्थीति। अर्थार्थी धनलुब्धः अयं जीवलोकः श्मशानमपि सेवते आश्र-

गतवयसामपि पुंसां येषामर्था भवन्ति ते तरुणाः।
अर्थेन तु ये हीना वृद्धास्ते यौवनेऽपि स्युः॥ १०॥

स चार्थः पुरुषाणां षड्भिरुपायैर्भवति भिक्षया नृपसेवया कृषिकर्मणा, विद्योपार्जनेन, व्यवहारेण (ख) वणिक्कर्मणा वा। सर्वेषामपि तेषां वाणिज्येन अतिरस्कृतोऽर्थलाभः स्यात्। (ग) उक्तञ्च यतः।

कृता भिक्षाऽनेकैर्वितरति नृपो नोचितमहो
कृषिः क्लिष्टा विद्या गुरुविनयवृत्त्यातिविषमा।
कुसीदाद्दारिद्र्यं परकरगतग्रन्थिशमनात्
न मन्ये वाणिज्यात्किमपि परमं वर्त्तनमिह॥११॥

उपायानाञ्च सर्वेषामुपायः पण्यसंग्रहः।

---

यति। तथा निःस्वं निर्धनं जनयितारं पितरमपि त्यक्त्वा दूरतः गच्छति॥ ९॥

गतेति। गतं वयो येषां वृद्धानामित्यर्थः अपि येषां पुंसाम् अर्थाः भवन्ति ते तरुणाः युवानः तरुणवत् उत्साहसम्पन्ना इत्यर्थः। ये तु अर्थेन हीनाः, ते यौवनेऽपि वृद्धाः स्युः निरुत्साहा भवन्तीत्यर्थः॥ १०॥

(ख) व्यवहारेण कुसीदविधिना इत्यर्थः।

(ग) अतिरस्कृतः अनाच्छादितः सर्वसम्मत इत्यर्थः।

कृतेति। अनेकैः जनैः भिक्षा कृता तस्मात् भिक्षायां न उन्नतिरिति भावः। नृपः प्रभुः उचितं न वितरति ददाति तस्मात् राजसेवायां न विशेषलाभ इति भावः। अहो इति खेदे कृषिः क्लिष्टा क्लेशदायिनी तस्मात् कृषिकर्मणः बहुक्लेशसाध्यतया अस्मदशक्यतया च न विशिष्टलाभहेतुरिति भावः। विद्या गुरुषु विनयवृत्त्या शिष्टाचारसाध्यत्वेन अतिविषमा अतिदुर्लभेति भावः। परेषां करगतस्य धनस्य इति भावः यः ग्रन्थिः बाधाविशेषः इति यावत्तस्य शमनात् शान्तिविधानात् हेतोः कुसीदात् धनव्यवहारात् दारिद्र्यं सम्भवतीति भावः कुसीदजीविभिः परहस्तगतस्य धनस्य आदानसमये प्रायशोऽशेषा बाधा दृश्यते किमधिकं धर्माधिकरणसाहाय्यमपि क्रियते तथात्वेऽपि फलसिद्धिर्बह्वायासकरीति तस्मात् दारिद्र्यसम्भव इति भावः। तस्मात् इह संसारे वाणिज्यात् परमं उत्कृष्टं किमपि वर्त्तनं जीवनोपायः न वर्त्तते इति शेषः इत्यहं मन्ये। शिखरिणीवृत्तम्॥ ११॥

धनार्थं शस्यते ह्येकस्तदन्यः संशयात्मकः ॥ १२ ॥

तच्च वाणिज्यं सप्तविधमर्थागमाय स्यात्तद्यथा गान्धिकव्यवहारो, निक्षेपप्रवेशो, गोष्ठिककर्म परिचितग्राहकागमो, मिथ्याक्रयकथनं कूटतुलामानं देशान्तराद्भाण्डानयञ्चेति (घ) । उक्तञ्च । पण्यानां गान्धिकं पण्यं किमन्यैः काञ्चनादिभिः ।

यत्रैकेन च यत् क्रीतं तच्छतेन प्रदीयते ॥ १३ ॥

निक्षेपे पतिते हर्म्ये श्रेष्ठी स्तौति स्वदेवताम् ।

---

उपायानामिति । सर्वेषां उपायानां उपार्जनविधीनां मध्ये एकः केवलः पण्यसंग्रहः पण्यानां विक्रेयद्रव्याणां संग्रहरूपः उपायः धनार्थं शस्यते प्रशस्ततमः कीर्त्त्यते, तस्मात् पण्यसंग्रहात् वाणिज्यादित्यर्थः अन्य उपायः पूर्वोक्तभिक्षादिरूपः संशयात्मकः सन्देहसङ्कुलः फलसिद्धौरिति शेषः ॥ १२ ॥

(घ) अर्थागमाय धनोपार्जनाय । गान्धिकव्यवहारः गन्धद्रव्यव्यवसायः । निक्षेपकार्थं मह्यं प्रत्यहं एतावत् वस्तु देयं त्वयि प्रभूतमेतत् द्रव्यं निक्षिपामि इत्यभिधाय निक्षेपिणा व्यवसायिहस्ते यत् बहुकालिकमूल्यस्वरूपं वस्तु निक्षिप्यते स निक्षेपः तस्य प्रवेशः स्वायत्तीकरणमित्यर्थः । गोष्ठिककर्म गवां स्थानं गोष्ठं तत्सम्बन्धि कर्म एकस्थानस्थितानां बहूनां गवां भक्षणीययवसादीनां भारग्रहणपूर्वकं तत्समाधानं गोष्ठिककर्म समाजकर्म समाजे बहूनां लोकानां समावेशवशात् तेषां सर्वनिष्पत्तिभारग्रहणेन तत् समाधानं वा । परिचितग्राहकागमः परिचितो हि ग्राहकः क्रेयद्रव्याणां मूल्यं प्रति द्विरुक्तिं न करोति तस्मात् तत् सकाशे विलक्षणलाभसम्भव इति भावः । मिथ्याक्रयकथनं अल्पेन मूल्येन क्रीतं वस्तु मया इदं बहुना मूल्येन क्रीतमिति ग्राहकसमीपे मृषा कथनम् । कूटतुलामानं कपटतौलदण्डादिना द्रव्याणां तौलनं देशान्तरात् भाण्डानां द्रव्याणां आनयनम् अल्पमूल्येनेति भावः ।

पण्यानामिति । पण्यानां विक्रेयाणां द्रव्याणां मध्ये गान्धिकं पण्यं गन्धसम्बन्धि विक्रेयं वस्तु श्रेष्ठमिति शेषः । अन्यैः काञ्चनादिभिः पण्यैरिति शेषः किम् ? काञ्चनादिकं गान्धिकेन तुल्यं नेति भावः । यत्र यतः एकेन मूल्येन क्रीतं इति शेषः यत् गन्धद्रव्यं क्रीतं तत् शतेन मूल्येनेति शेषः प्रदीयते ॥ १३ ॥

निक्षेपे इति । हर्म्ये स्वगृहे इति भावः निक्षेपे पतिते केनचित् निहिते

निक्षेपी म्रियते तुभ्यं प्रदास्याम्युपयाचितम् ॥ १४ ॥
गोष्ठिककर्मनियुक्तः श्रेष्ठी चिन्तयति चेतसा हृष्टः।
वसुधा वसुसंपूर्णा मयाद्य लब्धा किमन्येन ॥ १५ ॥
परिचितमागच्छन्तं ग्राहकमुत्कण्ठया विलोक्यासौ।
हृष्यति तद्धनलुब्धो यद्वत्पुत्रेण जातेन ॥ १६ ॥

अन्यच्च। पूर्णापूर्णे माने परिचितजनवञ्चनं तथा नित्यम्।
मिथ्याक्रयस्य कथनं प्रकृतिरियं स्यात्किरातानाम् ॥ १७ ॥

अन्यच्च। द्विगुणं त्रिगुणं वित्तं भाण्डक्रयविचक्षणाः।
प्राप्नुवन्त्युद्यमाल्लोका दूरदेशान्तरं गताः ॥ १८ ॥

इत्येवं सम्प्रधार्य मथुरागामीनि भाण्डानि आदाय शुभायां तिथौ गुरुजनानुज्ञातः सुरथाधिरूढः प्रस्थितः तस्य

---

इति यावत्। श्रेष्ठी वणिक् स्वदेवतां स्वव्यवसायाधिष्ठात्रीं देवतां स्तौति निक्षेपी निक्षेप्ता म्रियते चेदिति शेषः तुभ्यम् उपयाचितं प्रदास्यामि अभिमतेन वस्तुना त्वां पूजयिष्यामीति भावः ॥ १४ ॥

गोष्ठिकेति। गोष्ठिककर्मणि पूर्वोक्ते नियुक्तः श्रेष्ठी चेतसा हृष्टः सन् चिन्तयति मया वसुसम्पूर्णा वसुधा पृथ्वी अद्य लब्धा, अन्येन किम्? नान्येन मे प्रयोजनमित्यर्थः। गोष्ठिकव्यवहारे एव मया प्रभूता लभ्यते अन्यद् भवतु न वा इति भावः ॥ १५ ॥

परिचितमिति। असौ श्रेष्ठी परिचितं ग्राहकमागच्छन्तम् उत्कण्ठया औत्सुक्येन विलोक्य तस्य धनलुब्धः सन् पुत्रेण जातेन यद्वत् हृष्यति आनन्दमनुभवति ॥ १६ ॥

पूर्णेति। माने पूर्णापूर्णे कदाचित् पूर्णं कदाचित् अपूर्णं स्वयं द्रव्यक्रये पूर्णं विक्रये अपूर्णमिति भावः। नित्यं सततं परिचितानां जनानां वञ्चनं प्रतारणम्। तथा मिथ्याक्रयस्य कथनम् इयं किरातानां व्याधानां प्रकृतिः स्वभावः स्यात् ॥ १७ ॥

द्विगुणमिति। भाण्डानां विक्रेयद्रव्याणां क्रये विचक्षणा निपुणाः लोकाः वणिज इत्यर्थः उद्यमात् उत्साहात् दूरदेशान्तरं गताः सन्तः द्विगुणं त्रिगुणं मूलधनादिति शेषः वित्तं धनं प्राप्नुवन्ति लाभरूपेणेति भावः ॥ १८ ॥

च मङ्गलवृषभौ (ङ) सञ्जीवकनन्दकनामानौ गृहोत्पन्नौ धूर्वोढ़ारौ स्थितौ। तयोरेकः सञ्जीवकाभिधानो यमुनाकच्छम् (च) अवतीर्णः सन् पङ्कपूरम् (छ) आसाद्य कलितचरणो युगभङ्गं विधाय निषसाद। अथ तं तदवस्थम् आलोक्य वर्द्धमानः परं विषादम् अगमत्। तदर्थं च स्नेहार्द्रहृदयः त्रिरात्रं प्रयाणभङ्गम् (ज) अकरोत्। अथ तं विषण्णमालोक्य सार्थिकैरभिहितम्। भोः श्रेष्ठिन्! किमेवं वृषभस्य कृते सिंहव्याघ्रसमाकुले बह्वपायेऽस्मिन् (झ) वने समस्तसार्थः त्वया सन्देहे नियोजितः। उक्तञ्च।

न स्वल्पस्य कृते भूरि नाशयेत् मतिमान्नरः।
एतदेवात्र पाण्डित्यं यत् स्वल्पाद्भूरिरक्षणम् ॥ १९ ॥

अथासौ तदवधार्य्य सञ्जीवकस्य रक्षापुरुषान् निरूप्य अशेषसार्थं नीत्वा प्रस्थितः। अथ रक्षापुरुषा अपि बह्वपायं तद्वनं विदित्वा सञ्जीवकं परित्यज्य पृष्ठतो गत्वा अन्येद्युस्तं सार्थ-

---

(ङ) मङ्गलवृषभौ माङ्गलिकवृषौ। गृहोत्पन्नौ गृहजातौ। धूर्वोढ़ारौ भारवाहकौ।

(च) यमुनाकच्छं यमुनानद्याः अन्तर्गतमनूपं जलप्राय मनूपं स्यात् पुंसि कच्छस्तथाविध इत्यमरः।

(छ) पङ्कपूरं कर्दमनिकरम्। कलितचरणः भीतपादः। युगभङ्गं युगस्य शकटाग्रवर्त्तिकाष्ठस्य भङ्गम्।

(ज) प्रयाणभङ्गं गमनस्थगनम्। सार्थिकैः सहचरैः।

(झ) बह्वपाये बहुविपदि। सन्देहे प्राणसंशये इत्यर्थः। नियोजितः निपातितः।

नेति। मतिमान् नरः स्वल्पस्य सामान्यस्य वस्तुन इति शेषः, कृते निमित्तं भूरि प्रभूतं वस्तु न नाशयेत् अत्र स्वल्पं वस्तु एको वृष इति बोध्यम्। स्वल्पात् स्वल्पमपेक्ष्येत्यर्थः यबर्थे पञ्चमी। भूरिरक्षणं प्रभूतत्राणम् अत्र संसारे एतदेव पाण्डित्यं वैचक्षण्यम् ॥ १९ ॥

चाहं मिथ्याह्नः। स्वामिन्! मृतोऽसौ सञ्जीवकोऽस्माभिस्तु सार्थवाहस्याभीष्ट इति मत्वा वह्निना संस्कृतः इति। तच्छ्रुत्वा सार्थवाहः कृतघ्नतया स्नेहार्द्रहृदयस्तस्य और्द्ध्वदेहिकक्रियाः वृषोत्सर्गादिकाः सर्वाश्चकार। सञ्जीवकोऽप्यायुःशेषतया यमुनासलिलमिश्रैः शिशिरतरवातैः आप्यायितशरीरः कथञ्चिदप्युत्थाय यमुनातटमुपपेदे। तत्र मरकतसदृशानि (ञ) बालतृणाग्राणि भक्षयन् कतिपयैः अहोभिर्हरवृषभ इव पीनः ककुद्मान् बलवांश्च संवृत्तः प्रत्यहं वल्मीकशिखराग्राणि शृङ्गाभ्यां विदारयन् गर्जमानः आस्ते। साधु चेदमुच्यते।

अरक्षितं तिष्ठति दैवरक्षितम्
सुरक्षितं दैवहतं विनश्यति।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे विनश्यति ॥ २० ॥

अथ कदाचित् पिङ्गलको नाम सिंहः सर्वमृगपरिवृतः पिपासाकुल उदकपानार्थं यमुनातटमवतीर्णः सञ्जीवकस्य गम्भीरतररावं दूरादेव अशृणोत्। तच्छ्रुत्वा अतीवव्याकुलहृदयः ससाध्वसमाकारं प्रच्छाद्य (ट) वटतले चतुर्मण्डलावस्थानेन अवस्थितः। चतुर्मण्डलावस्थानं त्विदम् सिंहः सिंहानु-

---

(ञ) मरकतसदृशानि हरिद्वर्णमणिविशेषतुल्यानि। पीनः स्थूलः।

अरक्षितमिति। अरक्षितम् अप्रतिपालितं वस्तु दैवरक्षितं दैवेन पालितं तिष्ठति जीवतीत्यर्थः। सुरक्षितं वस्तु दैवहतं दैवेन नाशितं चेत् विनश्यति। वने विसर्जितः परित्यक्तः अनाथोऽपि निराश्रयोऽपि जीवति दैवानुकूल्यादिति भावः। गृहे कृतप्रयत्नोऽपि विनश्यति दैवप्रातिकूल्यादिति भावः। वंशस्थबिलं वृत्तं, वदन्ति वंशस्थबिलं जतौ जराविति लक्षणात् ॥ २० ॥

(ट) प्रच्छाद्य। गोपायित्वा निःशङ्कभावं प्रकाश्येति भावः। चतुर्मण्डलावस्थानेन चतसृषु दिक्षु सहचरैर्मृगैर्वेष्टनावस्थानेनेत्यर्थः।

यायिनः काकरवाः (ठ) किंवृत्ता इति। अथ तस्य करटकदमनकनामानौ द्वौ शृगालौ मन्त्रिपुत्रौ भ्रष्टाधिकारौ (ड) सदानुयायिनौ आस्ताम्। तौ च परस्परं मन्त्रयतः। तत्र दमनकोऽब्रवीत्। भद्र करटक! अयं तावदस्मत्स्वामी पिङ्गलक उदकग्रहणार्थं यमुनाकच्छमवतीर्य्य स्थितः। स किं निमित्तं पिपासाकुलोऽपि निवृत्त्य व्यूहरचनां (ढ) विधाय दौर्मनस्येनाभिभूतोऽत्र (ण) वटतले स्थितः करटक आह। भद्र! किमावयोरनेन व्यापारेण (त)। उक्तञ्च यतः।

अव्यापारेषु व्यापारं यो नरः कर्त्तुमिच्छति।
स एव निधनं याति कीलोत्पाटीव वानरः॥ २१॥

दमनक आह। कथमेतत्। सोऽब्रवीत्।

## कथा १।

कस्मिंश्चित् नगराभ्यासे (थ) केनापि वणिक्पुत्रेण तरुषण्डमध्ये देवतायतनं कर्त्तुमारब्धम्। तत्र च ये कर्म्मकराः

---

(ठ) काकरवा इति। काकस्य रव इव रवो येषां तथोक्ताः। किं वृत्ताः किमिदमुपस्थितमिति वृत्तान्तानुशीलिन इत्यर्थः। तेषां मण्डलाकारेणावस्थानं चतुर्मण्डलावस्थानमिति भावः।

(ड) भ्रष्टाधिकारौ स्वाधिकारच्युतौ।

(ढ) व्यूहरचनां स्वसैन्येन मण्डलावस्थानम्। व्यूहस्तु बलविन्यास इत्यमरः।

(ण) दौर्मनस्येन उद्वेगेनेत्यर्थः।

(त) व्यापारेण प्रस्तावेन अधिकारेणेति यावत्।

अव्यापारेष्विति। यो नरः अव्यापारेषु अनधिकारेषु प्रसङ्गेषु व्यापारं प्रसङ्गं कर्त्तुम् इच्छति स कीलोत्पाटी वानर इव निधनमेव याति गच्छति प्राप्नोतीत्यर्थः॥ २१॥

(थ) नगराभ्यासे नगरान्तिके। तरुषण्डमध्ये वृक्षमण्डलीमध्ये।

स्थपत्यादयः (द) ते मध्याह्नवेलायाम् आहारार्थं नगरमध्ये गच्छन्ति। अथ कदाचित् तत्रानुषङ्गिकं (ध) वानरयूथमितश्चेतश्च परिभ्रमत् आगतम्। तत्र एकस्य कस्यचित् शिल्पिनोऽर्द्धस्फाटितोऽञ्जनवृक्षदारुमयः (न) स्तम्भः खदिरकीलकेन मध्यनिहितेन तिष्ठति। एतस्मिन् अन्तरे ते वानराः तरुशिखरप्रासादशृङ्गदारुपर्य्यन्तेषु (प) यथेच्छया क्रीड़ितुमारब्धाः। एकश्च तेषां प्रत्यासन्नमृत्युः चापल्यात् (फ) तस्मिन्नर्द्धस्फाटितस्तम्भे उपविश्य पाणिभ्यां कीलकं संगृह्य यावत् उत्पाटयितुमारेभे तावत् तस्य (ब) स्तम्भमध्यगतवृषणस्य स्वस्थानात् (भ) चलितकीलकेन यद्वृत्तं तत्प्रागेव निवेदितम्। अतोऽहं ब्रवीमि। अव्यापारेषु इति। आवयोः भक्षितशेष आहारोऽस्त्येव तत् किमनेन व्यापारेण। दमनक आह। तत् किं भवान् आहारार्थी केवलमेव। तन्न युक्तम्। उक्तं च।

सुहृदामुपकारकारणाद्द्विषतामप्यपकारकारणात्।

---

(द) स्थपत्यादयः शिल्पिप्रभृतयः।

(ध) आनुषङ्गिकम् अनुषङ्गेण स्वजातीयव्यापारक्रमेण आयातम्।

(न) अर्द्धस्फाटितः अर्द्धविदारितः। अञ्जनवृक्षस्य दारुमयः काष्ठमयः। खदिरकीलकेन खदिरतरुकाष्ठनिर्मितदण्डविशेषेण। मध्यनिहितेन अन्तःक्षीतेन।

(प) तरुशिखरेति। तरूणां वृक्षाणां शिखराणि अग्राण्येव प्रासादाः तेषां शृङ्गाणीव दारूणि काष्ठानि शाखा इत्यर्थः तेषां पर्य्यन्तेषु प्रान्तेषु।

(फ) प्रत्यासन्नमृत्युः आसन्नमरणः। चापल्यात् चञ्चलत्वात्।

(ब) स्तम्भेति। स्तम्भस्य तरुप्रकाण्डरूपस्य दारितस्येति भावः, मध्यं गते वृषणे अण्डकोषे यस्य तथाभूतस्य।

(भ) स्वस्थानात् दारितभागादित्यर्थः। वृत्तं घटितम्।

सुहृदामिति। बुधैः विद्वद्भिः सुहृदां बन्धूनाम् उपकारकारणात् उपकारविधा-

नृपसंश्रय इष्यते बुधैर्जठरं को न बिभर्त्ति केवलम् ॥२२॥

किञ्च। यस्मिन् जीवति जीवन्ति बहवः सोऽत्र जीवतु।
वयांसि किं न कुर्वन्ति चञ्चा स्वोदरपूरणम् ॥२३॥

तथा च। यज्जीव्यते क्षणमपि प्रथितं मनुष्यै:
विज्ञानशौर्यविभवार्य्यगुणैः समेतम्।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिरञ्च बलिं च भुङ्क्ते ॥२४॥

यो नात्मना न च परेण च बन्धुवर्गे
दीने दयां न कुरुते न च मर्त्त्यवर्गे।
किं तस्य जीवितफलं हि मनुष्यलोके
काकोऽपि जीवति चिरञ्च बलिं च भुङ्क्ते ॥ २५ ॥

---

नार्थमित्यर्थः द्विषतां शत्रूणाम् अपकारकारणात् अपकारविधानार्थमपि नृपसंश्रयः राजसेवा इष्यते राजसाहाय्येन लोका मित्राणामुपकार ममित्राणामपकारञ्च कुर्वन्तीति भावः को: जनः केवलं जठरम् उदरं न बिभर्त्ति? सर्व एव स्वोदरं बिभर्त्तीत्यर्थः। सुन्दरीवृत्तम्, अयुजोर्यदि सौ जगौ युजोः स भरौ लगौ यदि सुन्दरी तदा इति तल्लक्षणात् ॥ २२ ॥

यस्मिन्निति। यस्मिन् जीवति सति बहवो जनाः जीवन्ति अत्र जगति सः जनः जीवतु। वयांसि पक्षिणः चञ्चा स्वोदरपूरणं किं न कुर्वन्ति? ॥ २३ ॥

यदिति। मनुष्यैः प्रथितं प्रख्यातं यथा तथा क्षणमपि यत् जीव्यते तज्ज्ञाः तद्वेदिनः जनाः विज्ञानशौर्यविभवार्य्यगुणैः समेतं तत् जीवितम् इह संसारे प्रवदन्ति नाम नामेतिप्रसिद्धौ। काकोऽपि चिरं दीर्घकालं जीवति बलिं पूजाद्रव्यविशेषं भुङ्क्ते च। वसन्ततिलकं वृत्तं, ज्ञेयं वसन्ततिलकं तभजा जगौ ग इति तल्लक्षणात् ॥ २४ ॥

य इति। यः जनः आत्मना स्वेन दीने दुःस्थे बन्धुवर्गे दयां न कुरुते, मर्त्त्यवर्गे च सामान्ये दुःस्थे नरे च दयां न कुरुते। तथा परेण अन्येन द्वारेण तादृशे बन्धुवर्गे मर्त्त्यवर्गे च दयां न कुरुते मनुष्यलोके तस्य जीवितफलं जीवनप्रयोजनं किम्? नैव किञ्चिदित्यर्थः। अन्यत् पूर्ववत्। वसन्ततिलकं वृत्तम् ॥२५॥

सुपूरा स्यात् कुनदिका सुपूरो मूषिकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ २६ ॥

किञ्च। किं तेन जातु जातेन मातुर्यौवनहारिणा।
आरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ॥ २७ ॥

परिवर्त्तिनि संसारे मृतः को वा न जायते।
जातस्तु गण्यते सोऽत्र यः स्फुरेच्च श्रियाधिकः ॥ २८ ॥

किञ्च। जातस्य नदीतीरे तस्यापि तृणस्य जन्मसाफल्यम्।
यत्सलिलमज्जनाकुलजनहस्तालम्बनं भवति ॥ २९ ॥

तथाच। स्तिमितोन्नतसञ्चारा जनसन्तापहारिणः।
जायन्ते विरला लोके जलदा इव सज्जनाः ॥ ३० ॥

---

सुपूरेति। कुनदिका क्षुद्रा नदीत्यर्थः सुपूरा अनायासेन पूरणीया स्यात्। मूषिकाञ्जलिः मूषिकस्य क्षुद्रेन्दुरोः अञ्जलिः युक्तहस्तयुगलमित्यर्थः द्वौ युतावञ्जलिः पुमानित्यमरः। कापुरुषः क्षुद्रप्रकृतिः सुसन्तुष्टः स्वल्पकेनापि अल्पेन वस्तुनापि तुष्यति तुष्टो भवति ॥ २६ ॥

किमिति। मातुः जनन्याः यौवनहारिणा यौवनध्वंसिना जातेन तेन जनेन जातु कदाचित् किं फलं भवतीति शेषः। यः स्वस्य वंशस्य अग्रे ध्वजो यथा न आरोहति न तिष्ठति ॥ २७ ॥

परिवर्त्तिनीति। परिवर्त्तिनि परिवर्त्तनशीले संसारे को वा जनः मृतः सन् न जायते? अपितु सर्व एव मृतः पुनर्जायते इत्यर्थः। अत्र जगति यः श्रिया लक्ष्म्या अधिकः समुज्ज्वलः सन् स्फुरेत् शोभेत स जातस्तु गण्यते प्रशस्यते इति यावत् लोकैरिति शेषः ॥ २८ ॥

जातस्येति। नदीतीरे जातस्य तस्य तादृशस्य तृणस्यापि जन्मसाफल्यं भवतीति शेषः। यत् तृणं सलिले जले मज्जनेन आकुलस्य कातरस्य जनस्य हस्तालम्बनं भवति। तृणमवलम्ब्य सलिलादुत्तीर्य्यते इति भावः। आर्य्या-वृत्तम् ॥ २९ ॥

स्तिमितेति। लोके जगति स्तिमिताः स्थिरा उन्नताश्च सन्तः सञ्चरन्तीति तथोक्ताः जनानां सन्तापं हरन्ति नाशयन्तीति तथाभूताः अतएव जलदा इव सज्जनाः साधवः विरलाः अल्पाः जायन्ते ॥ ३० ॥

निरतिशयं गरिमाणं तेन जनन्याः स्मरन्ति विद्वांसः ।
यत्कमपि वहति गर्भं महतामपि यो गुरुर्भवति ॥ ३१ ॥
अप्रकटीकृतशक्तिः शक्तोऽपि जनस्तिरस्क्रियां लभते ।
निवसन्नन्तर्दारुणि लङ्घ्यो वह्निर्न तु ज्वलितः ॥ ३२ ॥

करटक आह ।

आवां तावदप्रधानौ तत्किमावयोरनेन व्यापारेण । उक्तञ्च ।

अपृष्टोऽत्राप्रधानो यो ब्रूते राज्ञः पुरः कुधीः ।
न केवलमसम्मानं लभते च विडम्बनम् ॥ ३३ ॥

तथाच । वचस्तत्र प्रयोक्तव्यं यत्रोक्तं लभते फलम् ।
स्थायीभवति चात्यन्तं रागः शुक्लपटे यथा ॥ ३४ ॥

दमनक आह । मा मा एवं वद ।

अप्रधानः प्रधानः स्यात् सेवते यदि पार्थिवम् ।
प्रधानोऽप्यप्रधानः स्याद् यदि सेवाविवर्जितः ॥ ३५ ॥

---

निरतिशयमिति । विद्वांसः तेन गर्भेण जनन्याः मातुः निरतिशयं समधिकं गरिमाणं गौरवं स्मरन्ति मन्यन्ते यत् गर्भं कमपि पुरुषं वहति, यः पुरुषः महतामपि जनानां गुरुः पूज्यो भवति । आर्य्यावृत्तम् ॥ ३१ ॥

अप्रकटीति । शक्तोऽपि समर्थोऽपि जनः अप्रकटीकृता अप्रकाशिता शक्तिर्येन तथाभूतश्चेदिति शेषः तदा तिरस्क्रियाम् अवमाननां लभते । अन्तर्दारुणि दारुमध्ये निवसन् वह्निः लङ्घ्यः अवज्ञेय इति यावत् ज्वलितः नतु नैव, ज्वलन् अग्निर्न केनापि लङ्घ्यते इति भावः । आर्य्यावृत्तम् ॥ ३२ ॥

अपृष्ट इति । अत्र संसारे यः अप्रधानः कुधीः दुर्बुद्धिः नरः अपृष्टः सन् राज्ञः पुरः अग्रतः ब्रूते कथयति सः केवलम् असम्मानं सम्मानाभावं न, विडम्बनम् च अवमाननाञ्च लभते ॥ ३३ ॥

वच इति । यत्र उक्तं कथितं वचः फलं लभते यथा शुक्लपटे श्वेतवसने रागो रञ्जनरसः अत्यन्तं स्थायीभवति च वाक्यरचा भवतीति भावः तत्र वचः प्रयोक्तव्यं वक्तव्यम् । उपमालङ्कारः ॥ ३४ ॥

अप्रधान इति । यदि पार्थिवं राजानं सेवते तदा अप्रधानोऽपि प्रधानः

यत उक्तञ्च। आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंस्कृतं वा।
प्रायेण भूमिपतयः प्रमदा लताश्च
यत् पार्श्वतो भवति तत्परिवेष्टयन्ति॥ ३६॥
तथाच। कोपप्रसादवस्तूनि ये विचिन्वन्ति सेवकाः।
आरोहन्ति शनैः पश्चाद्धुन्वन्तमपि पार्थिवम्॥ ३७॥
विद्यावतां महेच्छानां शिल्पविक्रमशालिनाम्।
सेवावृत्तिविदाञ्चैव नाश्रयः पार्थिवं विना॥ ३८॥
ये जात्यादिमहोत्साहान्नरेन्द्रान्नोपयान्ति च।
तेषामामरणं भिक्षा प्रायश्चित्तं विनिर्मितम्॥ ३९॥

---

स्यात् राजानुग्रहेणेति भावः यदि सेवाविवर्जितः राज्ञ इति शेषः तदा प्रधानोऽपि अप्रधानः स्यात् राज्ञःप्रातिकूल्यादिति भावः॥ ३५॥

आसन्नमिति। नृपतिः विद्याविहीनम् अकुलीनम् असंस्कृतम् अपवित्रं वा मनुष्यम् आसन्नमेव निकटस्थमेव भजते अनुगृह्णातीत्यर्थः भूमिपतयः राजानः प्रमदाः लताश्च यत् पार्श्वतः भवति वर्त्तते तत् परिवेष्टयन्ति आश्रयन्ति। अत्र प्रस्तुतानां भूमिपतीनाम् अप्रस्तुतानां प्रमदानां लतानाञ्च एकपरिवेष्टनक्रियासम्बन्धात् दीपकालङ्कारः। तदुक्तं दर्पणे। अप्रस्तुतप्रस्तुतयोर्दीपकन्तु। निगद्यते इति। वसन्ततिलकं वृत्तम्॥ ३६॥

कोपेति। ये सेवकाः कोपप्रसादयोः वस्तूनि विषयान् विचिन्वन्ति राज्ञः कोपकारणं प्रसादकारणञ्च अन्विष्यन्तीत्यर्थः ते पश्चात् क्रमेण इत्यर्थः धुन्वन्तं विरज्यन्तमपि पार्थिवं राजानम् आरोहन्ति प्राप्नुवन्ति राज्ञः समीपे प्रसादं लभन्ते इति भावः॥ ३७॥

विद्यावतामिति। विद्यावतां शिल्पविक्रमशालिनां सेवावृत्तिविदां राजसेवाचतुराणां महेच्छानां महाशयानां महेच्छस्तु महाशय इत्यमरः। पार्थिवं विना आश्रयो नास्तीति शेषः। विद्या शिल्पं विक्रमः सेवाचातुर्य्यञ्च राजाश्रयं प्राप्य सफलीभवतीति भावः॥ ३८॥

ये इति। ये जनाः जात्यादीनां महोत्साहात् महाभिमानात् नरेन्द्रान्

ये च प्राहुर्दुरात्मानो दुराराध्या महीभुजः।
प्रमादालस्यजाड्यानि ख्यापितानि निजानि तैः ॥ ४० ॥
सर्पान् व्याघ्रान् गजान् सिंहान् दृष्टोपायैर्वशीकृतान्।
राजेति कियती मात्रा धीमतामप्रमादिनाम् ॥ ४१ ॥
राजानमेव संश्रित्य विद्वान् याति परां गतिम्।
विना मलयमन्यत्र चन्दनं न प्ररोहति ॥ ४२ ॥
धवलान्यातपत्राणि वाजिनश्च मनोरमाः।
सदा मत्ताश्च मातङ्गाः प्रसन्ने सति भूपतौ ॥ ४३ ॥

करटक आह। अथ भवान् किं कर्त्तुमनाः। सोऽब्रवीत्। अद्य अस्मत्स्वामी पिङ्गलको भीतो भीतपरिवारश्च वर्त्तते। तत् एनं गत्वा भयकारणं विज्ञाय (म) सन्धिविग्रहयानासन-

---

राज्ञः न उपयान्ति न सेवन्ते तेषाम् आमरणं भिक्षा प्रायश्चित्तं विनिर्मितं विधात्रेति शेषः ॥ ३९ ॥

ये इति। ये च जनाः महीभुजः नृपाः दुरात्मानः दुराराध्याः दुःसेव्याः इति प्राहुः वदन्ति तैः निजानि स्वानि प्रमादालस्यजाड्यानि ख्यापितानि प्रकटितानि प्रमादी अलसः जड़श्चेति आत्मा प्रकाश्यते इत्यर्थः ॥ ४० ॥

सर्पानिति। सर्पान् व्याघ्रान् गजान् सिंहान् उपायैः वशीकृतान् दृष्ट्वा अप्रमादिनाम् अवधानवतां धीमतां बुद्धिमतां जनानां राजा इति कियती मात्रा ;भार इत्यर्थः अनायासेनैव तादृशैः पुरुषैः राजा वशीक्रियते इति भावः ॥ ४१ ॥

राजानमिति। विद्वान् जनः राजानमेव संश्रित्य सेवित्वेत्यर्थः परां महतीं गतिम् उन्नतिमित्यर्थः याति प्राप्नोति। चन्दनं मलयं पर्वतं विना अन्यत्र न प्ररोहति उद्भवति। अत्र प्राप्तिप्ररोहयोः साधारणधर्मयोः प्रतिबिम्बनात् दृष्टान्तालङ्कारः। तदुक्तं दर्पणे। दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनमिति ॥ ४२ ॥

धवलानीति। भूपतौ प्रसन्ने सति धवलानि श्वेतानि आतपत्राणि छत्राणि मनोरमा रम्याः वाजिनः अश्वाः, सदा मत्ताः मदस्राविणः मातङ्गाः हस्तिनश्च भुज्यन्ते इति शेषः राजानुग्रहे नाना सम्भोगः इति भावः ॥ ४३ ॥

(म) सन्धीति। विरोधिनोरुभयोः सम्मेलनं सन्धिः विग्रहः युद्धं यानं अवु

संश्रयद्वैधीभावानामेकतमेन संविधास्ये। करटक आह। कथं वेत्ति भवान् यद्भयाविष्टोऽयं स्वामी। सोऽब्रवीत्। ज्ञेयम् किमत्र यत उक्तञ्च।

उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति चोदिताः।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥ ४४ ॥

तथाच मनुः।

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारैश्च लक्ष्यतेऽन्तर्गतं मनः ॥ ४५ ॥

तदद्यैनं भयाकुलं प्राप्य स्वबुद्धिप्रभावेण निर्भयं कृत्वा वशीकृत्य च निजां (य) साचिव्यपदवीं समासादयिष्यामि।

---

प्रति यात्रा, आसनं समयप्रतीक्षणं संश्रयः बलवताभियुक्तस्य प्रबलाश्रयणं, द्वैधीभावः संशयेनावस्थानम् एतेषामुपायानाम् एकतमेन अन्यतमेन योऽत्र युज्यते तेनेति भावः संविधास्ये संविधानं करिष्यामि।

उदीरित इति। उदीरितः स्पष्टमुच्चरितः अर्थः विषयः पशुनापि गृह्यते बुध्यते हया अश्वाश्च नागाः हस्तिनश्च चोदिताः चालिताः संज्ञां प्रापिता वा वहन्ति। पण्डितः प्राज्ञो जनः अनुक्तम् अकथितमपि अर्थम् ऊहति बुध्यते। हि यतः बुद्धयः परेषाम् इङ्गितज्ञानं फलं यासां तथाविधाः। सामान्येन विशेषसमर्थनरूपोऽयमर्थान्तरन्यासः। तदुक्तं दर्पणे। सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति। वंशस्थविलं वृत्तम् ॥ ४४ ॥

आकारैरिति। आकारैः अवयवैः विषादप्रसादभावापन्नैरिति भावः इङ्गितैः सङ्केतैः गत्या गमनेन, चेष्टया क्रियया, भाषणेन कथनेन च तथा नेत्राणां वक्त्राणां मुखानाञ्च विकारैः विकृतिभावैः अन्तर्गतं मनः मानसो भाव इत्यर्थः लक्ष्यते प्रतीयते ॥ ४५ ॥

(य) साचिव्यपदवीं मन्त्रिपदम्।

करटक आह। अनभिज्ञो भवान् सेवाधर्मस्य तत्कथमेनं वशीकरिष्यसि। सोऽब्रवीत्। कथमहं सेवानभिज्ञः। मया हि तातोत्सङ्गे क्रीड़ता अभ्यागतसाधूनां नीतिशास्त्रं पठतां यच्छ्रुतं सेवाधर्मस्य सारभूतं हृदि स्थापितं श्रूयतां तच्चेदम्।

सुवर्णपुष्पितां पृथ्वीं विचिन्वन्ति नरास्त्रयः।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥ ४६॥
सा सेवा या प्रभुहिता ग्राह्या वाक्यविशेषतः।
आश्रयेत्पार्थिवं विद्वांस्तद्द्वारेणैव नान्यथा॥ ४७॥
यो न वेत्ति गुणान्यस्य न तं सेवेत पण्डितः।
न हि तस्मात् फलं किञ्चित् सुकृष्टादूषरादिव॥ ४८॥
द्रव्यप्रकृतिहीनोऽपि सेव्यः सेव्यगुणान्वितः।
भवत्याजीवनं तस्मात् फलं कालान्तरादपि॥ ४९॥
अपि स्थाणुवदासीनः शुष्यन् परिगतः क्षुधा।

---

सुवर्णेति। शूरः विक्रमी पुरुषश्च, कृतविद्यः विद्वांश्च, यश्च सेवितुं जानाति स च एते त्रयो नराः पृथ्वीं सुवर्णपुष्पितां सञ्जातसुवर्णपुष्पां विचिन्वन्ति लभन्ते सम्पदमधिगच्छन्तीति फलितार्थः॥ ४६॥

सेति। या प्रभुहिता प्रभोर्हितकारिणी मनोरञ्जनी इत्यर्थः सा सेवा, सा च वाक्यविशेषतः प्रभोर्वाक्यविशेषात् ग्राह्या अनुमेया, विद्वान् जनः तद्द्वारेण प्रभोर्वाक्यविशेषरूपोपायेन पार्थिवम् आश्रयेत् अन्यथा अन्येन प्रकारेण न॥ ४७॥

य इति। यः यस्य गुणान् भावानित्यर्थः न वेत्ति, स पण्डितश्चेत् तम् अविदितभावमिति भावः प्रभुं न सेवेत नाश्रयेत्। हि यतः सुकृष्टात् ऊषरात् क्षारभूमेरिव तस्मात् प्रभुसेवनात् किञ्चित् फलं न भवतीति शेषः॥ ४८॥

द्रव्येति। सेव्यस्य सेवनीयस्य ये गुणाः दयादाक्षिण्यादयः तैरन्वितः युक्तः प्रभुः द्रव्यप्रकृतिहीनोऽपि धनजनरहितोऽपि सेव्यः। यतः कालान्तरादपि तस्मात् प्रभोः आजीवनं जीवनोपायरूपं फलं भवति॥ ४९॥

न त्वेवानात्मसम्पन्नाद्वृत्तिमीहेत पण्डितः ॥ ५० ॥
सेवकः स्वामिनं द्वेष्टि कृपणं परुषाक्षरम्।
आत्मानं किं स न द्वेष्टि सेव्यासेव्यं न वेत्ति यः ॥ ५१ ॥
यमाश्रित्य न विश्रामं क्षुधार्त्ता यान्ति सेवकाः।
सोऽर्कवन्नृपतिस्त्याज्यः सदा पुष्पफलोऽपि सन् ॥ ५२ ॥
राजमातरि देव्यां च कुमारे मुख्यमन्त्रिणि।
पुरोहिते प्रतीहारे सदा वर्त्तेत राजवत् ॥ ५३ ॥
जीवेति प्रब्रुवन् प्रोक्तः कृत्याकृत्यविचक्षणः।
करोति निर्विकल्पं यः स भवेद्राजवल्लभः ॥ ५४ ॥

---

अपीति। क्षुधा परिगतः क्षुधितः अतएव शुष्यन् आहाराभावेन शोषं गच्छन् अपि स्थाणुवत् शाखापत्रादिरहितशुष्कतरुवत् आसीनः उपविष्टः तिष्ठेदिति शेषः। पण्डितः प्राज्ञो जनः अनात्मसम्पन्नात् आत्मानात्मविवेकशून्यात् प्रभोरिति शेषः। वृत्तिं जीविकां न तु ईहेत चेष्टेत लब्धुमिति शेषः ॥ ५० ॥

सेवक इति। सेवकः भृत्यः कृपणं स्वामिनं परुषाक्षरं यथा तथा द्वेष्टि निन्दति, किन्तु स आत्मानं किं कथं न द्वेष्टि? यः सेव्यासेव्यं न वेत्ति न जानाति सेव्यासेव्यविवेकपूर्वकमेव सेवाप्रवृत्तिरुचिता तदविवेकेन सेवाप्रवृत्तौ स्वस्यैव निन्दा उचिता भावः ॥ ५१ ॥

यमिति। सेवकाः भृत्याः यं प्रभुमाश्रित्य क्षुधार्त्ताः सन्तः विश्रामं न यान्ति, उदरभरणं विना अविश्रामं प्रभुकार्य्यं कुर्वन्तीत्यर्थः सः नृपतिः सदा पुष्पफलः धनजनसम्पन्नोऽपीति भावः सन् अर्कवत् तदाख्यवृक्ष इव (आकन्देति भाषा) त्याज्यः यथा अर्कवृक्षः सदा पुष्पफलसमन्वितोऽपि लोकैर्नाद्रियते तथा तादृशः प्रभुः न सेव्यते इति भावः ॥ ५२ ॥

साम्प्रतं राजनि सेव्ये तत्परिजनानामपि सेव्यत्वमाह राजेति। राजमातरि, देव्यां राजमहिष्यां कुमारे राजपुत्रे मुख्यमन्त्रिणि प्रधानसचिवे पुरोहिते धर्माध्यक्षे तथा प्रतीहारे दौवारिके सदा राजवत् वर्त्तेत विशिष्टसम्माननां कुर्य्यात् इत्यर्थः ॥ ५३ ॥

जीवेति। यः कृत्याकृत्यविचक्षणः कार्य्याकार्य्यज्ञः सन् प्रोक्तः आज्ञप्तः जीव आयुष्मान् भव (जो हुकुम इति हिन्दीभाषा) प्रब्रुवन् वदन् निर्विकल्पम् अवि-

प्रभुप्रसादजं वित्तं सुप्राप्तं यो निवेदयेत्।
वस्त्राद्यञ्च दधात्यङ्गे स भवेद्राजवल्लभः ॥ ५५ ॥
अन्तःपुरचरैः सार्द्धं यो न मन्त्रं समाचरेत्।
न कलत्रैर्नरेन्द्रस्य स भवेद्राजवल्लभः ॥ ५६ ॥
द्यूतं यो यमदूताभं हालां हालाहलोपमाम्।
पश्येद्दारान् वृथाकारान् स भवेद्राजवल्लभः ॥ ५७ ॥
युद्धकालेऽग्रगो यः स्यात्सदा पृष्ठानुगः पुरे।
प्रभोर्द्वाराश्रितो हर्म्ये स भवेद्राजवल्लभः ॥ ५८ ॥
सम्मतोऽहं विभोर्नित्यमिति मत्वा व्यतिक्रमेत्।
कृच्छ्रेष्वपि न मर्य्यादां स भवेद्राजवल्लभः ॥ ५९ ॥

---

चारं यथा तथा करोति राजाज्ञां प्रतिपालयति स राजवल्लभः राजप्रियो भवेत् ॥ ५४ ॥

प्रभ्विति। यः प्रभोः प्रसादात् जातम् अनुग्रहलब्धमित्यर्थः वित्तं धनं सुप्राप्तं यथेष्टं प्राप्तमिति निवेदयेत् ससन्तोषं प्रकाशयेदित्यर्थः तथा वस्त्राद्यं वसनाभरणादिकं प्रभुप्रसादलब्धमिति शेषः अङ्गे दधाति स राजवल्लभः भवेत् ॥ ५५ ॥

अन्तरिति। यः नरेन्द्रस्य नृपस्य अन्तःपुरचरैः परिजनैः सार्द्धं मन्त्रं न समाचरेत् तथा नरेन्द्रस्य कलत्रैः भार्य्याभिः सार्द्धं प्रशक्तिमिति शेषः न समाचरेत् स राजवल्लभो भवेत् ॥ ५६ ॥

द्यूतमिति। यः द्यूतम् अप्राणिवस्तुभिः क्रीड़नम् अप्राणिभिः यत् क्रीड़ते तल्लोके द्यूतमुच्यते इति स्मरणात्। यमदूताभं शमनकिङ्करसदृशं हालां सुरां हालाहलोपमां कालकूटसदृशीं तथा दारान् स्त्रियः वृथाकारान् कुत्सिताकृतीरित्यर्थः पश्येत् द्यूतमद्याङ्गनासु न प्रसज्येदित्यर्थः स राजवल्लभो भवेत् ॥ ५७ ॥

युद्धेति। यः युद्धकाले प्रभोरिति सर्वत्र सम्बध्यते। अग्रगः अग्रगामी, पुरे नगरे सदा पृष्ठानुगः पार्श्वचरः तथा हर्म्ये राजभवने, द्वाराश्रितः द्वारस्थः आज्ञापालनार्थमिति भावः स राजवल्लभो भवेत् ॥ ५८ ॥

सम्मत इति। अहं विभोः नित्यं सततं सम्मतः अभिमतः प्रिय इति यावत् इति मत्वा यः कृच्छ्रेष्वपि कष्टेष्वपि मर्य्यादां स्थितिं सत्कर्त्तव्यमिति यावत् न व्यतिक्रमेत् न उल्लङ्घयेत् स राजवल्लभो भवेत् ॥ ५९ ॥

द्वेषिद्वेषपरो नित्यमिष्टानामिष्टकर्मकृत् ।
यो नरो नरनाथस्य स भवेद्राजवल्लभः ॥ ६० ॥
प्रोक्तः प्रत्युत्तरं नाह विरुद्धं प्रभुणा च यः ।
न समीपे हसत्युच्चैः स भवेद्राजवल्लभः ॥ ६१ ॥
यो रणं शरणं तद्वन्मन्यते भयवर्जितः ।
प्रवासं स्वपुरावासं स भवेद्राजवल्लभः ॥ ६२ ॥
न कुर्य्यान्नरनाथस्य योषिद्भिः सह सङ्गतिम् ।
न निन्दां न विवादं च स भवेद्राजवल्लभः ॥ ६३ ॥

करटक आह । अथ भवान् तत्र गत्वा किं तावत् प्रथमं वक्ष्यति तत् तावदुच्यताम् । दमनक आह ।

उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते ।
सुवृष्टिगुणसम्पन्नाद्बीजाद्बीजमिवापरम् ॥ ६४ ॥
अपायसन्दर्शनजां विपत्तिमुपायसन्दर्शनजाञ्च सिद्धिम् ।
मेधाविनो नीतिगुणप्रयुक्तां पुरःस्फुरन्तीमिव वर्णयन्ति ॥६५॥

---

द्वेषीति । यः नरः नरनाथस्य राज्ञः द्वेषिषु शत्रुषु द्वेषपरः तथा इष्टानां प्रियाणां नित्यं इष्टकर्मकृत् प्रियकारी स राजवल्लभो भवेत् ॥ ६० ॥

प्रोक्त इति । यः प्रभुणा प्रोक्तः विरुद्धं प्रत्युत्तरं नाह न ब्रवीति, तथा समीपे उच्चैः न हसति स राजवल्लभो भवेत् ॥ ६१ ॥

य इति । यः भयवर्जितः सन् रणं युद्धं शरणं गृहं तद्वत् तथा प्रवासं विदेशवासं स्वपुरावासं मन्यते स राजवल्लभो भवेत् ॥ ६२ ॥

नेति । यः नरनाथस्य योषिद्भिः स्त्रीभिः सह सङ्गतिं प्रसक्तिं न, निन्दां न, विवादञ्च न कुर्य्यात् स राजवल्लभो भवेत् ॥ ६३ ॥

उत्तरादिति । उत्तरादुत्तरम् उत्तरोत्तरं वदतां कथयतां जनानां सुवृष्टिरेव गुणः तेन सम्पन्नात् युक्तात् बीजात् अपरं बीजमिव वाक्यं सम्प्रजायते कथां कथयत एव क्रमेण सद्वचनं निःसरतीति भावः ॥ ६४ ॥

अपायेति । मेधाविनो बुद्धिमन्तो जनाः नीतिगुणप्रयुक्तां नीतेः पुरुषदुर्नय-सुनयोभयरूपाया इति भावः । गुणेन प्रभावेण प्रयुक्तां विहिताम् अपायसन्दर्शनजां दुर्लक्षणदर्शनानुमितामिति यावत् विपत्तिम्, उपायसन्दर्शनजां सुलक्षणदर्शनानु-

एकेषां वाचि शुकवदन्येषां हृदि मूकवत् ।
हृदि वाचि तथान्येषां वल्गु वल्गन्ति सूक्तय: ॥ ६६ ॥

न च अहम् अप्राप्तकालं (र) वच्मे । आकर्णितं मया नीतिसारं पितु: पूर्वमुत्सङ्गं हि निषेवता (ल) ।

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बह्ववज्ञानमपमानञ्च पुष्कलम् ॥ ६७ ॥

करटक आह ।

दुराराध्या हि राजान: पर्वता इव सर्वदा ।
व्यालाकीर्णा: सुविषमा: कठिना दुष्टसेविता: ॥ ६८ ॥

तथा च । भोगिन: कञ्चुकाविष्टा: कुटिला: क्रूरचेष्टिता: ।
सुदुष्टा मन्त्रसाध्याश्च राजान: पन्नगा इव ॥ ६९ ॥

---

मितां सिद्धिं फललाभञ्च पुर: अग्रत: स्फुरन्तीमिव प्रकाशमानामिव वर्णयन्ति कीर्त्तयन्ति । उपजातिवृत्तम् ॥ ६५ ॥

एकेषामिति । एकेषां जनानां वाचि शुकवत् शुकवचने इव माधुर्य्यमस्तीति शेष: परं हृदये तु कूटतेति भाव: । अन्येषां हृदि मूकवत् वाक्यमापातती दु:श्रवं हृदयन्तु कापट्यशून्यमिति भाव: । अन्येषां सूक्तय: सुवचनानि हृदि तथा वाचि वल्गु, सारवत्त्वां वल्गन्ति प्रकटयन्ति । वाङ्माधुर्य्यं हृदयाकापट्यञ्च अस्ति इति भाव: ॥ ६६ ॥

(र) अप्राप्तकालम् असमयोचितमित्यर्थ: ।

(ल) निषेवता अधितिष्ठता ।

अप्राप्तेति । अप्राप्तकालं वचनं ब्रुवन् वदन् बृहस्पतिरपि बहु अवज्ञां पुष्कलं प्रभूतम् अपमानं तिरस्कारञ्च लभते ॥ ६७ ॥

दुराराध्या इति । व्यालै: हिंस्रजनै: श्वापदैश्च आकीर्णा: परिवृता: सङ्कुलाश्च सुविषमा दारुणा: उन्नतानताश्च कठिना निर्दया: पाषाणप्रकृतित्वात् निविड़ाश्च दुष्टै: दुर्जनै: विषधरादिभिश्च सेविता: अनुगता: अधिष्ठिताश्च राजान: पर्वता इव सर्वदा सततं दुराराध्या: दु:सेव्या हि शब्दोऽवधारणे । राजसेवा अतिदुष्करेति भाव: ॥ ६८ ॥

भोगिन इति । भोगिन: सुखभोगरता: फणवन्तश्च भोग: सुखे स्त्र्यादिभृताव-हेश्च फणकाययोरित्यमर: । कञ्चुकाविष्टा: वर्मधारिण: निर्मोकवन्तश्च कुटिला:

द्विजिह्वाः क्रूरकर्माणोऽनिष्टाश्छिद्रानुसारिणः।
दूरतोऽपि हि पश्यन्ति राजानो भुजगा इव ॥ ७० ॥
स्वल्पमप्यपकुर्वन्ति येऽभीष्टा हि महीपतेः।
ते वह्नाविव दह्यन्ते पतङ्गाः पापचेतसः ॥ ७१ ॥
दुरारोहं पदं राज्ञां सर्वलोकनमस्कृतम्।
स्वल्पेनाप्यपकारेण ब्राह्मण्यमिव दुष्यति ॥ ७२ ॥
दुराराध्याः श्रियो राज्ञां दुरापा दुष्परिग्रहाः।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्थिताः ॥ ७३ ॥

दमनक आह। सत्यमेतत्परं किन्तु,

---

कपटिनः वक्रगामिनश्च क्रूरं निष्ठुरं चेष्टितं क्रिया येषां तथोक्ताः सुदुष्टा दोषवन्तः उभयत्र समानमेतत् द्वयम्। राजानः पन्नगा इव भुजङ्गा इव मन्त्रसाध्याः मन्त्रेण मन्त्रपूर्वकचित्तानुवृत्त्या गारुडादिना च साध्याः वशीकार्य्याः ॥ ६८ ॥

द्विजिह्वा इति। द्विजिह्वाः द्वे जिह्वे येषां तथोक्ताः क्षणे क्षणे भिन्नवाच इति भावः अन्यत्र रसनाद्वयवन्तः क्रूरकर्माणः निष्ठुरव्यापाराः अनिष्ठाः निष्पत्तिरहिताः किमपि कार्य्यं निष्पाद्य प्रजा निरुद्वेगाः न कुर्वन्तीति भावः अन्यत्र अशीर्षाः असङ्ख्या इति यावत् निष्ठा निष्पत्तिनाशान्ता इत्यमरः। छिद्रानुसारिणः दोषानुसन्धायिनः अन्यत्र विलानुसारिणः राजानः भुजगा इव दूरतः दूरात् अपि पश्यन्ति स्वपरराष्ट्रकार्य्यं चारैरिति भावः चारैः पश्यन्ति राजान इति स्मरणात्। भुजगाश्च दूरादेव पश्यन्तः वेगेन आगत्य जनं दंशन्तीति प्रसिद्धिः ॥ ७० ॥

स्वल्पमिति। ये अभीष्टा वयं महीपतेरिति कृत्वेति भावः महीपतेः स्वल्पमपि अपकुर्वन्ति ते पापचेतसः पापात्मानः पतङ्गा वह्नौ इव दह्यन्ते कर्मकर्त्तरि लट् ॥ ७१ ॥

दुरारोहमिति। दुरारोहम् आरोढमशक्यं दुष्प्रापमित्यर्थः अतएव सर्वलोकनमस्कृतं सर्वलोकवन्द्यं राज्ञां पदं ब्राह्मण्यमिव स्वल्पेनापि अपकारेण अत्याचारेण दुष्यति। उपमालङ्कारः ॥ ७२ ॥

दुराराध्या इति। राज्ञां दुराराध्याः दुःसेव्याः अतएव दुरापाः दुर्लभाः दुष्परिग्रहाः ग्रहीतुमशक्याः अरक्ष्या इत्यर्थः श्रियः आधारे आपः जलानीव आत्मनि यत्नेन संस्थिताः सावधानं लालिता इत्यर्थः चिरं तिष्ठन्ति स्वल्पेनापि प्रमादेन नश्यन्तीति भावः। उपमालङ्कारः ॥ ७३ ॥

यस्य यस्य हि यो भावस्तेन तेन समाचरेत्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ७४ ॥
भर्त्तुश्चिन्तानुवर्त्तित्वं सुवृत्तं चानुजीविनाम्।
राक्षसाश्चापि गृह्यन्ते नित्यं छन्दानुवर्त्तिभिः ॥ ७५ ॥
सरुषि नृपे स्तुतिवचनं तदभिमते प्रेम तद्द्विषि द्वेषः।
तद्दानस्य च शंसा अमन्त्रतन्त्रं वशीकरणम् ॥ ७६ ॥

करटक आह। यद्येवमभिमतं (व) तर्हि शिवास्ते पन्थानः सन्तु। यथाभिलषितम् अनुष्ठीयताम्। सोऽपि प्रणम्य पिङ्गलकाभिमुखं प्रतस्थे। अथ आगच्छन्तं दमनकमालोक्य पिङ्गलको द्वाःस्थमब्रवीत्। अपसार्य्यतां (श) वेत्रलता। अयमस्माकं चिरन्तनो मन्त्रिपुत्रो दमनकोऽव्याहतप्रवेशः। (ष) तत्प्रवेश्यतां द्वितीयमण्डलभागीति (स)। स आह यथा

---

यस्येति। यस्य यस्य जनस्य यो भावः आशयः तेन तेन भावेन तं तमित्यध्याहार्य्य समाचरेत् सेवेत। मेधावी बुद्धिमान् जनः अनुप्रविश्य प्रभोराशयं बुद्धा क्षिप्रं शीघ्रं तत्तदभिमताचरणेन तम् आत्मवशं नयेत् कुर्य्यात् ॥ ७४ ॥

भर्त्तुरिति। अनुजीविनां भृत्यानां भर्त्तुः स्वामिनः चिन्तानुवर्त्तित्वं चिन्तितानुसारित्वं चित्तानुवर्त्तित्वमिति वा पाठः। अनुजीविनां सुवृत्तं सुशीलञ्च आवश्यकमिति शेषः। नित्यं सततं छन्दानुवर्त्तिभिः आशयानुगामिभिः जनैः राक्षसाश्चापि गृह्यन्ते वशीक्रियन्ते ॥ ७५ ॥

सरुषीति। नृपे सरुषि कुपिते इत्यर्थः स्तुतिवचनं स्तुत्या कोपशमनमित्यर्थः तस्य नृपस्य अभिमते सुहृदि प्रेम प्रणयः, तस्य नृपस्य द्विषि शत्रौ द्वेषः, तस्य नृपस्य यत् दानं वदान्यता तस्य शंसा कीर्त्तनञ्च एतत् अमन्त्रतन्त्रं ;मन्त्रतन्त्रवर्जितं वशीकरणं नृपस्येति शेषः तद्वशीकरणे स्तुत्यादय एव हेतव इति भावः ॥ ७६ ॥

(व) एवं राजवशीकरणमित्यर्थः अभिमतं प्रियम्। शिवाः शुभाः।

(श) अपसार्य्यतां निवर्त्त्यतां मा प्रदर्श्यतामिति भावः।

(ष) अव्याहतप्रवेशः अनिषिद्धप्रवेशः अस्य प्रवेशे निषेधो नास्तीत्यर्थः।

(स) द्वितीयेति। मन्त्रिण एव प्रथममण्डलमधिकुर्वन्ति अयन्तु तत् पुत्रतया द्वितीयमण्डलाधिकारीत्यर्थः मण्डलम् अनुजीविनामासनभेद इति बोध्यम्।

अवादीत् भवानिति, अथोपसृत्य दमनको निर्दिष्टे आसने पिङ्गलकं प्रणम्य प्राप्तानुज्ञ उपविष्टः। स तु तस्य नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच। (ङ) अपि (च) शिवं भवतः? कस्माच्चिरात् दृष्टोऽसि? दमनक आह। न किञ्चिद् (क) देवपादानामस्माभिः प्रयोजनम्। परं भवतां प्राप्तकालं (ख) वक्तव्यं यत उत्तममध्यमाधमैः सर्वैरपि राज्ञां प्रयोजनम्। उक्तञ्च।

दन्तस्य निष्कोषणकेन नित्यं कर्णस्य कण्डूयनकेन वापि।
तृणेन कार्य्यं भवतीश्वराणां किमङ्ग! वाग्घस्तवता नरेण ॥७७॥

तथा वयं देवपादानाम् अन्वयागता (ग) भृत्या आपत्स्वपि पृष्ठगामिनो यद्यपि स्वमधिकारं न लभामहे तथापि देवपादानामेतद् युक्तं (घ) न भवति। उक्तञ्च,

---

(ङ) स पिङ्गलकः। तस्य दमनकस्य उपरि अङ्गस्येति शेषः नखाः कुलिशानीव तैः अलङ्कृतम्। मानपुरःसरम् अभिमानपूर्वम्।

(च) अपीति प्रश्नसूचकम् अव्ययम्।

(क) न किञ्चिदिति। अस्मासु देवपादानां प्रयोजनाभावात् चिरात् दर्शनमिति भावः।

(ख) प्राप्तकालं कालोचितम्।

दन्तस्येति। दन्तस्य निष्कोषणकेन दन्तान्तःप्रविष्टवस्तुनिःसारणेन दन्तघर्षकेण वा तथा कर्णस्य कण्डूयनकेन कण्डूयनकारिणा तृणेनापि नित्यं सततम् ईश्वराणां प्रभूणां कार्य्यं प्रयोजनं भवति। अङ्गेति सम्बोधनसूचकमव्ययं वाग्घस्तवता वचनकरविशिष्टेन नरेण मनुष्येण किम्? मनुष्या हि उत्तमा अधमा वा वचसा करेण च सततमुपकुर्वन्ति तस्मात् तृणापेक्षया एषां प्रयोजनमवश्यं स्वीकार्य्यमिति भावः। अर्थापत्तिरलङ्कारः। तदुक्तं दर्पणे। दण्डापूपिकन्यायादर्थागमोऽर्थापत्तिरिष्यते इति। उपजाति वृत्तम् ॥ ७७ ॥

(ग) अन्वयागताः कुलक्रमागताः।

(घ) एतत् सर्वथा निराकरणमिति भावः।

स्थानेष्वेव नियोक्तव्या भृत्याश्चाभरणानि च।
न हि चूड़ामणिः पादे प्रभवामीति बध्यते ॥ ७८ ॥

यतः, अनभिज्ञो गुणानां यो न भृत्यैरनुगम्यते।
धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि भूपतिः ॥ ७९ ॥

उक्तञ्च, असमैः समीयमानः समैश्च परिहीयमाणसत्कारः।
धुरि यो न युज्यमानस्त्रिभिरर्थपतिं त्यजति भृत्यः ॥८०॥

यच्च अविवेकितया राजा भृत्यानुत्तमपदयोग्यान् हीनाधमस्थाने नियोजयति न ते तत्रैव तिष्ठन्ति न भूपतेर्दोषो न तेषाम्। (ङ) उक्तञ्च,

कनकभूषणसंग्रहणोचितो यदि मणिस्त्रपुणि प्रतिबध्यते।
न स विरौति न चापि स शोभते भवति योजयितुर्वचनीयता॥८१

---

स्थानेष्विति। भृत्याश्च आभरणानि च स्थानेषु योग्येष्विति शेषः। एव नियोक्तव्याः धार्य्याः। प्रभवामि प्रभुरहमिति मत्वेति शेषः। चूड़ामणिः शिरोरत्नं माननीयो जनश्चेति ध्वनिः। पादे चरणे न हि बध्यते धार्य्यते केनापीति शेषः। यदि चाहं स्वाधिकारं न लभे तथापि सर्वथा सत्परित्यागो नोचित इति भावः। अत्र प्रस्तुतस्य भृत्यस्य अप्रस्तुतस्य चाभरणस्य एकनियोजनक्रियासम्बन्धात् दीपकालङ्कारः विशेषेण च सामान्यसमर्थनरूपोऽर्थान्तरन्यासश्च। तयोश्च परस्परमनपेक्षया अवस्थानात् संसृष्टिः। तदुक्तं दर्पणे। मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते इति ॥ ७८ ॥

अनभिज्ञ इति। यः भूपतिः धनाढ्योऽपि कुलीनोऽपि क्रमायातोऽपि गुणानाम् अनभिज्ञः अगुणज्ञ इत्यर्थः, स भृत्यैः न अनुगम्यते न सेव्यते गुणाग्राहित्वात् तत्सेवनमकिञ्चित्करमिति भावः ॥ ७९ ॥

असमैरिति। यः भृत्यः असमैः अतुल्यैः भृत्यैरिति भावः। समीयमानः समीक्रियमाणः, समैः तुल्यैश्च भृत्यैः परिहीयमाणः निराक्रियमाणः सत्कारः यस्य तादृशः तथा धुरि कार्य्यभारे न नियुज्यमानः स त्रिभिरेतैः दोषैरिति शेषः अर्थपतिं प्रभुं त्यजति। आर्य्यावृत्तम् ॥ ८० ॥

(ङ) ते हीनाधमस्थाननियोजिता भृत्या इत्यर्थः तत्रैव प्रभुनिर्दिष्टे स्थाने इत्यर्थः न तिष्ठन्ति इति न अपि तु तिष्ठन्त्येव परं तत्र भूपतेः प्रभोरेव दोषः।

कनकेति। यदि कनकभूषणे स्वर्णालङ्कारे यत् संग्रहणं संरोपणं तत्र

यच्च स्वामी एवं वदति "चिराद् दृश्यते" तदपि श्रूयताम्।

सव्यदक्षिणयोर्यत्र विशेषो नास्ति हस्तयोः।
कस्तत्र क्षणमप्यार्य्यो विद्यमानगतिर्वसेत्॥ ८२॥
काचे मणिर्मणौ काचो येषां बुद्धिर्विकल्पते।
न तेषां सन्निधौ भृत्यो नाममात्रोऽपि तिष्ठति॥ ८३॥

परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि।
आभीरदेशे किल चन्द्रकान्तं त्रिभिर्वराटैर्विपणन्ति गोपाः॥८४॥

लोहिताख्यस्य च मणेः पद्मरागस्य चान्तरम्।
यत्र नास्ति कथं तत्र क्रियते रत्नविक्रयः?॥ ८५॥
निर्विशेषं यदा स्वामी समं भृत्येषु वर्त्तते।
तत्रोद्यमसमर्थानामुत्साहः परिहीयते॥ ८६॥

---

उचितः योग्यः मणिः रत्नं त्रपुणि निकृष्टधातुविशेषे प्रतिबध्यते संरोप्यते, तदा स मणिः न विरौति न रोदिति, सः नच शोभते, किन्तु योजयितुः तथा कर्त्तुरित्यर्थः वचनीयता निन्द्यता योग्यायोग्यविचारी नास्तीत्येवं रूपा भवति। द्रुतविलम्बितं वृत्तं, द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात्॥ ८१॥

सव्येति। यत्र सव्यदक्षिणयोः वामदक्षिणयोः हस्तयोः विशेषः भेदः नास्ति, तत्र कः आर्य्यः साधुः विद्यमानगतिः उपायवान् सन् क्षणमपि वसेत् न कोऽपि इत्यर्थः निरुपायस्य अवश्यं वस्तव्यमेवेति ध्वनिः॥ ८२॥

काचे इति। येषां काचे मणिः, मणौ काचः इत्येवं प्रकारा बुद्धिः विकल्पते संशेते उत्कर्षापकर्षज्ञानं नास्तीति भावः तेषां सन्निधौ भृत्यः नाममात्रोऽपि न तिष्ठति स्वयं भृत्यस्य का कथा, तस्य नामापि तादृशप्रभुसन्निधौ न तिष्ठतीति फलितार्थः॥ ८३॥

परीक्षका इति। यत्र देशे परीक्षकाः न सन्ति, तत्र समुद्रजानि रत्नानि न अर्घन्ति न मूल्यमर्हन्तीत्यर्थः। किलेति प्रसिद्धौ आभीरदेशे गोपजनपदे गोपाः त्रिभिः वराटैः चन्द्रकान्तं मणिं विपणन्ति क्रीणन्ति वा विक्रीणन्ति। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। उपजातिवृत्तम्॥ ८४॥

लोहिताख्यस्येति। यत्र देशे लोहिताख्यस्य लोहितनाम्नः पद्मरागस्य च मणेः अन्तरं प्रभेदः नास्ति तत्र कथं रत्नविक्रयः क्रियते?॥ ८५॥

निर्विशेषमिति। यदा स्वामी भृत्येषु समं युगपत् निर्विशेषं वर्त्तते तत्र

न विना पार्थिवो भृत्यैर्न भृत्याः पार्थिवं विना।
तेषां च व्यवहारोऽयं परस्परनिबन्धनः॥ ८७॥
भृत्यैर्विना स्वयं राजा लोकानुग्रहकारिभिः।
मयूखैरिव दीप्तांशुस्तेजस्व्यपि न शोभते॥ ८८॥
अरैः सन्धार्यते नाभिर्नाभौ चाराः प्रतिष्ठिताः।
स्वामिसेवकयोरेवं वृत्तिचक्रं प्रवर्त्तते॥ ८९॥
शिरसा विधृता नित्यं स्नेहेन परिपालिताः।
केशा अपि विरज्यन्ते निःस्नेहाः किं न सेवकाः?॥९०॥
राजा तुष्टो हि भृत्यानामर्थमात्रं प्रयच्छति।
ते तु सम्मानमात्रेण प्राणैरप्युपकुर्वते॥ ९१॥

---

उद्यमसमर्थानाम् उत्साहिनां कार्य्यक्षमाणामित्यर्थः उत्साहः परिहीयते नश्यति॥ ८६॥

नेति। पार्थिवः भृत्यैः विना न तिष्ठेदिति शेषः, भृत्याश्च पार्थिवं विना न तिष्ठेयुरिति शेषः तेषां प्रभुभृत्यानाम् अयं व्यवहारः स्वामिभृत्यभाव इत्यर्थः परस्परनिबन्धनः अन्योन्याश्रय इत्यर्थः॥ ८७॥

भृत्यैरिति। राजा स्वयं तेजस्वी अपि दीप्तांशुः सूर्य्य इव लोकानुग्रहकारिभिः जगद्रक्षिभिः राज्यरक्षिभिश्च मयूखैरिव भृत्यैः विना न शोभते। उपमालङ्कारः॥ ८८॥

अरैरिति। अरैः चक्रस्य शाखारूपैः अवयवविशेषैः नाभिः चक्रमध्यवर्त्ती अवयवविशेषः सन्धार्य्यते, आश्रीयते, अराश्च नाभौ प्रतिष्ठिताः ग्रथिताः तिष्ठन्तीति शेषः अराः नाभिम् अवलम्बन्ते नाभिश्च अरानाश्रयति इत्यर्थः एवं स्वामिसेवकयोः प्रभुभृत्ययोः वृत्तिचक्रं स्थितिरूपं चक्रं प्रवर्त्तते स्वामी भृत्यानवलम्बते भृत्याश्च स्वामिनमाश्रयन्तीति भावः॥ ८९॥

शिरसेति। नित्यं शिरसा मस्तकेन विधृताः तथा स्नेहेन तैलेन परिपालिताः परिपोषिताः केशा अपि निःस्नेहाः तैलवर्जिता वा अयत्नीकृताश्चेत् विरज्यन्ते विकृतिं भजन्ते सेवकाः भृत्याः तथाभूताः किं न विरज्यन्ते इति शेषः अपितु विरज्यन्ते एव॥ ९०॥

राजेति। राजा तुष्टः सन् भृत्यानाम् अर्थमात्रं केवलं धनं हि निश्चितं प्रयच्छति ददाति, ते भृत्यास्तु सम्मानमात्रेण राजकृतसत्कारेणैव प्राणैः अपि उपकुर्वते उपकारं कुर्वन्ति॥ ९१॥

एवं ज्ञात्वा नरेन्द्रेण भृत्याः कार्य्या विचक्षणाः।
कुलीनाः शौर्य्यसंयुक्ताः शक्ता भक्ताः क्रमागताः॥ ९२॥
यः कृत्वा सुकृतं राज्ञो दुष्करं हितमुत्तमम्।
लज्जया वक्ति नो किञ्चित्तेन राजा सहायवान्॥ ९३॥
यस्मिन् कृत्यं समावेश्य निर्विशङ्केन चेतसा।
आस्यते सेवकः स स्यात्कलत्रमिव चापरम्॥ ९४॥
योऽनाहूतः समभ्येति द्वारि तिष्ठति सर्वदा।
पृष्टः सत्यं मितं ब्रूते स भृत्योऽर्हो महीभुजाम्॥ ९५॥
अनादिष्टोऽपि भूपस्य दृष्ट्वा हानिकरञ्च यः।
यतते तस्य नाशाय स भृत्योऽर्हो महीभुजाम्॥ ९६॥
ताड़ितोऽपि दुरुक्तोऽपि दण्डितोऽपि महीभुजा।
यो न चिन्तयते पापं स भृत्योऽर्हो महीभुजाम्॥ ९७॥

---

एवमिति। नरेन्द्रेण राज्ञा एवं प्रभुभृत्यभावमिति भावः ज्ञात्वा विचक्षणाः कुलीनाः शौर्य्यसंयुक्ताः शक्ताः शक्तिमन्तः भक्ता अनुरक्ताः क्रमागताः कुलक्रमायाताः भृत्याः कार्य्याः रक्षणीया इत्यर्थः॥ ९२॥

य इति। यः राज्ञः दुष्करम अन्यदुःसाध्यम् उत्तमं हितं सुकृतं शोभनकार्य्यं कृत्वा लज्जया नो किञ्चित् कृतं मयेति शेषः इति वक्ति वदति, तेन भृत्येन राजा सयायवान् भवति॥ ९३॥

यस्मिन्निति। यस्मिन् जने कृत्यं कार्य्यं समावेश्य समर्प्य निर्विशङ्केन शङ्काशून्येन चेतसा आस्यते स्थीयते राज्ञेति शेषः। स सेवकः स्यात् अपरम् अन्यत् सर्वं कलत्रमिव भार्य्येव केवलं पोष्यमिति भावः॥ ९४॥

य इति। यः अनाहूतः सन् समभ्येति समीपे उपतिष्ठते इत्यर्थः, सर्वदा, द्वारि तिष्ठति, तथा पृष्टः सन् सत्यं मितं परिमितञ्च ब्रूते, स भृत्यः महीभुजां राज्ञाम् अर्हः योग्यः॥ ९५॥

अनादिष्ट इति। यः अनादिष्टोऽपि अनाज्ञप्तोऽपि भूपस्य राज्ञः हानिकरम् अनिष्टकरं विषयमिति शेषः दृष्ट्वा तस्य हानिकरस्य नाशाय यतते स भृत्यः महीभुजाम् अर्हः॥ ९६॥

ताड़ित इति। यः महीभुजा ताड़ितोऽपि दुरुक्तोऽपि दुर्वाक्यमुक्तोऽपि

न गर्वं कुरुते माने नापमाने च तप्यते।
स्वाकारं रचयेद् यस्तु स भृत्योऽर्हो महीभुजाम् ॥ ९८ ॥
न क्षुधा पीड्यते यस्तु निद्रया न कदाचन।
न च शीतातपाद्यैश्च स भृत्योऽर्हो महीभुजाम् ॥ ९९ ॥
श्रुत्वा सांग्रामिकीं वार्त्तां भविष्यां स्वामिनं प्रति।
प्रसन्नास्यो भवेद्यस्तु स भृत्योऽर्हो महीभुजाम् ॥ १०० ॥
सीमा वृद्धिं समायाति शुक्लपक्ष इवोडुराट्।
नियोगसंस्थिते यस्मिन् स भृत्योऽर्हो महीभुजाम् ॥ १०१ ॥
सीमा सङ्कोचमायाति वह्नौ चर्म इवाहितम्।
स्थिते यस्मिन् स तु त्याज्यो भृत्यो राज्यं समीहता ॥ १०२ ॥

तथा शृगालोऽयमिति मन्यमानेन ममोपरि स्वामिना यदि अवज्ञा क्रियते तदपि अयुक्तम्। उक्तं च यतः,

---

दण्डितोऽपि कृतदण्डोऽपि तस्य महीभुजः पापम् अनिष्टं न चिन्तयते, स भृत्यः महीभुजाम् अर्हः ॥ ९७ ॥

नेति। यस्तु माने सम्मानलाभे गर्वं न कुरुते, अपमाने च तिरस्कारे च न तप्यते इत्थं स्वाकारं स्वस्य आकारं मानापमानयोर्भावं रचयेत् गोपायेत् स भृत्यः महीभुजाम् अर्हः ॥ ९८ ॥

नेति। यस्तु कदाचन क्षुधा न पीड्यते निद्रया न पीड्यते, शीतातपाद्यैश्च न पीड्यते क्षुधानिद्राशीतातपादिजनितं खेदं सहते इत्यर्थः स भृत्यः महीभुजाम् अर्हः ॥ ९९ ॥

श्रुत्वेति। यस्तु स्वामिनं प्रति भविष्यां भाविनीं सांग्रामिकीं वार्त्तां युद्धवार्त्तामित्यर्थः श्रुत्वा प्रसन्नास्यः प्रसन्नमुखः योद्धुमुत्साहवानिति भावः भवेत्, स भृत्यः महीभुजाम् अर्हः ॥ १०० ॥

सीमेति। यस्मिन् नियोगसंस्थिते कर्म कुर्वतीत्यर्थः शुक्लपक्षे उडुराडिव चन्द्र इव प्रभोः सीमा वृद्धिम् अधिकारवृद्धिं समायाति प्राप्नोति स भृत्यः महीभुजाम् अर्हः ॥ १०१ ॥

सीमेति। यस्मिन् स्थिते कर्म कुर्वतीति भावः वह्नौ आहितम् अर्पितं चर्म इव सीमा अधिकारः सङ्कोचं ह्रासमित्यर्थः आयाति गच्छति, राज्यं समीहता राज्यवृद्धिकामिनेत्यर्थः राज्ञा स भृत्यः त्याज्यः ॥ १०२ ॥

कौशेयं कृमिजं सुवर्णमुपलाद् दूर्वापि गोरोमतः
पङ्कात्तामरसं शशाङ्क उदधेरिन्दीवरं गोमयात्।
काष्ठादग्निरहेः फणादपि मणिर्गोपित्ततो रोचना
प्राकाश्यं स्वगुणोदयेन गुणिनो गच्छन्ति किं जन्मना ॥१०३॥
मूषिका गृहजातापि हन्तव्या स्वापकारिणी।
भक्ष्यप्रदानैर्मार्जारो हितकृत् प्रार्थ्यते जनैः ॥ १०४ ॥
एरण्डभिण्डार्कनलैः प्रभूतैरपि सञ्चितैः।
दारुकृत्यं यथा नास्ति तथैवाज्ञैः प्रयोजनम् ॥ १०५ ॥
किं भक्तेनासमर्थेन किं शक्तेनापकारिणा?।
भक्तं शक्तं च मां राजन्! नावज्ञातुं त्वमर्हसि ॥ १०६ ॥

---

कौशेयमिति। कौशेयं पट्टवसनं कृमिजं कीटविशेषाज्जातमित्यर्थः कौशेयं कृमिकोशोत्थमित्यमरः। सुवर्णम् उपलात् पाषाणात् पर्वतखनेरित्यर्थः जातमिति सर्वत्रानुषज्यते। दूर्वापि गोरोमतः गवां रोमभ्य इत्यर्थः। प्रसिद्धिरियमिति बोध्यम्। तामरसं रक्तोत्पलं पङ्कात्। शशाङ्कश्चन्द्र उदधेः समुद्रात् जात इति शेषः। इन्दीवरं नीलोत्पलं गोमयात् जातमिति शेषः। अग्निः काष्ठात् जात इति शेषः मणिः अहेः सर्पस्य फणात् जात इति शेषः रोचना गोपित्ततः गवां पित्तात् जातेति शेषः। एते गुणिनः गुणवद्वस्तूनीत्यर्थः स्वगुणानामुदयेन प्राकाश्यं ख्यातिं गच्छन्ति जन्मना उत्पत्त्या किम्? नैवैते उत्पत्तितः उत्कर्षं लभन्ते इति भावः। शार्दूलविक्रीड़ितं वृत्तं सूर्य्याश्वैर्यदि मः सजौ सततगाः शार्दूलविक्रीड़ितमिति तल्लक्षणात् ॥ १०३ ॥

मूषिकेति। गृहजातापि मूषिका स्वस्य गृहिण इत्यर्थः अपकारिणी अनिष्टविधायिनी अतएव हन्तव्या विनाश्या। हितकृत् मार्जारः विड़ालः जनैः गृहिभिः भक्ष्यप्रदानैः भक्ष्यद्रव्याणां दानैः प्रार्थ्यते पाल्यते इत्यर्थः ॥ १०४ ॥

एरण्डेति। सञ्चितैः प्रभूतैः बहुभिरपि एरण्डभिण्डार्कनलैः एरण्डः भिण्डः अर्कः नलः एते असारवृक्षभेदाः तैः दारुकृत्यं काष्ठकार्य्यं यथा नास्ति, तथा बहुभिः अज्ञैः रचितैः प्रयोजनं नास्ति ॥ १०५ ॥

किमिति। असमर्थेन अक्षमेण भक्तेन अनुरक्तेन किम्, शक्तेन कार्य्यक्षमेण किन्तु अपकारिणा भृत्येनेति शेषः किम्? नास्त्येताभ्यां प्रयोजनमित्यर्थः, हे राजन्! त्वं भक्तम् अनुरक्तं शक्तं कार्य्यक्षमञ्च माम् अवज्ञातुं न अर्हसि ॥ १०६ ॥

पिङ्गलक आह। भवतु एवं तावत्। असमर्थः समर्थो वा चिरन्तनः त्वम् अस्माकं मन्त्रिपुत्रः तद्विश्रब्धं ब्रूहि यत्किञ्चिद्वक्तुकामः। दमनक आह। देव! विज्ञाप्यं किञ्चिदस्ति। पिङ्गलक आह। तन्निवेदय अभिप्रेतम्। सोऽब्रवीत्।

अपि स्वल्पतरं कार्य्यं यद्भवेत् पृथिवीपतेः।
तन्न वाच्यं सभामध्ये प्रोवाचेदं वृहस्पतिः ॥१०७॥

तत् ऐकान्तिके (क) मद्विज्ञाप्यमाकर्णयन्तु देवपादाः। यतः,

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णो स्थिरो भवेत्।
तस्मात्सर्वप्रयत्नेन षट्कर्णं वर्जयेत्सुधीः ॥ १०८ ॥

अथ पिङ्गलकाभिप्रायज्ञा (ख) व्याघ्रद्वीपिवृकपुरःसरा सर्वेऽपि तद्वचः समाकर्ण्य संसदि तत्क्षणादेव दूरीभूताः। ततश्च दमनक आह। उदकग्रहणार्थं प्रवृत्तस्य स्वामिनः किमिह निवृत्त्यावस्थानम्? पिङ्गलक आह सविलक्षस्मितम्। (ग) न किञ्चिदपि। सोऽब्रवीत्। देव! यदि अनाख्येयं (घ) तत्तिष्ठतु। उक्तञ्च।

---

अपीति। यत् स्वल्पतरमपि कार्य्यं भवेत् तत् पृथिवीपतेः सभामध्ये न वाच्यं इदं वृहस्पतिः उवाच ॥ १०७ ॥

(क) ऐकान्तिके विजने।

षड़िति। षट्कर्णः षड्भिः कर्णैः श्रूयमाण इत्यर्थः त्रयं गत इति भावः मन्त्रः भिद्यते भेदं गच्छति प्रकाश्यते इति भावः चतुष्कर्णः चतुर्भिः कर्णैः श्रूयमाणः द्विनिष्ठ इत्यर्थः मन्त्र; स्थिरः अप्रकाश्य इति भावः भवेत् तस्मात् सुधीः बुद्धिमान् नरः सर्वप्रयत्नेन षट्कर्णं वर्जयेत् त्यजेत्। षट्कर्णे मन्त्रे कार्य्यसिद्धिर्न भवेदिति भावः ॥ १०८ ॥

(ख)। पिङ्गलकस्य सिंहस्य अभिप्रायज्ञा भावविदः राजाभिप्रायं विदित्वेति भावः। व्याघ्रेति। व्याघ्रः वृहदाकारस्तदाख्यः श्वापदविशेषः। द्वीपी व्याघ्रविशेषः। वृकः क्षुद्रव्याघ्रविशेषः।

(ग) सविलक्षस्मितम् सलज्जमीषद्धास्यसहितम्।

(घ) अनाख्येयम् अवाच्यं गोप्यमिति यावत्।

दारेषु किञ्चित् स्वजनेषु किञ्चित् गोप्यं वयस्येषु सुतेषु किञ्चित्।
युक्तं न वा युक्तमिदं विचिन्त्य वदेद्विपश्चिन्महतोऽनुरोधात्॥१०९॥

तच्छ्रुत्वा पिङ्गलकश्चिन्तयामास। योग्योऽयं दृश्यते। [तत् कथयामि एतस्य अग्रे आत्मनोऽभिप्रायम्। उक्तञ्च,

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्त्तिनि कलत्रे।
स्वामिनि सौहृदयुक्ते निवेद्य दुःखं सुखी भवति॥११०॥

भो दमनक! शृणोषि शब्दं दूरात् महान्तम्। सोऽब्रवीत्। स्वामिन्! शृणोमि ततः किम्? पिङ्गलक आह भद्र! अहमस्मात् वनात् गन्तुमिच्छामि। दमनक आह कस्मात्? पिङ्गलक आह। यतोऽद्य अस्मद्वने किमपि अपूर्वं सत्त्वं (ङ) प्रविष्टं यस्य अयं महाशब्दः श्रूयते। तस्य च शब्दानुरूपेण पराक्रमेण भाव्यमिति। दमनक आह। यत् शब्दमात्रादपि भयमुपगतः स्वामी तदपि अयुक्तम्। उक्तञ्च,

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः।
पैशुन्याद्भिद्यते स्नेहो भिद्यते वाग्भिरातुरः॥१११॥

---

दारेष्विति। दारेषु स्त्रीषु किञ्चित् वस्तु गोप्यम् अप्रकाश्यमित्यर्थः सर्वं वस्तु दारेषु न प्रकाश्यमिति भावः। स्वजनेषु आत्मीयेषु किञ्चित् गोप्यं न हि सर्वं स्वजनेषु प्रकाश्यते इति भावः। वयस्येषु बन्धुषु सुतेषु पुत्रेषु च किञ्चित् गोप्यं वस्तु अस्ति यत् तेषु न प्रकाशनीयमिति भावः। किन्तु विपश्चित् विद्वान् जनः इदं युक्तं वा न युक्तं विचिन्त्य महतः अनुरोधात् महाकार्य्यवशादिति भावः वदेत् गोप्यमपीति भावः। उपजाति वृत्तम्॥१०९॥

सुहृदीति। निरन्तरचित्ते अभिन्नचेतसि सुहृदि मित्रे गुणवति भृत्ये अनुवर्त्तिनि भर्त्तृरते कलत्रे भार्य्यायां तथा सौहृदयुक्ते अनुरागिणि इत्यर्थः स्वामिनि दुःखं निवेद्य सुखी भवति लोक इति शेषः। आर्य्यावृत्तम्॥११०॥

(ङ) सत्त्वं प्राणिविशेषः।

अम्भसेति। सेतुः जलप्रतिरोधी मृत्कूट इत्यर्थः अम्भसा जलेन अतिप्रबलेन इति भावः तथा अरक्षितः प्रकाशित इति भावः मन्त्र अपि भिद्यते भेदं गच्छति। स्नेहः पैशुन्यात् दौर्जन्यात् भिद्यते दुर्जनं प्रति स्नेहो न तिष्ठतीत्यर्थः आतुरः

तन्न युक्तं स्वामिनः पूर्वोपार्जितं वनं त्यक्तुम्। यतो (च) भेरीवेणुवीणामृदङ्गतालपटहशङ्खकाहलादिभेदेन शब्दा अनेकविधा भवन्ति। तत् न केवलात् शब्दमात्रादपि भेतव्यम्। उक्तञ्च। अत्युत्कटे च रौद्रे च शत्रौ प्राप्ते न हीयते।
धैर्यं यस्य महीनाथो न स याति पराभवम्॥ ११२॥
दर्शितभयेऽपि धातरि धैर्यध्वंसो भवेन्न धीराणाम्।
शोषितसरसि निदाघे नितरामेवोद्धतः सिन्धुः॥ ११३॥
तथाच।
यस्य न विपदि विषादः सम्पदि हर्षो रणे न भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम्॥ ११४॥
तथाच। शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः॥११५॥

---

पीड़ितो जनः वाग्भिः कथाभिरेव इति अध्याहार्यं भिद्यते भेदं प्राप्नोति शुष्ककथाभिर्विरक्तो भवति इति भावः॥ १११॥

(च) भेरीति। भेर्यादयो वाद्यभेदाः तेषां शब्दाः ध्वनयः अनेकविधाः बहुप्रकाराः।

अत्युत्कटे इति। अत्युत्कटे अतिदारुणे रौद्रे भयानके च शत्रौ प्राप्ते आगते यस्य धैर्यं न हीयते न नश्यति स महीनाथः राजा पराभवं न याति न प्राप्नोति इत्यर्थः॥ ११२॥

दर्शितेति। धातरि विधातरि दैवे इति भावः दर्शितभयेऽपि भयं दर्शयति अपि इत्यर्थः प्रतिकूलेऽपीति भावः धीराणां धैर्यध्वंसः न भवेत्। तथाहि निदाघे ग्रीष्मे शोषितसरसि सरांसि शोषितवति इत्यर्थः सिन्धुः नदी सागरो वा नितराम् अतिमात्रमेव उद्धतः अतिप्रबलवेगेन वहति इति भावः। आर्यावृत्तम्॥ ११३॥

यस्येति। यस्य जनस्य विपदि न विषादः सम्पदि न हर्षः तथा रणे न भीरुत्वं स्यादिति शेषः। जननी माता भुवनत्रयतिलकं तं तादृशमित्यर्थः सुतं विरलम् अल्पं जनयति प्रसूते तादृशो जनोऽतिदुर्लभ इति भावः॥ ११४॥

शक्तीति। शक्तिवैकल्येन सामर्थ्याभावेन नम्रस्य निःसारत्वात् दुर्बलत्वात् स्थिरांशरहितत्वाच्च सारो बले स्थिरांशे चेत्यमरः। लघीयसः अतिलघोरित्यर्थः

अपिच । अन्यप्रतापमासाद्य यो दृढ़त्वं न गच्छति ।
जतुजाभरणस्येव रूपेणापि हि तस्य किम् ? ॥११६॥

तदेवं ज्ञात्वा स्वामिना धैर्य्यावष्टम्भः ( छ ) कार्य्यः । न शब्दमात्रात् भेतव्यम् । उक्तञ्च,

पूर्वमेव मया ज्ञातं पूर्णमेतद्धि मेदसा ।
अनुप्रविश्य विज्ञातं यावच्चर्म च दारु च ॥ ११७ ॥

पिङ्गलक आह । कथमेतत् ? सोऽब्रवीत् ।

## कथा २ ।

कश्चित् गोमायुर्नाम शृगालः क्षुत्क्षामकण्ठः इतस्ततः परिभ्रमन् वने सैन्यद्वयसंग्रामभूमिम् अपश्यत् । तस्याञ्च (ज) दुन्दुभेः पतितस्य वायुवशात् वल्लीशाखाग्रैः हन्यमानस्य शब्दमशृणोत् । अथ क्षुभितहृदयश्चिन्तयामास । अहो ! विनष्टोऽस्मि । तद्यावत् न अस्य प्रोच्चारितशब्दस्य दृष्टिगोचरे गच्छामि

---

मानहीनस्य अमाननीयस्य इत्यर्थः जन्मिनः देहिनः तृणस्य च गतिः समा तुल्या यथा निःसारत्वादियुतं तृणं लोकैः पदा विदल्यते तथा तादृशो मानवोऽपि लोकैः पराभूयते इति भावः । दीपकालङ्कारः ॥ ११५ ॥

अन्येति । यः अन्यस्य प्रतापं तेजः आसाद्य अपरतेजसा आक्रान्त इति भावः दृढत्वं धैर्य्यं न गच्छति, न प्राप्नोति जतुजाभरणस्येव जतुनिर्मितालङ्कारस्येव तस्य रूपेण सौन्दर्य्येणापि किम् ? न किमपि प्रयोजनमित्यर्थः जतुनिर्मितालङ्कारो हि अग्नितेजःसंस्रवेण आशु द्रवति, किन्तु वीरः पुमान् परधर्षणेनापि न सहसा पराभूयते यथाशक्ति स्वपराक्रममाविष्करोतीति भावः ॥ ११६ ॥

(छ) धैर्य्यावष्टम्भः धैर्य्यावलम्बनम् ।

पूर्वमिति । मया पूर्वमेतत् मेदसा वसाभिः पूर्णमेव ज्ञातम् अनुभूतं ततः अनुप्रविश्य यावत् विज्ञातं विशेषेण ज्ञातं दृष्टमित्यर्थः तावत् चर्म च दारु च केवलं दृष्टमिति शेषः ॥ ११७ ॥

(ज) तस्यां संग्रामभूमौ । दुन्दुभेः रणवाद्यविशेषस्य । वल्लीशाखाग्रैः लताप्रतानाग्रैः हन्यमानस्य ताड्यमानस्य ।

तावत् अन्यतो व्रजामि। अथवा नैतत् युज्यते सहसैव पितृपैतामहं (झ) वनं त्यक्तुम्। उक्तञ्च।

भये वा यदि वा हर्षे सम्प्राप्ते यो विमर्शयेत्।
कृत्यं न कुरुते वेगान्न स सन्तापमाप्नुयात्॥ ११८॥

तत् तावत् जानामि कस्य अयं शब्दः। धैर्य्यमालम्ब्य विमर्शयन् यावत् मन्दं मन्दं गच्छति तावत् दुन्दुभिम् अपश्यत्। स च तं परिज्ञाय समीपं गत्वा स्वयमेव कौतुकात् अताड़यत्। भूयश्च हर्षात् अचिन्तयत्। अहो! चिरादेतत् अस्माकं महत् भोजनमापतितम् (ञ) तत् नूनं प्रभूतमांसमेदोऽसृग्भिः (ट) परिपूरितं भविष्यति। ततः परुषचर्मावगुण्ठितं (ठ) तत्कथमपि विदार्य्य एकदेशे छिद्रं कृत्वा संहृष्टमना मध्ये प्रविष्टः। परं चर्मविदारणतो दंष्ट्राभङ्गः (ड) समजनि अथ निराशीभूतः तत् दारुशेषमवलोक्य श्लोकमेनमपठत्। पूर्वमेव मया ज्ञातमिति। ततो न शब्दमात्रात् भेतव्यम्। पिङ्गलक आह। भोः! पश्य अयं मम सर्वोऽपि परिग्रहो (ढ) भयव्याकुलितमनाः पलायितुमिच्छति। तत् कथमहं धैर्य्यावष्टम्भं करोमि।

---

(झ) पितृपैतामहं पितृपितामहक्रमेण अध्युषितमित्यर्थः।

भये इति। यः भये भयहेतौ इत्यर्थः यदि वा हर्षे हर्षकारणे इत्यर्थः सम्प्राप्ते उपस्थिते विमर्शयेत् विवेचयेत् वेगात् सहसा इत्यर्थः कृत्यं कार्य्यं न कुरुते, स जनः सन्तापं न आप्नुयात्॥ ११८॥

(ञ) आपतितम् उपस्थितम्।

(ट) नूनं निश्चितम्। प्रभूतेति। प्रभूतैः प्रचुरैः मांसैः मेदोभिः वसाभिः असृग्भिः रक्तैश्च इत्यर्थः।

(ठ) परुषेण कठिनेन चर्मणा अवगुण्ठितम् आच्छादितम्।

(ड) दंष्ट्राभङ्गः दन्तभङ्गः।

(ढ) परिग्रहः सहचरः।

सोऽब्रवीत्। स्वामिन्! नैषामिष दोषो यतः स्वामिसदृशा एव भवन्ति भृत्याः। उक्तञ्च।

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च।

पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च॥ ११९॥

तत् पौरुषावष्टम्भं (ण) कृत्वा त्वं तावत् अत्र एव प्रतिपालय यावत् अहम् एतत् शब्दस्वरूपं ज्ञात्वा आगच्छामि। ततः पश्चात् यथोचितं कार्य्यमिति। पिङ्गलक आह। किं तत्र भवान् गन्तुम् उत्सहते? स आह। किं स्वाम्यादेशात् सद्भृत्यस्य (त) कृत्याकृत्यमस्ति।

उक्तञ्च। स्वाम्यादेशात् सुभृत्यस्य न भीः सञ्जायते क्वचित्।

प्रविशेत् मुखमाहेयं दुस्तरं वा महार्णवम्॥ १२०॥

तथाच। स्वाम्यादिष्टस्तु यो भृत्यः समं विषममेव च।

मन्यते न स सन्धार्य्यो भूभुजा भूतिमिच्छता॥ १२१॥

पिङ्गलक आह। भद्र! यदि एवं तत् गच्छ शिवास्ते पन्थानः सन्तु इति। दमनकोऽपि तं प्रणम्य सञ्जीवकशब्दानुसारी प्रतस्थे। अथ दमनके गते भयव्याकुलमनाः पिङ्गलकः

---

अश्व इति। अश्वः घोटकः शस्त्रं शास्त्रं वीणा वाणी वचनं नरः नारी च एते पुरुषविशेषं प्राप्ताः सन्तः अयोग्या योग्याश्च भवन्ति प्रभुणा यथा एते व्यवह्रियन्ते तथैव भवन्ति इति भावः॥ ११९॥

(ण) पौरुषावष्टम्भं पराक्रमावलम्बनम्। प्रतिपालय अपेक्षस्व।

(त) स्वाम्यादेशादिति। स्वामिन आदेशात् सद्भृत्यानां कृत्याकृत्यविचारो न कार्य्यः, तत्क्षणमेव कार्य्यं कर्त्तव्यमिति भावः।

स्वाम्यादेशादिति। स्वामिन आदेशात् आदेशं प्राप्येत्यर्थः यबर्थे पञ्चमी। सुभृत्यस्य सुसेवकस्य क्वचित् अपिरत्र अध्याहार्य्यः भीः भयं न सञ्जायते। सः आहेयम् अहिसम्बन्धि मुखं सर्पमुखमित्यर्थः दुस्तरं महार्णवं वा प्रविशेत्॥१२०॥

स्वाम्यादिष्ट इति। यः भृत्यः स्वामिना आदिष्टः आज्ञप्तः सन् समं विषमं च मन्यते विचारयति, भूतिं सम्पदम् इच्छता अभिलषता भूभुजा स भृत्यः न सन्धार्य्यः न रक्षणीयः॥ १२१॥

चिन्तयामास। अहो! न शोभनं कृतं मया, यत् तस्य विश्वासं गत्वा आत्माभिप्रायो निवेदितः। कदाचित् दमनकोऽयमुभयवेतनो भूत्वा ममोपरि दुष्टबुद्धिः स्यात् भ्रष्टाधिकारत्वात् (थ) उक्तञ्च।

ये भवन्ति महीपस्य सम्मानितविमानिताः।
यतन्ते तस्य नाशाय कुलीना अपि सर्वदा॥ १२२॥

तत् तावदस्य चिकीर्षितं (द) वेत्तुमन्यत् स्थानान्तरं गत्वा प्रतिपालयामि। कदाचित् दमनकः तमादाय मां व्यापादयितुमिच्छति (ध) उक्तञ्च।

न बध्यन्ते ह्यविश्वस्ता बलिभिर्दुर्बला अपि।
विश्वस्तास्त्वेव बध्यन्ते बलवन्तोऽपि दुर्बलैः॥ १२३॥
बृहस्पतेरपि प्राज्ञो न विश्वासे व्रजेन्नरः।
य इच्छेदात्मनो वृद्धिमायुष्यञ्च सुखानि च॥ १२४॥

---

(थ) उभयवेतनः यः स्वामिनः परस्माच्च वेतनं लभते स उभयवेतनः। दुष्टबुद्धिः दुर्जनः। भ्रष्टाधिकारत्वात् पूर्वं मया अयम् अधिकारात् निरस्त इति प्राग्वैरानुस्मरणादिति भावः।

ये इति। ये भृत्याः महीपस्य सम्मानितविमानिताः पूर्वं सम्मानिताः पश्चात् विमानिताः भवन्ति ते कुलीना अपि सत्कुलजाता अपि तस्य महीपस्य नाशाय सर्वदा यतन्ते चेष्टन्ते॥ १२२॥

(द) चिकीर्षितं कर्त्तुमिष्टम्। वेत्तुं ज्ञातुम्।

(ध) तं मत्तोऽपि प्रबलं सत्त्वमिति भावः। व्यापादयितुं हन्तुम्।

नेति। दुर्बला अपि अविश्वस्ताः विश्वासमकुर्वन्त इत्यर्थः बलिभिः बलवद्भिः न बध्यन्ते न हन्यन्ते। बलवन्तः अपि विश्वस्तास्तु विश्वासं कुर्वन्तस्तु दुर्बलैरपि बध्यन्ते॥ १२३॥

बृहस्पतेरिति। प्राज्ञो जनः बृहस्पतेरपि विश्वासे विश्वासजनकवचसि इत्यर्थः न व्रजेत् न गच्छेत् विश्वासं न कुर्यादित्यर्थः। यः प्राज्ञः आत्मनः आयुष्यञ्च जीवनञ्च सुखानि च इच्छेत्। आत्मवृद्धिजीवनसुखाभिलाषिभिः कस्यापि वचसि न विश्वसितव्यमिति भावः॥ १२४॥

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः।
राज्यलाभोद्यतो वृत्रः शक्रेण शपथैर्हतः॥ १२५॥
न विश्वासं विना शत्रुर्देवानामपि सिद्ध्यति।
विश्वासात् त्रिदशेन्द्रेण दितेर्गर्भो विदारितः॥ १२६॥

एवं सम्प्रधार्य्य स्थानान्तरं गत्वा दमनकमार्गमवलोकयन् एकाकी तस्थौ। दमनकोऽपि सञ्जीवकसकाशं गत्वा वृषभोऽयमिति परिज्ञाय हृष्टमना व्यचिन्तयत्। अहो! शोभनमापतितम् अनेन एतस्य सन्धिविग्रहद्वारेण मम पिङ्गलको वश्यो भविष्यति इति। उक्तञ्च।

न कौलीन्यान्न सौहार्दात् नृपो वाक्ये प्रवर्त्तते।
मन्त्रिणां यावदभ्येति व्यसनं शोकमेव च॥ १२७॥

---

शपथैरिति। शपथैः सन्धितस्यापि कृतशपथस्यापि रिपोः शत्रोः विश्वासं न व्रजेत् न वचसि विश्वासं कुर्य्यादित्यर्थः। तथाहि राज्यस्य त्रिभुवनैश्वर्य्यस्य लाभे उद्यतः वृत्रः तदाख्योऽसुरः शक्रेण इन्द्रेण शपथैर्हतः शपथेन विश्वास्य विनाशित इत्यर्थः॥ १२५॥

नेति। विश्वासं विना शत्रुः देवानामपि न सिद्ध्यति देवा अपि विश्वास्यैव शत्रून् पराजितवन्त इति भावः। तथाहि त्रिदशेन्द्रेण देवेन्द्रेण विश्वासात् विश्वासेन दितिं परिचर्य्येति भावः दितेः काश्यपपत्न्याः विमातुरित्यर्थः गर्भः स्वविनाशार्थमाहित इति भावः विदारितः खण्डितः। पुरा दैत्यराजनिधनजातशोका दैत्यमाता इन्द्रजयिनं पुत्रं कामयन्ती स्वामिनं कश्यपं परिचचार। कश्यपस्तु तद्भक्त्या नितरां वशंवदस्तां सान्त्वयन् तस्यां महावीर्य्यं निषिच्य सावधानया भवितव्यमिति तामुक्त्वा तपश्चर्य्यायामगमत्। देवराजस्तु तद्विदित्वा छिद्रान्वेषणपरः तां विमातरं परिचरन् एकदा दिवानिद्राणां तां वीक्ष्य तदैव छलमाश्रित्य तत्कुक्षौ प्रविष्टस्तं गर्भं विदारयामास। अमोघवीर्य्यत्वात् स गर्भः खण्डितोऽपि ऊनपञ्चाशद्वायुरूपेण प्रसूतः देवराजमेवान्वगच्छदिति पौराणिकी गाथा॥ १२६॥

नेति। नृपः मन्त्रिणां कौलीन्यात् सत्कुलजातत्वात् न, तथा सौहार्दात् न वाक्ये प्रवर्त्तते न अधीनो भवति, यावत् व्यसनं विपदं शोकं वा अभ्येति प्राप्नोति नृप इति शेषः तावत् वाक्ये प्रवर्त्तते इति पूर्वानुषङ्गः॥ १२७॥

सदैवापद्गतो राजा भोग्यो भवति मन्त्रिणाम्।
अतएव हि वाञ्छन्ति मन्त्रिणः सापदं नृपम्॥ १२८॥
यथा नेच्छति नीरोगः कदाचित् सुचिकित्सकम्।
तथापद्रहितो राजा सचिवं नाभिवाञ्छति॥ १२९॥

एवं विचिन्तयन् पिङ्गलकाभिमुखः प्रतस्थे। पिङ्गलकोऽपि तमायान्तं प्रेक्ष्य स्वाकारं रक्षन् यथापूर्वमवस्थितः। दमनकोऽपि पिङ्गलकसकाशं गत्वा प्रणम्य उपविष्टः। पिङ्गलक आह। किं दृष्टं भवता तत् सत्त्वम्? दमनक आह, दृष्टं स्वामिप्रसादात्। पिङ्गलक आह। अपि सत्यम्? दमनक आह। किं स्वामिपादानामग्रेऽसत्यं विज्ञाप्यते? उक्तञ्च,

अपि स्वल्पमसत्यं यः पुरो वदति भूभुजाम्।
देवानाञ्च विनश्येत स द्रुतं सुमहानपि॥ १३०॥

तथा च, सर्वदेवमयो राजा मनुना सम्प्रकीर्त्तितः।
तस्मात्तं देववत्पश्येन्न व्यलीकेन कर्हिचित्॥ १३१॥
सर्वदेवमयस्यापि विशेषो नृपतेरयम्।
शुभाशुभफलं सद्यो नृपाद् देवाद् भवान्तरे॥ १३२॥

---

सदैवेति। आपद्गतः विपद्गतः राजा नृपतिः सदैव मन्त्रिणां भोग्यो भवति अधीनतां प्राप्नोतीत्यर्थः। अतएव मन्त्रिणः सापदं हि आपद्युक्तमेव नृपं वाञ्छन्ति॥ १२८॥

यथेति। नीरोगः रोगरहितो जनः यथा कदाचित् सुचिकित्सकं न इच्छति, तथा आपद्रहितो राजा सचिवं मन्त्रिणं न अभिवाञ्छति न आद्रियते इत्यर्थः॥ १२९॥

अपीति। यः भूभुजां राज्ञां देवानाञ्च पुरः अग्रतः स्वल्पमपि असत्यं वदति स महानपि द्रुतं शीघ्रं विनश्येत॥ १३०॥

सर्वेति। मनुना राजा सर्वदेवमयः सम्प्रकीर्त्तितः कथितः। तस्मात् तं राजानं देववत् देवमिव पश्येत्, व्यलीकेन वैपरीत्येन कर्हिचित् कदाचन न॥१३१॥

सर्वेति। सर्वदेवमयस्य अष्टानां लोकपालानां वपुर्धारयते नृप इति शास्त्रात् प्रायशो देवमूर्त्तेः नृपतेः अयम् अपि अयं हि अपिरत्नैवकारार्थः विशेषः प्रभेदः

पिङ्गलक आह, सत्यं दृष्टं भविष्यति भवता। न दीनोपरि (न) महान्तः कुप्यन्ति इति न त्वं तेन निपातितः। यतः,

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः।
स्वभाव एवोन्नतचेतसामयं
महान्महत्स्वेव करोति विक्रमम् ॥ १३३ ॥

अपिच, गण्डस्थलेषु मदवारिषु बद्धराग-
मत्तभ्रमद्भ्रमरपादतलाहतोऽपि ।
कोपं न गच्छति नितान्तबलोऽपि नाग-
स्तुल्ये बले तु बलवान् परिकोपमेति ॥ १३४ ॥

दमनक आह। अस्तु एवं स महात्मा वयं कृपणाः, (प) तथापि स्वामी यदि कथयति ततो भृत्यत्वे नियोजयामि।

---

दैवादिति शेषः। नृपात् सद्यः शुभाशुभफलं भवति, दैवात् भवान्तरे अन्यस्मिन् जन्मनि शुभाशुभफलमित्यनुषङ्गः। राजा सद्य एव लोकान् दण्डयति अनुगृह्णाति वा दैवता तु परत्र शुभाशुभकर्मणोः फलं विदधातीति राजदैवयोर्विशेष इति भावः ॥ १३२ ॥

(न) दीनानां दुःखिनां दुर्बलानामित्यर्थः उपरि महान्तः जनाः। तेन सत्त्वेन।

तृणानीति। प्रभञ्जनः वायुः तृणानि न उन्मूलयति न उत्पाटयति यतः मृदूनि वस्तूनि सर्वतः सर्वथा नीचैः अतिशयेन प्रणतानि भवन्ति, अतस्तेषामुत्पाटनं न उचितमिति भावः। उन्नतचेतसां महात्मनाम् अयं स्वभाव एव, महान् जनः महत्सु एव जनेषु विक्रमं करोति न दुर्बलेष्विति भावः। वंशस्थविलं वृत्तम् ॥ १३३ ॥

गण्डस्थलेष्विति। नितान्तबलोऽपि अतिबलोऽपि नागः गजः गण्डस्थलेषु मदवारिषु मदजलेषु बद्धरागैः जातानुरागैः मत्तैः भ्रमद्भिः भ्रमरैः पादतलाहतोऽपि चरणतलताड़ितोऽपि कोपं न गच्छति न कुप्यति, तथाहि बलवान् जनः तुल्ये बले परिकोपम् एति प्राप्नोति। वसन्ततिलकं वृत्तम् ॥ १३४ ॥

(प) कृपणाः दीनाः।

पिङ्गलक आह सोच्छ्वासम् (फ)। किं भवान् शक्नोत्येवं कर्त्तुम्? दमनक आह। किमसाध्यं बुद्धेरस्ति। उक्तञ्च,

न तच्छस्त्रैर्न नागेन्द्रैर्न हयैर्न पदातिभिः।
कार्य्यं संसिद्धिमभ्येति यथा बुद्ध्या प्रसाधितम्॥ १३५॥

पिङ्गलक आह। यदि एवं तर्हि अमात्यपदे (ब) अध्यारोपितस्त्वम्। अद्यप्रभृति प्रसादनिग्रहादिकं (भ) त्वयैव कार्य्यम् इति निश्चयः। अथ दमनकः सत्वरं गत्वा साक्षेपं (म) तम् इदमाह। एह्येहि दुष्टवृषभ! स्वामी पिङ्गलकः त्वाम् आकारयति (य)। किं निःशङ्को भूत्वा मुहुर्मुहुर्नदसि वृथेति। तच्छ्रुत्वा सञ्जीवकोऽब्रवीत। भद्र! कोऽयं पिङ्गलकः। दमनक आह। किं स्वामिनं पिङ्गलकमपि न जानासि? तत्क्षणं प्रतिपालय फलेनैव ज्ञास्यसि। ननु अयं सर्वमृगपरिवृतो वटतले स्वामी पिङ्गलकनामा सिंहस्तिष्ठति। तच्छ्रुत्वा गतायुषमिवात्मानं (र) मन्यमानः सञ्जीवकः परं विषादमगमत्। आह च, भद्र! भवान् साधुसमाचारो (ल) वचनपटुश्च दृश्यते। तत् यदि मामवश्यं तत्र नयसि तदभय-

---

(फ) सोच्छ्वासं सनिश्वासम्।

नेति। बुद्ध्या प्रसाधितं कार्य्यं यथा संसिद्धिम् अभ्येति गच्छति, तथा तत्कार्य्यं शस्त्रैः न, नागेन्द्रैः न, गजेन्द्रैः न, हयैः अश्वैः न, पदातिभिः पादचारिभिः सैन्यैः न संसिद्धिम् अभ्येति इति अनुषङ्गः। चतुरङ्गबलापेक्षयापि बुद्धेरुत्कर्ष इति भावः॥ १३५॥

(ब) अमात्यपदे मन्त्रिपदे त्वम् अध्यारोपितः अधिष्ठापितः मयेति शेषः।

(भ) प्रसादनिग्रहादिकम् अनुजीविनां प्रजानाञ्चेति शेषः।

(म) साक्षेपं सतिरस्कारम्।

(य) आकारयति आह्वयति हूतिराकारणाह्वानमित्यमरः।

(र) गतायुषमिव मृतमिव।

प्रदानेन स्वामिनः सकाशात् प्रसादः कारयितव्यः। दमनक आह, भोः सत्यमभिहितं भवता। नीतिरेषा। यतः,

पर्य्यन्तो लभ्यते भूमेः समुद्रस्य गिरेरपि।
न कथञ्चिन्महीपस्य चित्तान्तः केनचित् क्वचित् ॥१३६॥

तत् त्वमत्रैव तिष्ठ यावदहं तं समये दृष्ट्वा ततः पश्चात् त्वामानयामि इति। तथा अनुष्ठिते दमनकः पिङ्गलकसकाशं गत्वा इदमाह। स्वामिन्! न तत्प्राकृतं (व) सत्त्वं, स हि भगवतो महेश्वरस्य वाहनभूतो वृषभ इति मया पृष्ट इदमूचे। महेश्वरेण परितुष्टेन कालिन्दीपरिसरे (श) शष्पाग्राणि भक्षयितुं समादिष्टः (ष)। किं बहुना मम प्रदत्तं भगवता क्रीड़ार्थं वनमिदम्। पिङ्गलक आह सभयम्, सत्यं ज्ञातं मया अधुना। न देवताप्रसादं विना शष्पभोजिनो व्यालाकीर्णे (स) एवंविधे वने निःशङ्का नदन्तो भ्रमन्ति। ततस्त्वया किमभिहितम्। दमनक आह। स्वामिन्! एतदभिहितं मया यदेतद्वनं चण्डिकावाहनभूतस्य (ह) मत्स्वामिनः पिङ्गलकनाम्नः सिंहस्य विषयीभूतम् (च) तत् भवान् अभ्यागतः प्रियोऽतिथिः। तत् तस्य सकाशं गत्वा भ्रातृस्नेहेन एकत्र भक्षण-

---

(ल) साधुसमाचारः सदाचारसम्पन्नः। वचनपटुः वाग्मी।

पर्य्यन्त इति। भूमेः समुद्रस्य गिरेः पर्वतस्यापि पर्य्यन्तः शेषसीमा लभ्यते प्राप्यते जनैरिति शेषः। केनचित् जनेन क्वचित् महीपस्य राज्ञः, चित्तान्तः मनसो भावशेष इत्यर्थः कथञ्चित् न लभ्यते इति अनुषङ्गः॥ १३६॥

(व) प्राकृतं स्वाभाविकम्।

(श) कालिन्दीपरिसरे यमुनातीरदेशे। शष्पाग्राणि अभिनवतृणाग्राणि।

(ष) समादिष्टः आज्ञप्तः।

(स) देवताप्रसादं देवतानुग्रहम्। व्यालाकीर्णे श्वापदबहुले।

(ह) चण्डिकेति। चण्डिकाया गौर्य्या वाहनभूतस्य।

(च) विषयीभूतम् अधिकारस्थितम्। अभ्यागतः उपस्थितः।

पानविहरणक्रियाभिः एकस्थानाश्रयेण कालो नेय इति। ततः तेनापि सर्वमेतत् प्रतिपन्न(क)मुक्तञ्च सहर्षम्। स्वामिनः सकाशात् अभयदक्षिणा दापयितव्या इति। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा पिङ्गलक आह। साधु सुमते! साधु। मन्त्रिश्रोत्रिय! (ख) साधु! मम हृदयेन सह सम्मन्त्र्य भवता इदमभिहितम्। तद्दत्ता मया तस्य अभयदक्षिणा। परं सोऽपि मदर्थे अभयदक्षिणां याचयित्वा द्रुततरमानीयतामिति। अथ साधु (ग) चेदमुच्यते।

अन्तःसारैरकुटिलैरच्छिद्रैः सुपरीक्षितैः।
मन्त्रिभिर्धार्य्यते राज्यं सुस्तम्भैरिव मन्दिरम्॥ १२७॥

तथाच, मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके।
कर्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः?॥१२८॥

दमनकोऽपि तं प्रणम्य सञ्जीवकसकाशं प्रस्थितः सहर्षमचिन्तयत् अहो! प्रसादसम्मुखो नः स्वामी वचनवशगश्च संवृत्तस्तन्नास्ति धन्यतरो मम (घ) उक्तञ्च।

---

(क) प्रतिपन्नं स्वीकृतम्।

(ख) मन्त्रिश्रोत्रिय! मन्त्रिपण्डित!।

(ग) अथेति। अथ पक्षान्तरे। इदं वक्ष्यमाणं वचनं साधु यथा तथा उच्यते कथ्यते लोकैरिति शेषः।

अन्तरिति। अन्तःसारैः सारवद्भिः अकुटिलैः अधूर्त्तैः अच्छिद्रैः निर्दोषैः सुपरीक्षितैः साधुत्वेन विदितैरित्यर्थः मन्त्रिभिः सुस्तम्भैः मन्दिरमिव गृहमिव राज्यं धार्य्यते पाल्यते। उपमालङ्कारः॥ १२७॥

मन्त्रिणामिति। भिन्नसन्धाने अयुक्तयोजने इत्यर्थः मन्त्रिणां सान्निपातिके त्रिदोषजे कर्मणि चिकित्साव्यापारे भिषजां वैद्यानां प्रज्ञा व्यज्यते प्रकाश्यते इत्यर्थः, स्वस्थे जने को वा जनः न पण्डितः? अपितु सर्व एवेत्यर्थः॥ १२८॥

(घ) ममेति। मत्त इत्यर्थः सम्बन्धविवक्षया षष्ठी।

अमृतं शिशिरे वह्निरमृतं प्रियदर्शनम्।
अमृतं राजसम्मानममृतं चीरभोजनम्॥ १३९॥

अथ सञ्जीवकसकाशमासाद्य सप्रश्रयमुवाच (ङ) भो मित्र! प्रार्थितोऽसौ मया भवदर्थे स्वाम्यभयप्रदानम्। तद्विश्रब्धं (च) गम्यतामिति। परं त्वया राजप्रसादमासाद्य मया सह समयधर्मेण (छ) वर्त्तितव्यम्। न गर्वमासाद्य स्वप्रभुतया विचरणीयम्। अहमपि तव सङ्केतेन सर्वां राज्यधुरममात्यपदवीमाश्रित्य उद्धरिष्यामि। एवं कृते द्वयोरपि आवयोः राज्यलक्ष्मीर्भोग्या भविष्यति। यतः,

आखेटकस्य धर्मेण विभवाः स्युर्वशे नृणाम्।
नृप्रजाः प्रेरयत्येको हन्त्यन्योऽत्र मृगानिव॥ १४०॥

तथाच, यो न पूजयते गर्वादुत्तमाधममध्यमान्।
भूपसम्मानमान्योऽपि भ्रश्यते दन्तिलो यथा॥१४१॥

सञ्जीवक आह। कथमेतत्? सोऽब्रवीत्।

---

अमृतमिति। शिशिरे शीते वह्निः अग्निः अमृतं प्रियदर्शनम् अमृतम्। राजसम्मानम् अमृतम्। चीरभोजनं दुग्धपानम् अमृतम्। अत्र अमृतशब्देन सुखसाधनं वस्तु उच्यते इति बोध्यम्॥ १३९॥

(ङ) सप्रश्रयं सविनयम्।

(च) विश्रब्धं निःशङ्कम्।

(छ) समयधर्मेण नियमक्रमेण।

आखेटकस्येति। आखेटकस्य मृगयाया धर्मेण क्रमेण विभवाः सम्पदः नृणां नराणां वशे स्युः। एकः नृप्रजाः नररूपाः प्रजाः प्रेरयति प्रेषयति, अन्यः अत्र संसारे मृगानिव प्रजाः हन्ति नाशयति॥ १४०॥

य इति। यः गर्वात् दर्पात् उत्तमाधममध्यमान् जनान् न पूजयते यथोचितं न सत्करोति, स भूपसम्मानमान्योऽपि राजसम्मानितोऽपि दन्तिलो यथा भ्रश्यते अधिकारादिति शेषः॥ १४१॥

## कथा ३ ।

अस्त्यत्र धरातले वर्द्धमानं नाम नगरम्। तत्र दन्तिलो नाम नानाभाण्डपतिः (ज) सकलपुरनायकः प्रतिवसति स्म। तेन पुरकार्य्यं नृपकार्य्यञ्च कुर्वता तुष्टिं नीताः तत्पुरवासिनो लोका नृपतिश्च। किं बहुना। न कोऽपि तादृक् केनापि चतुरो दृष्टो न अपि श्रुतो वेति। अथवा साधु चेदम् उच्यते।

नरपतिहितकर्त्ता द्वेष्यतां याति लोके
जनपदहितकर्त्ता त्यज्यते पार्थिवेन्द्रैः।
इति महति विरोधे वर्त्तमाने समाने
नृपतिजनपदानां दुर्लभः कार्य्यकर्त्ता ॥ १४२ ॥

अथ एवं गच्छति काले दन्तिलस्य कदाचिद्विवाहः सम्प्रवृत्तः। तत्र तेन सर्वे पुरनिवासिनो राजसन्निधिलोकाश्च (झ) सम्मानपुरःसरमामन्त्र्य भोजिता वस्त्रादिभिः सत्कृताश्च। ततो विवाहानन्तरं राजा सान्तःपुरः (ञ) स्वगृहमानीय अभ्यर्चितः। अथ तस्य नृपतेः गृहसम्मार्जनकर्त्ता गोरम्भो नाम राजसेवको गृहायातोऽपि तेन अनुचितस्थाने

---

(ज) नानाभाण्डपतिः बहुविधधनपतिः।

नरेति। नरपतेः राज्ञः हितकर्त्ता नरः लोके जगति द्वेष्यताम् अप्रियतां प्रजानामिति शेषः याति प्राप्नोति। जनपदानां प्रजानामित्यर्थः हितकर्त्ता जनः पार्थिवेन्द्रैः नृपैः त्यज्यते नाद्रियते इति भावः इति इत्थं महति समाने विरोधे वर्त्तमाने सति नृपतिजनपदानां राजप्रजानामित्यर्थः कार्य्यकर्त्ता उभयहितकर इत्यर्थः दुर्लभः दुष्प्राप्य इत्यर्थः। मालिनीवृत्तं, ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ १४२ ॥

(झ) राजसन्निधिलोकाः राजसहचरा इत्यर्थः।

(ञ) सान्तःपुरः अन्तपुरैः अन्तःपुरिकाभिः नारीभिरित्यर्थः सहितः।

उपविष्टोऽवज्ञया अर्द्धचन्द्रं (ट) दत्त्वा निःसारितः। सोऽपि ततःप्रभृति निःश्वसन् अपमानात् न रात्री अपि अधिशेते। कथं मया तस्य भाण्डपतेः राजप्रसादहानिः कर्त्तव्या इति चिन्तयन् आस्ते। अथवा किमनेन वृथा शरीरशोषणेन। न किञ्चित् मया तस्य अपकर्त्तुं शक्यमिति। अथवा साधु इदमुच्यते।

यो ह्यपकर्त्तुमशक्तः कुप्यति किमसौ नरोऽत्र निर्लज्जः?।
उत्पतितोऽपि हि चणकः शक्तः किं भ्राष्ट्रकं भङ्क्तुम्? ॥१४३॥

अथ कदाचित्प्रत्यूषे योगनिद्रां (ठ) गतस्य राज्ञः शय्यान्ते मार्जनं कुर्वन् इदमाह। अहो! दन्तिलस्य महद्दृप्तत्वं (ड) यत् राजमहिषीमालिङ्गति। तच्छ्रुत्वा राजा ससम्भ्रममुत्थाय समुवाच। भो! भो! गोरम्भ! सत्यमेतत् यत् त्वया जल्पितं किं देवी दन्तिलेन समालिङ्गिता? इति। गोरम्भः प्राह देव! रात्रिजागरणेन द्यूतासक्तस्य (ढ) मे बलात् निद्रा समायाता। तत् न वेद्मि किं मया अभिहितम्। राजा सेर्ष्यं स्वगतम्, एष तावदस्मद्गृहे अप्रतिहतगतिः (ण) तथा दन्तिलोऽपि। तत्कदाचित् अनेन देवी समालिङ्ग्यमाना दृष्टा भविष्यति। तेन इदमभिहितम्।

---

(ट) अर्द्धचन्द्रं गलहस्तम्।

य इति। यो हि जनः अपकर्त्तुम् अशक्तः अक्षमः सन् कुप्यति, अत्र जगति असौ नरः किं निर्लज्जः? उत्पतितोऽपि भर्जनसमये भ्रष्टः सन् उत्पतित इत्यर्थः चणकः छोलेति प्रसिद्धः शस्यविशेषः। भ्राष्ट्रकं भर्जनकारिणं भङ्क्तुं नाशयितुं किं शक्तः? ॥ १४३ ॥

(ठ) योगनिद्रां कपटनिद्राम् इत्यर्थः।

(ड) दृप्तत्वं दर्पं इत्यर्थः।

(ढ) द्यूतासक्तस्य द्यूतक्रीडायां निरतस्य।

(ण) अप्रतिहतगतिः अबाधितप्रसरः।

उक्तञ्च, यद्वाञ्छति दिवा मर्त्यो वीक्षते वा करोति वा।
तत्स्वप्नेऽपि तदभ्यासाद् ब्रूते वाथ करोति वा ॥१४४॥
तथाच, शुभं वा यदि वा पापं यन्नृणां हृदि संस्थितम्।
सुगूढ़मपि तज्ज्ञेयं स्वप्नवाक्यात्तथा मदात् ॥ १४५ ॥
अथवा स्त्रीणां विषये कोऽत्र सन्देहः ?
जल्पन्ति सार्द्धमन्येन पश्यन्त्यन्यं सविभ्रमाः।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ? ॥१४६॥
अन्यच्च, एकेन स्मितपाटलाधररुचो जल्पन्त्यनल्पाक्षरं
वीक्षन्तेऽन्यमितः स्फुटत्कुमुदिनीफुल्लोल्लसल्लोचनाः।
दूरोदारचरित्रचित्रविभवं ध्यायन्ति चान्यं धिया
केनेत्थं परमार्थतोऽर्थवदिव प्रेमास्ति वामभ्रुवाम् ? ॥१४७॥

---

यदिति। मर्त्यः दिवा दिवसे यत् वाञ्छति अभिलषति, वीक्षते पश्यति वा, करोति वा, स्वप्नेऽपि तदभ्यासात् तेषामभिलाषादीनामभ्यासात् पौनःपौन्यात् तत् ब्रूते वा करोति वा ॥ १४४ ॥

शुभमिति। नृणां मानवानां शुभं यदि वा पापम् अशुभं वा यत् हृदि संस्थितं तत् सुगूढ़मपि स्वप्नवाक्यात् तथा मदात् मद्यपानजनितात् विकारादित्यर्थः ज्ञेयं वेद्यम् ॥ १४५ ॥

जल्पन्तीति। स्त्रिय इति सर्वत्र अध्याहार्य्यम्। अन्येन सार्द्धं जल्पन्ति आलपन्ति, सविभ्रमाः सविलासाः सत्यः अन्यं पश्यन्ति, तथा अन्यं पुरुषं हृद्गतं चिन्तयन्ति तस्मात् को जनः योषितां नारीणां प्रियः ? नामेति सम्भावनायां न कोऽपि प्रिय इति सम्भावयामीति यावत् ॥ १४६ ॥

एकेनेति। स्मिता ईषद्धासिनी पाटला रक्ता अधररुक् यासां तथोक्ताः सत्यः एकेन पुरुषेण सहेत्यर्थः अनल्पाक्षरं बहु इत्यर्थः जल्पन्ति विविधाः कथाः कथयन्तीत्यर्थः वामभ्रुव इति शेषः। स्फुटन्ती विकसन्ती या कुमुदिनी सेव फुल्ले विकसिते उल्लसन्ती लोचने यासां तथाविधाः सत्यः इतः अस्मात् अन्येन सह जल्पनप्रदेशादित्यर्थः अन्यम् अपरं पुरुषं वीक्षन्ते पश्यन्ति तथा दूरोदारम् अतिमहत् चरित्रं यस्य तादृशं चित्रविभवं विविधसम्पदम् अन्यं पुरुषं धिया बुद्ध्या ध्यायन्ति चिन्तयन्ति अतः वामभ्रुवां नारीणां केन पुरुषेण सह अर्थवदिव

तथाच, नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १४८ ॥
रहो नास्ति क्षणो नास्ति प्रार्थयिता नरः।
तेन नारद ! नारीणां सतीत्वमुपजायते ॥ १४९ ॥
यो मोहान्मन्यते मूढ़ो रक्तेयं मम कामिनी।
स तस्या वशगो नित्यं भवेत् क्रीड़ाशकुन्तवत् ॥ १५० ॥
तासां वाक्यानि कृत्यानि स्वल्पानि सुगुरूण्यपि।
करोति यः कृती लोके लघुत्वं याति सर्वतः ॥ १५१ ॥
स्त्रियञ्च यः प्रार्थयते सन्निकर्षञ्च गच्छति।
ईषच्च कुरुते सेवां तमेवेच्छन्ति योषितः ॥ १५२ ॥

---

यथार्थमिव परमार्थतः सत्यतः इत्थं प्रेम प्रणयः अस्ति ? न केनापि सहेत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४७ ॥

नेति। अग्निः काष्ठानां न, महोदधिः समुद्रः आपगानां नदीनां न, अन्तकः यमः, सर्वभूतानां न, तथा वामलोचना पुंसां न तृप्यतीति सर्वत्रानुषङ्गः। काष्ठानामित्यादि तृप्तप्रर्थानां वेति करणे षष्ठी ॥ १४८ ॥

रह इति। नारदं प्रति कृष्णस्योक्तिरियम्। हे नारद ! रहः विजनं नास्ति न लभ्यते इत्यर्थः स्थानमिति वा पाठः। क्षणः समयः कार्य्यव्यापृतत्वादिति भावः। नास्ति, प्रार्थयिता सुरतार्थी इत्यर्थः नरः नास्ति, तेन हेतुना नारीणां सतीत्वं पातिव्रत्यम् उपजायते तिष्ठति इत्यर्थः ॥ १४९ ॥

य इति। यः मूढ़ः मोहात् इयं कामिनी मम रक्ता अनुरागिणी इति मन्यते बुध्यते सः क्रीड़ाशकुन्तवत् क्रीड़ापक्षीव तस्याः कामिन्याः नित्यं वशगः भवेत् ॥ १५० ॥

तासामिति। यः कृती पुरुषः तासां नारीणां स्वल्पानि सुगुरूणि अपि वाक्यानि कृत्यानि कार्य्याणि च करोति, सः सर्वतः समन्तात् लघुत्वं याति गच्छति ॥ १५१ ॥

स्त्रियमिति। यः स्त्रियं प्रार्थयते कामयते, सन्निकर्षं सान्निध्यं गच्छति, ईषत् अल्पं यथा तथा सेवां करोति, योषितः नार्य्यः तमेव इच्छन्ति भजन्ते इत्यर्थः ॥ १५२ ॥

अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च।
मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति सर्वदा ॥ १५३ ॥
नासां कश्चिदगम्योऽस्ति नासाञ्च वयसि स्थितिः।
विरूपं रूपवन्तं वा पुमानित्येव भुज्यते ॥ १५४ ॥
रक्तो हि जायते भोग्यो नारीणां शाटको यथा।
घृष्यते यो दशालम्बी नितम्बे विनिवेशितः ॥ १५५ ॥
अलक्तको यथा रक्तो निष्पीड्य पुरुषस्तथा।
अबलाभिर्बलाद्रक्तः पादमूले निपात्यते ॥ १५६ ॥

एवं स राजा बहुविधं विलप्य तत्प्रभृति (त) दन्तिलस्य प्रसादपराङ्मुखः सञ्जातः। किं बहुना राजद्वारप्रवेशोऽपि तस्य निवारितः। दन्तिलोऽपि अकस्मादेव प्रसादपराङ्मुखमवनिपतिमवलोक्य चिन्तयामास।

अहो! साधु चेदम् उच्यते

---

अनर्थित्वादिति। मनुष्याणाम् अनर्थित्वात् परिजनस्य भयाच्च अमर्य्यादाः मर्य्यादातिक्रामिण्यः स्त्रियः सर्वदा मर्य्यादायां स्थितौ पातिव्रत्ये इति भावः तिष्ठन्ति ॥ १५३ ॥

नासामिति। आसां नारीणाम् अगम्यः कश्चित् नास्ति, आसां नारीणां वयसि यौवने स्थितिश्च नास्ति तरुणातरुणविचारो नास्तीति भावः। विरूपं कुरूपं रूपवन्तं जनं पुमान् पुंस्त्ववानिति भुञ्जते इमा इति शेषः ॥ १५४ ॥

रक्त इति। रक्तः अनुरक्तः पुरुषः अन्यत्र वर्णरञ्जितः शाटको यथा वसनमिव नारीणां भोग्यः जायते भवति हि इति अवधारणे। यः रक्तः दशया उत्कृष्टावस्थया अन्यत्र प्रान्तभागेन आलम्बते वर्त्तते अन्यत्र लम्बमानो भवतीति तथोक्तः नितम्बे विनिवेशितः अध्यारोपितः सन् घृष्यते घर्षणमाप्नोति इत्यर्थः, उपमालङ्कारः ॥ १५५ ॥

अलक्तक इति। रक्तः अलक्तको यथा तथा रक्तः पुरुषः अबलाभिः नारीभिः बलात् निष्पीड्य पादमूले निपात्यते। यथा रक्तम् अलक्तकं नार्य्यः पादमूलमारोपयन्ति तथा अनुरागिणं कान्तं प्रणयापराधेन चरणानतं कुर्वन्तीति भावः ॥ १५६ ॥

(त) तत्प्रभृति तदारभ्य।

कोऽर्थान् प्राप्य न गर्वितो ? विषयिणः कस्यापदोऽस्तङ्गताः ?
स्त्रीभिः कस्य न खण्डितं भुवि मनः ? को नाम राज्ञां प्रियः ?
कः कालस्य न गोचरान्तरगतः ? कोऽर्थी गतो गौरवम् ?
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान् ? ॥१५७॥

तथा च, काके शौचं द्यूतकारे च सत्यं
सर्पे क्षान्तिः स्त्रीषु कामोपशान्तिः।
क्लीवे धैर्य्यं मद्यपे तत्त्वचिन्ता
राजा मित्रं केन दृष्टं श्रुतं वा ?॥ १५८ ॥

अपरं मया अस्य भूपतेः अथवा अन्यस्यापि कस्यचित् राज-सम्बन्धिनः स्वप्नेऽपि न अनिष्टं कृतम्। तत्किमेतत् पराङ्मुखो मां प्रति भूपतिरिति। एवं तं दन्तिलं कदाचित् राजद्वारे विष्कम्भितं (थ) विलोक्य सम्मार्जनकर्त्ता गोरम्भो विहस्य द्वारपालान् इदमूचे। भो भो द्वारपालाः !

---

क इति। को जनः अर्थान् प्राप्य न गर्वितः न अहङ्कृतः भवेदिति शेषः। कस्य विषयिणः धनिनः आपदः अस्तं गताः ? के विषयिणः आपदि न पतन्तीति भावः। भुवि पृथिव्यां स्त्रीभिः नारीभिः कस्य जनस्य मनः न खण्डितम् ? न विचालित-मिति भावः अपितु सर्वस्यैवेत्यर्थः। को जनः राज्ञां प्रियः ? नाम सम्भावनायां कोऽपि राज्ञां प्रियो नेति सम्भावयामीत्यर्थः। को जनः कालस्य यमस्य न गोच-रान्तरगतः ? अपि तु सर्व एव कालकवले पतित इत्यर्थः। कः अर्थी याचकः गौरवं सम्मानं गतः ? प्राप्तः, न कोऽपीत्यर्थः याच्ञायां गौरवं नास्तीति भावः। को वा पुमान् दुर्जनानां धूर्त्तानां वागुरासु जालेषु पतितः सन् क्षेमेण कुशलेन यातः ? निष्कृतिमिति शेषः। न कोऽपीत्यर्थः ॥ १५७ ॥

काके इति। केन जनेन काके शौचं विशुद्धिः, द्यूतकारे च सत्यं, सर्पे क्षान्तिः क्षमा अपराधसहिष्णुतेत्यर्थः स्त्रीषु कामोपशान्तिः कामदमनं क्लीवे धैर्य्यम् अचापल्यं, मद्यपे सुरापायिनि जने तत्त्वचिन्ता परमार्थानुध्यानं तथा राजा मित्रं कस्यापीति शेषः दृष्टं वा श्रुतम् ? न केनापीत्यर्थः। एतत् सर्वम-सम्भवमिति भावः ॥ १५८ ॥

(थ) विष्कम्भितं वितर्कमाणं वा स्तम्भितम्।

राजप्रसादाधिष्ठितोऽयं दन्तिलः स्वयं निग्रहानुग्रहकर्त्ता च। तदनेन निवारितेन यथा अहं तथा यूयमपि अर्द्धचन्द्रभाजिनो (द) भविष्यथ। तच्छ्रुत्वा दन्तिलश्चिन्तयामास। नूनमिदमस्य गोरम्भस्य चेष्टितम्। अथवा साधु इदमुच्यते।

अकुलीनोऽपि मूर्खोऽपि भूपालं योऽत्र सेवते।
अपि सम्मानहीनोऽपि स सर्वत्र प्रपूज्यते ॥ १५९ ॥
अपि कापुरुषो भीरुः स्याच्चेन्नृपतिसेवकः।
तथापि न पराभूतिं जनादाप्नोति मानवः ॥१६०॥

एवं स बहुविधं विलप्य विलक्षमनाः (ध) सोद्वेगो गतप्रभावः (न) स्वगृहं गत्वा निशामुखे गोरम्भमाहूय वस्त्रयुगलेन सम्मान्य इदमुवाच। भद्र! मया न तदा त्वं रागवशात् (प) निःसारितः। यतस्त्वं ब्राह्मणानामग्रतोऽनुचितस्थाने समुपविष्टो दृष्ट इति अपमानितः। तत् क्षम्यताम्। सोऽपि स्वर्गराज्योपमं तद्वस्त्रयुगलमासाद्य परं परितोषं गत्वा तमुवाच। भोः श्रेष्ठिन्! क्षान्तं मया ते तत्। तदस्य

---

(द) निवारितेन द्वारभवनप्रवेशाद् युष्माभिरिति शेषः। यथाऽहमिति। अहं यथा पूर्वमनेन स्वगृहात् अर्द्धचन्द्रं दत्त्वा निःसारितस्तथा यूयमपि अनेन कदाचित् अर्द्धचन्द्रं दत्त्वा निःसारणीया इति भावः।

अकुलीन इति। अत्र संसारे यः भूपालं राजानं सेवते, सः अकुलीनः असत्कुलप्रसूतोऽपि मूर्खोऽपि सम्मानहीनोऽपि सर्वत्र पूज्यते ॥ १५९ ॥

अपीति। नृपतिसेवकः मानवः यदि कापुरुषः नीचः तथा भीरुः कातरस्वभावोऽपि स्यात् तथापि जनात् पराभूतिं पराभवं नाप्नोति ॥ १६० ॥

(ध) विलक्षमानाः सलज्जः।

(न) गतप्रभावः सम्भ्रमहीनः प्राक् राजानुग्रहेण प्रभाववान् आसीत् साम्प्रतं तदभावात् न तथा इति भावः।

(प) रागवशात् क्रोधवशात्।

सम्मानस्य कृते पश्य मे बुद्धिप्रभावं राजप्रसादञ्च। एवमुक्त्वा सपरितोषं निष्क्रान्तः। साधु चेदम् उच्यते।

स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी चेष्टा तुलायष्टेः खलस्य च॥ १६१॥

ततश्च अन्येद्युः स गोरम्भो राजकुले गत्वा योगनिद्रां गतस्य भूपतेः सम्मार्जनक्रियां कुर्वन् इदमाह। अहोऽविवेकोऽस्मद्भूपतेः यत् पुरीषोत्सर्गमाचरन् चिर्भटीभक्षणं (फ) करोति। तच्छ्रुत्वा राजा सविस्मयं तमुवाच। रे रे गोरम्भ! किमप्रस्तुतं (ब) लपसि? गृहकर्मकरं मत्वा त्वां न व्यापादयामि। किं त्वया कदाचिदहमेवंविधं कर्म समाचरन् दृष्टः? सोऽब्रवीत्। देव! द्यूतासक्तस्य रात्रिजागरणेन सम्मार्जनं कुर्वाणस्य मम बलात् निद्रा समायाता। तया अधिष्ठितेन मया किञ्चिज्जल्पितम्, तन्न वेद्मि, तत्प्रसादं करोतु स्वामी निद्रापरवशस्येति। एवं श्रुत्वा राजा चिन्तितवान् यन्मया जन्मान्तरे पुरीषोत्सर्गं कुर्वता कदापि चिर्भटिका न भक्षिता। तत् यथा अयं व्यतिकरो (भ) असम्भाव्यो मम अनेन मूढेन व्याहृतः तथा दन्तिलस्य अपि इति निश्चयः।

---

स्तोकेनेति। अहो! आश्चर्यं तुलाकोटिः तौलदण्डाग्रभागस्य खलस्य च सुसदृशी प्रायेण अभिन्ना इत्यर्थः चेष्टा क्रिया, वृत्तिरिति पाठान्तरम्। तथाहि तुलाकोटिः खलश्च स्तोकेन अल्पेन उन्नतिम् आयाति, स्तोकेन अल्पेन अधोगतिं नतिमित्यर्थः आयाति च॥ १६१॥

(फ) अविवेकः विवेकशून्यत्वम्। अस्मद्भूपतेः अस्माकं नृपतेः। पुरीषोत्सर्गं मलत्यागम् आचरन् कुर्वन् चिर्भटी नाम फलविशेषः। (काँकुड़ इति भाषा) तस्याः भक्षणम्।

(ब) अप्रस्तुतम् असङ्गतमित्यर्थः।

(भ) व्यतिकरः सम्बन्धः।

तत् मया न युक्तं कृतं यत् स वराकः सम्मानेन वियोजितः न तादृक्पुरुषाणामेवंविधं चेष्टितं सम्भाव्यते। तदभावेन राजकृत्यानि पौरकृत्यानि च सर्वाणि शिथिलतां व्रजन्ति। एवमनेकधा विमृश्य दन्तिलं समाहूय निजाङ्गवस्त्राभरणादिभिः संयोज्य स्वाधिकारे नियोजयामास। अतोऽहं ब्रवीमि। यो न पूजयते गर्वादिति।

सञ्जीवक आह। भद्र! एवमेवैतत्। यद्भवता अभिहितं तदेव मया कर्त्तव्यमिति। एवमभिहिते दमनकः तमादाय पिङ्गलकसकाशमगमत्। आह च, देव! एष मया आनीतः स सञ्जीवकः। अधुना देवः प्रमाणम्। सञ्जीवकोऽपि तं सादरं प्रणम्य अग्रतः सविनयं स्थितः। पिङ्गलकोऽपि तस्य पीनायतककुद्मतो (म) नखकुलिशालङ्कृतं दक्षिणपाणिमुपरि दत्त्वा मानपुरःसरमुवाच। अपि शिवं भवतः? कुतः त्वमस्मिन् वने विजने समायातोऽसि? तेनापि आत्मवृत्तान्तः कथितः। यथा वर्द्धमानेन सह वियोगः सञ्जातस्तथा सर्वं निवेदितम्। तच्छ्रुत्वा पिङ्गलकः सादरतरं तमुवाच। वयस्य! न भेतव्यम्, मद्भुजपञ्जरपरिरक्षितेन (य) यथेच्छं त्वया अधुना वर्त्तितव्यम्, अन्यच्च नित्यं मत्समीपवर्त्तिना भाव्यं यतः कारणात् बह्वपायं (र) रौद्रसत्त्वनिषेवितं वनं गुरूणामपि सत्त्वानामसेव्यं (ल) कुतः शष्पभोजिनाम्? एवमुक्त्वा सकल-

---

(म) पीनेति। पीना स्थूला आयता दीर्घा या ककुद् सा अस्ति अस्येति तथाभूतस्य।

(य) मदिति। मम भुजः बाहुरेव पञ्जरः तेन तस्मिन् वा परिरक्षितः तेन।

(र) बह्वपायं बहुविपत्। रौद्रेति रौद्रैः भयङ्करैः सत्त्वैः श्वापदैरित्यर्थः निषेवितम् अधिष्ठितम्। गुरूणां महताम्। सत्त्वानां प्राणिनाम्।

(ल) असेव्यम् अनाश्रयणीयम्। शष्पभोजिनां नवतृणाशिनाम्।

मृगपरिवृतो यमुनाकच्छमवतीर्य्य उदकग्रहणं कृत्वा स्वेच्छया तदेव वनं प्रविष्टः। ततश्च करटकदमनकनिक्षिप्तराज्यभारः सञ्जीवकेन सह सुभाषितगोष्ठीमनुभवन् (व) आस्ते। अथवा साधु इदमुच्यते।

यदृच्छयाप्युपनतं सकृत्सज्जनसङ्गतम्।
भवत्यजरमत्यन्तं नाभ्यासक्रममीक्षते ॥ १६२ ॥

सञ्जीवकेनापि अनेकशास्त्रावगाहनात् उत्पन्नबुद्धिप्रागल्भ्येन (श) स्तोकैरेवाहोभिर्मूढ़मतिः पिङ्गलको धीमान् तथा कृतो यथारण्यधर्माद्वियोज्य ग्राम्यधर्मेषु नियोजितः। किं बहुना प्रत्यहं पिङ्गलकसञ्जीवकौ एव केवलं रहसि मन्त्रयतः। शेषः सर्वोऽपि मृगजनो दूरीभूतस्तिष्ठति। करटकदमनकौ अपि प्रवेशं न लभेते। अन्यच्च सिंहपराक्रमाभावात् सर्वोऽपि मृगजनः तौ च शृगालौ क्षुधाव्याधिबाधिता एकां दिशमाश्रित्य स्थिताः। उक्तञ्च।

फलहीनं नृपं भृत्याः कुलीनमपि चोन्नतम्।
सन्त्यज्यान्यत्र गच्छन्ति शुष्कं वृक्षमिवाण्डजाः ॥ १६३ ॥

---

(व) सुभाषितेति। सुष्ठु शोभनं भाषितम् आलापो यत्र तादृशी या गोष्ठी सभा, तया सुखम् इति यावत्। अनुभवन् भुञ्जानः।

यदृच्छयेति। यदृच्छया अकस्मात् महदपि उपनतम् उपस्थितं सज्जनसङ्गतं साधुसङ्गः अजरम् अक्षयम् अक्षयफलम् इत्यर्थः भवति, अत्यन्तं पुनः पुनः इत्यर्थः अभ्यासक्रमं न ईक्षते नापेक्षते इत्यर्थः सकृत् सङ्ग एव बहूपकारक इति भावः ॥ १६२ ॥

(श) अनेकशास्त्रावगाहनात् बहुशास्त्रपर्य्यालोचनात्। उत्पन्नेति। उत्पन्नं जातं बुद्धेः प्रागल्भ्यं यस्य तादृशेन। स्तोकैः अल्पैः।

फलहीनमिति। अण्डजाः पक्षिणः शुष्कं वृक्षमिव भृत्याः अनुजीविनः कुलीनमपि उन्नतञ्च नृपं फलहीनं सन्त्यज्य अन्यत्र गच्छन्ति ॥ १६३ ॥

तथाच । अपि सम्मानसंयुक्ताः कुलीना भक्तितत्पराः ।
वृत्तिभङ्गान्महीपालं त्यजन्त्येव हि सेवकाः ॥ १६४ ॥
अन्यच्च । कालातिक्रमणं वृत्तेर्यो न कुर्वीत भूपतिः ।
कदाचित्तं न मुञ्चन्ति भर्त्सिता अपि सेवकाः ॥१६५॥

तथा नु केवलं सेवका इत्यम्भूता यावत् समस्तमपि एतज्जगत् परस्परं भक्षणार्थं सामादिभिः उपायैः तिष्ठति (ष)। तद्यथा ।

देशानामुपरि क्ष्माभृदातुराणाञ्चिकित्सकाः ।
वणिजो ग्राहकाणां च मूर्खाणामपि पण्डिताः ॥ १६६ ॥
प्रमादिनां तथा चौरा भिक्षुका गृहमेधिनाम् ।
गणिकाः कामिनाञ्चैव सर्वलोकस्य शिल्पिनः ॥१६७॥
सामादिसज्जितैः पाशैः प्रतीक्षन्ते दिवानिशम् ।
उपजीवन्ति शक्त्या हि जलजा जलदानिव ॥ १६८ ॥

---

अपीति । सेवकाः भृत्याः सम्मानसंयुक्ताः कुलीनाः सत्कुलप्रसूताः तथा भक्तितत्पराः अनुरागवन्तोऽपि वृत्तेः जीविकाया भङ्गात् छेदात् अलाभात् इत्यर्थः महीपालं नृपं त्यजन्त्येव ॥ १६४ ॥

कालेति । यः भूपतिः वृत्तेः जीविकाया वेतनादेः इत्यर्थः कालातिक्रमणं न कुर्वीत, यथाकालं वृत्तिं विदध्यात् इत्यर्थः सेवकाः भृत्याः भर्त्सिताः तिरस्कृताः अपमानिता इत्यर्थः अपि कदाचित् तं नृपं न मुञ्चन्ति न त्यजन्ति ॥ १६५ ॥

(ष) सामादिभिः सामदानभेददण्डनामभिः चतुर्भिः उपायैः फलसिद्धिसाधनभूतैः इत्यर्थः ।

क्ष्माभृत इति । क्ष्माभृतः नृपतयः देशानां, चिकित्सकाः आतुराणां रोगिणां, वणिजः व्यवसायिनः ग्राहकाणां, पण्डिताः मूर्खाणां, चौराः प्रमादिनाम् अनवधानपराणां, भिक्षुकाः गृहमेधिनां गृहिणां, गणिकाः वेश्याः कामिनां, शिल्पिनः सर्वलोकस्य उपरि सामादिसज्जितैः सामादिभिः उपायैः कल्पितैः पाशैः चातुर्य्यैः इत्यर्थः दिवानिशं प्रतीक्षन्ते । देशानामित्यादिषु कर्मणि षष्ठी। स्वस्वजीविकार्थम् एते एतान् प्रति यतन्ते इति भावः । हि यतः जलजाः जलजीविनः

अथवा साधु इदमुच्यते।

सर्पाणाञ्च खलानाञ्च परद्रव्यापहारिणाम्।
अभिप्राया न सिध्यन्ति तेनेदं वर्त्तते जगत् ॥ १६९ ॥

अत्तुं वाञ्छति शाम्भवो गणपतेराखुं क्षुधार्त्तः फणी
तं च क्रौञ्चरिपोः शिखी गिरिसुतासिंहोऽपि नागाशनम्।
इत्थं यत्र परिग्रहस्य घटना शम्भोरपि स्याद् गृहे
तत्रान्यस्य कथं न भावि? जगतो यस्मात् स्वरूपं हि तत् ॥१७०॥

ततः स्वामिप्रसादरहितौ क्षुत्क्षामकण्ठौ परस्परं करटकदमनकौ मन्त्रयेते। तत्र दमनको ब्रूते। आर्य्य करटक! आवां तावदप्रधानतां गतौ। एष पिङ्गलकः सञ्जीवकानुरक्तः स्वव्यापारपराङ्मुखः (स) सञ्जातः। सर्वोऽपि परिजनो गतः। तत्किं क्रियते?। करटक आह। यद्यपि त्वदीयवचनं न

---

व्रीहिप्रभृतय इत्यर्थः जलदानिव मेघानिव सर्वे इति अध्याहार्य्यं शक्तान् उपजीवनक्षमान् जनान् उपजीवन्ति उपजीव्य तिष्ठन्ति इत्यर्थः॥ १६६—१६८॥

सर्पाणामिति। सर्पाणाञ्च खलानाञ्च तथा परद्रव्यापहारिणाञ्च अभिप्रायाः मनोरथाः न सिद्ध्यन्ति, तेन कारणेन इदं जगत् वर्त्तते तिष्ठति रक्षां प्राप्नोति इत्यर्थः॥ १६९॥

अत्तुमिति। शाम्भवः शैवः फणी पन्नगः क्षुधार्त्तः सन् गणपतेः आखुं मूषिकं वाहनभूतमिति भावः। अत्तुं भक्षयितुं वाञ्छति कामयते। क्रौञ्चरिपोः क्रौञ्चपर्वतदारिणः कुमारस्येत्यर्थः कुमारः क्रौञ्चदारण इत्यमरः। शिखी मयूरः वाहनभूत इति भावः। तं फणिनञ्च अत्तुं वाञ्छतीत्यनेनानुषङ्गः। गिरिसुतासिंहोऽपि देवीवाहनोऽपि नागाशनं मयूरम् अत्तुं वाञ्छतीत्यनेनानुषङ्गः। यत्र यदेत्यर्थः शम्भोरपि गृहे इत्थं परिग्रहस्य परस्पराक्रमणस्य घटना स्यात्, तत्र तदा अन्यस्य गृहे इति शेषः कथं न भावि? न भविष्यति? सर्व्वस्यैव गृहे इत्थं घटना अवश्यं भाविनीति भावः। यस्मात् जगतः स्वरूपं हि तत्, परस्परोपजीव्यजीवकरूपमिति भावः॥ १७०॥

(स) स्वव्यापारपराङ्मुखः निजकार्य्यविमुखः।

करोति तथापि स्वामी स्वदोषनाशाय (ङ) वाच्यः। उक्तञ्च।

अशृण्वन्नपि बोद्धव्यो मन्त्रिभिः पृथिवीपतिः।
यथा स्वदोषनाशाय विदुरेणाम्बिकासुतः॥ १७१॥

तथाच, मदोन्मत्तस्य भूपस्य कुञ्जरस्य च गच्छतः।
उन्मार्गं वाच्यतां यान्ति महामात्राः समीपगाः॥१७२॥

तत् त्वया एष शष्पभोजी स्वामिनः सकाशमानीतः। तत्स्वहस्तेन अङ्गाराः कर्षिताः (च) दमनक आह। सत्यमेतत्। मम अयं दोषो न स्वामिनः। उक्तञ्च,

जम्बूको हुडुयुद्धेन वयं चाषाढ़भूतिना।
दूतिका परकार्य्येण त्रयो दोषाः स्वयंकृताः॥ १७३॥

करटक आह, कथमेतत्? सोऽब्रवीत्।

## कथा ४।

अस्ति कस्मिंश्चिद्विविक्तप्रदेशे मठायतनम् (छ) तत्र देव-

---

(ङ) स्वदोषनाशाय स्वकर्त्तव्याकरणमेव स्वदोषः स्वकर्त्तव्यस्य स्वामिने सदुपदेशदानं तस्य स्वदोषस्य नाशाय शोधनाय चालनाय इत्यर्थः।

अशृण्वन् इति। अशृण्वन् अपि हितवचनमनाकर्णयन् अपि पृथिवीपतिः मन्त्रिभिः स्वदोषनाशाय विदुरेण अम्बिकासुतः धृतराष्ट्रः यथा बोद्धव्यः हितवचनं श्रावयितव्यः॥ १७१॥

मदोन्मत्तस्येति। मदोन्मत्तस्य मदोद्धतस्य भूपस्य नृपतेः उन्मार्गं गच्छतः कुञ्जरस्य हस्तिनश्च समीपगाः सन्निहिताः महामात्रा- महामन्त्रिणः हस्तिपकाश्च वाच्यतां निन्द्यतां शोचनीयतामिति भावः यान्ति प्राप्नुवन्ति। विपद्यन्ते इति भावः॥ १७२॥

(च) कर्षिताः गृहीताः।

जम्बूक इति। जम्बूकः कश्चित् शृगालः हुडुयुद्धेन हत इति शेषः वयम् आषाढ़भूतिना हृता इति शेषः तथा दूतिका परकार्य्येण हतेति शेषः त्रिभिः स्वयं दोषाः कृताः॥ १७३॥

(छ) मठायतनं मठः सन्न्यासिनामाश्रमः स एव आयतनं स्थानम्।

शर्मा नाम परिव्राजकः (ख) प्रतिवसति स्म। तस्य अनेकसाधुजनदत्तसूक्ष्मवस्त्रविक्रयवशात् (ग) कालेन महती वित्तमात्रा (घ) सञ्जाता। ततः स न कस्यचित् विश्वसिति। नक्तन्दिनं (ङ) कक्षान्तरात् तां मात्रां न मुञ्चति। अथवा साधु च इदमुच्यते।

अर्थानामर्जने दुःखमर्जितानाञ्च रक्षणे।
आये दुःखं व्यये दुःखं धिक्! अर्थाः कष्टसंश्रयाः ॥१७४॥

अथ आषाढ़भूतिर्नाम परवित्तापहारी (च) धूर्त्तः तामर्थमात्रां तस्य कक्षान्तरगतां लक्षयित्वा व्यचिन्तयत्। कथं मया अस्य इयमर्थमात्रा हर्त्तव्येति। तदत्र मठे तावद्दृढ़शिलासञ्चयवशात् भित्तिभेदो (छ) न भवति उच्चैस्तरत्वाच्च द्वारे प्रवेशो न स्यात्। तदेनं मायावचनैः विश्वास्य अहं छात्रतां (ज)

---

(ख) परिव्राजकः सन्यासी।

(ग) अनेकेति। अनेकैः साधुजनैः दत्तानां सूक्ष्मवस्त्राणां विक्रयवशात् विक्रयात् इत्यर्थः।

(घ) वित्तमात्रा धनपरिमाणम् अर्थस्थली वा।

(ङ) नक्तन्दिनं रात्रिन्दिनम्। कक्षान्तरात् कक्षस्य बाहुनिम्नदेशस्य अन्तरात् मध्यात्।

अर्थानामिति। अर्थानां धनानाम् अर्जने उपार्जने दुःखम्। अर्जितानाञ्च अर्थानां रक्षणे दुःखम्। आये कुतश्चित् प्रदेशात् आगमने आनयने इति यावत् दुःखं पथि दस्युभयादिति भावः। व्यये विनियोगे दुःखं तस्मात् अर्थाः कष्टसंश्रयाः क्लेशनिबन्धनाः। अतः तान् धिक्! धिगर्थान् कष्टसंश्रयानिति वा पाठः। तथात्वे कष्टसंश्रयान् अर्थान् धिक् निन्दामीत्यर्थः धिक् निर्भर्त्सननिन्दयोरित्यमरः ॥ १७४ ॥

(च) परवित्तापहारी चौर इत्यर्थः।

(छ) दृढ़ेति। दृढ़ः कठिनः यः शिलासञ्चयः प्रस्तरराशिः तद्वशात् दृढ़ेन प्रस्तरसञ्चयेन निर्मितत्वादिति भावः। भित्तिभेदः सन्धिच्छेद इत्यर्थः।

(ज) मायावचनैः कपटवाक्यैः। छात्रतां शिष्यत्वम्।

व्रजामि येन स विश्वस्तः कदाचित् विश्वासम् एति। उक्तञ्च,

निःस्पृहो नाधिकारी स्यान्नाकामी मण्डनप्रियः।
नाविदग्धः प्रियं ब्रूयात् स्फुटवक्ता न वञ्चकः॥ १७५॥

एवं निश्चित्य तस्यान्तिकम् उपगम्य ओम् नमः शिवायेति प्रोच्चार्य्य साष्टाङ्गं प्रणम्य च सप्रश्रयमुवाच। भगवन्! असारः (झ) संसारोऽयं, गिरिनदीवेगोपमं यौवनं, तृणाग्निसमं (ञ) जीवितं, शरदभ्रच्छायासदृशा भोगाः, स्वप्नसदृशो मित्रपुत्रकलत्रभृत्यवर्गसम्बन्धः। एवं मया सम्यक् परिज्ञातम्। तत् किं कुर्वतो मे संसारसमुद्रोत्तरणं भविष्यति?। तच्छ्रुत्वा देवशर्म्मा सादरमाह। वत्स! धन्योऽसि यत्प्रथमे वयसि एवं विरक्तिभावः (ठ)। उक्तञ्च,

पूर्वे वयसि यः शान्तः स शान्त इति मे मतिः।
धातुषु क्षीयमाणेषु शमः कस्य न जायते?॥ १७६॥

---

निष्पृह इति। निष्पृहः निराकाङ्क्षः जनः अधिकारी अधिकारे नियुक्तः न स्यात्, अकामी कामरहितः जनः मण्डनप्रियः भूषणप्रियः न स्यात्। अविदग्धः अचतुरः अविचक्षण इत्यर्थः प्रियं न ब्रूयात् प्रियवचने न समर्थः स्यात् इत्यर्थः, तथा स्फुटवक्ता स्पष्टवादी वञ्चकः प्रतारकः न स्यात्॥ १७५॥

(झ) असारः नास्ति सारः उत्कर्षः यत्र तथोक्तः।

(ञ) तृणाग्निसमं तृणाग्निः यथा क्षणेनैव निर्वाणमेति तद्वद् इत्यर्थः।

(ट) शरदिति। शरदि शरत्काले या अभ्रच्छायाः मेघच्छायाः तत्सदृशाः क्षणध्वंसिन इति भावः भोगाः सुखानि।

(ठ) विरक्तिभावः संसारे विरागः।

पूर्वे इति। यः पूर्वे प्रथमे वयसि यौवने इत्यर्थः शान्तः शमपरः, स एव शान्त इति मे मम मतिः। धातुषु रसरक्तादिषु क्षीयमाणेषु क्रमेण वयोबाहुल्यात् क्षीणतां व्रजत्सु इत्यर्थः कस्य जनस्य शमः संसारविरागः न जायते? सर्वस्यैव इत्यर्थः॥ १७६॥

आदौ चित्ते ततः काये सतां सम्पद्यते जरा।
असतान्तु पुनः काये नैव चित्ते कदाचन ॥ १७७ ॥

यच्च मां संसारसागरोत्तरणोपायं पृच्छसि तत् श्रूयताम्।

शूद्रो वा यदि वान्योऽपि चण्डालोऽपि जटाधरः।
दीक्षितः शिवमन्त्रेण स भस्माङ्गी शिवो भवेत् ॥ १७८ ॥
षड़क्षरेण मन्त्रेण पुष्पमेकमपि स्वयम्।
लिङ्गस्य मूर्ध्नि यो दद्यान्न स भूयोऽभिजायते ॥ १७९ ॥

तत् श्रुत्वा आषाढ़भूतिः तत्पादौ गृहीत्वा सप्रश्रयमिदमाह। भगवन्! तर्हि दीक्षया मे अनुग्रहं कुरु। देवशर्मा आह। वत्स! अनुग्रहं ते करिष्यामि परन्तु रात्रौ त्वया मठमध्ये न प्रवेष्टव्यं यत्कारणं निःसङ्गता यतीनां प्रशस्यते तव च ममापि च (ङ)। उक्तञ्च,

दुर्मन्त्रात् नृपतिर्विनश्यति यतिः सङ्गात् सुतो लालनात्
विप्रोऽनध्ययनात् कुलं कुतनयात् शीलं खलोपासनात्।

---

आदाविति। सतां साधूनां जरा वार्द्धक्यम् आदौ चित्ते मनसि, ततः अनन्तरं काये शरीरे सम्पद्यते जायते। असतान्तु दुर्जनानान्तु काये जरा सम्पद्यते, कदाचन, चित्ते मनसि नैव तेषां मनः कदाचिदपि न जीर्य्यति इत्यर्थः ॥१७७॥

शूद्र इति। शूद्रः वा अन्यः शूद्रभिन्नो निकृष्टजातिर्वा चण्डालोऽपि वा यदि शिवमन्त्रेण दीक्षितः सन् जटाधरः भस्माङ्गी भूतिभूषिताङ्गः भवेत् तदा स शिवो भवेत् ॥ १७८ ॥

षड़क्षरेणेति। यः स्वयं षड़क्षरेण ओँ नमः शिवायेति रूपेण मन्त्रेण एकमपि पुष्पं लिङ्गस्य शैवस्येति भावः मूर्ध्नि शिरसि दद्यात्, सः भूयः पुनः न अभिजायते नास्य पुनर्जन्म इत्यर्थः ॥ १७९ ॥

(ङ) यत्कारणं यत इत्यर्थः। निःसङ्गता सङ्गराहित्यं यतीनां सन्न्यासिनाम्। तव च ममापि च उभयोरपि सन्न्यासित्वादिति भावः सन्न्यासिनः एकाकिन एव विजने तिष्ठन्तीति भावः।

दुर्मन्त्रादिति। नृपतिः दुर्मन्त्रात् दुष्टमन्त्रिवचनात् इत्यर्थः, यतिः सन्न्यासी सङ्गात् अपरसंसर्गात्, सुतः पुत्रः लालनात् आदरेण प्रतिपालनात्, विप्रः

मैत्री चाप्रणयात् समृद्धिरनयात् स्नेहः प्रवासाश्रयात्
स्त्री गर्वात् अनवेक्षणादपि कृषिस्त्यागात् प्रमादाद्धनम् ॥१८०॥

तत् त्वया व्रतग्रहणानन्तरं मठद्वारे तृणकुटीरके (ढ) शयितव्यम् इति। स आह, भगवन्! भवदादेशः प्रमाणम्। परत्र (ण) हि तेन मे प्रयोजनम्। अथ कृतशयनसमयं (त) देवशर्मा अनुग्रहं कृत्वा शास्त्रोक्तविधिना शिष्यताम् अनयत्। सोऽपि हस्तपादावमर्दनादिपरिचर्य्यया (थ) तं परितोषमनयत्। पुनः तथापि मुनिः कक्षान्तरात् मात्रां न मुञ्चति। अथ एवं गच्छति काले आषाढ़भूतिः चिन्तयामास। अहो! न कथञ्चिदेष मे विश्वासमागच्छति। तत् किं दिवापि शस्त्रेण मारयामि, किं वा विषं प्रयच्छामि, किं वा पशुधर्मेण (द) व्यापादयामि। इत्येवं चिन्तयतस्तस्य देवशर्म्मणोऽपि शिष्यपुत्रः कश्चिद्ग्रामात् आमन्त्रणार्थं (ध) समायातः। प्राह च भगवन्! पवित्रारोपणकृते (न) मम गृहम् आगम्यताम् इति। तच्छ्रुत्वा देवशर्मा आषाढ़भूतिना

---

अनध्ययनात् अध्ययनवर्जनात्, कुलं कुतनयात् कुपुत्रात् शीलं चरित्रं खलानां दुर्जनानाम् उपासनात् संसर्गात्, मैत्री सौहृद्यम् अप्रणयात् प्रीतिविरहात्, समृद्धिः सम्पद् अनयात् दुर्नीतेः स्नेहः प्रणयः प्रवासाश्रयात् भिन्नदेशावस्थानात्, श्रीः लक्ष्मीः गर्वात् अहङ्कारात्, कृषिः अनवेक्षणात् अदर्शनात् धनं त्यागात् दानात् व्ययाद्वा तथा प्रमादात् अनवधानवशात् विनश्यतीति सर्वत्र अनुषज्यते ॥ १८० ॥

(ढ) तृणकुटीरके तृणनिर्मिते कुटीरे इत्यर्थः।

(ण) परत्र परस्मिन् लोके हितेन मङ्गलेन। केवलं परलोकमङ्गलमहं कामये नान्यदिति भावः।

(त) कृतशयनसमयं कृतशयननियमम्।

(थ) हस्तेति। हस्तपादानाम् अवमर्दनादिपरिचर्य्यया संवाहनेन इत्यर्थः।

(द) पशुधर्मेण हस्तपदादिप्रहारेणेति भावः।

(ध) आमन्त्रणार्थं कस्मैचित् कार्य्याय आह्वानविशेष आमन्त्रणं तदर्थम्।

(न) पवित्रारोपणकृते यज्ञोपवीतदानार्थम् इत्यर्थः।

सह प्रहृष्टमनाः प्रस्थितः। अथ एवं तस्य गच्छतोऽग्रे काचित् नदी समायाता। तां दृष्ट्वा मात्रां कक्षान्तरात् अवतार्य्य कन्थामध्ये सुगुप्तां निधाय स्नात्वा देवार्चनं विधाय तदनन्तरम् आषाढ़भूतिम् इदमाह। भो आषाढ़भूते! यावदहं पुरीषोत्सर्गं कृत्वा समागच्छामि तावदेषा कन्था योगेश्वरस्य (प) सावधानतया रक्षणीया, इत्युक्त्वा गतः। आषाढ़भूतिरपि तस्मिन् अदर्शनीभूते मात्रामादाय सत्वरं प्रस्थितः। देवशर्म्मापि छात्रगुणानुरञ्जितमनाः सुविश्वस्तो यावदुपविष्टः (फ) तिष्ठति तावत् सुवर्णरोमदेहयूथमध्ये हुडुयुद्धमपश्यत् (ब)। अथ रोषवशात् हुड़युगलस्य दूरमपसरणं (भ) कृत्वा भूयोऽपि समुपेत्य ललाटपट्टाभ्यां प्रहरतो भूरि रुधिरं पतति। तच्च जम्बूको जिह्वालौल्येन रङ्गभूमिं प्रविश्य आस्वादयति (म)। देवशर्म्मापि तदालोक्य व्यचिन्तयत्। अहो! मन्दमतिः अयं जम्बूकः यदि कथमपि अनयोः सङ्घट्टे (य) पतिष्यति तन्नूनं मृत्युमवाप्स्यतीति वितर्कयामि। क्षणान्तरे च तथैव रक्तास्वादनलौल्यात् (र) मध्ये प्रविशन् तयोः शिरःसम्पाते पतितो

---

(प) योगेश्वरस्य योगिनो ममेत्यर्थः।

(फ) छात्रेति। छात्रस्य आषाढ़भूतेः गुणेन परिचर्य्यया इत्यर्थः अनुरञ्जितम् आप्यायितं मनो यस्य तथाभूतः। उपविष्टः मलत्यागार्थमिति शेषः।

(ब) सुवर्णेति। सुवर्णानि रोमाणि यस्य तादृशो देहो येषां तादृशानां जन्तुविशेषाणामित्यर्थः यत् यूथं वर्गः, तन्मध्ये हुडुनाम्नोः जीवभेदयोः युद्धम्।

(भ) दूरमत्यन्तम् अपसरणं पश्चाद्भागे निवर्त्तनम्।

(म) जिह्वालौल्येन रसनाचापल्येन। रङ्गभूमिं युद्धस्थानम् आस्वादयति लेढ़ि पिबतीत्यर्थः।

(य) सङ्घट्टे सम्मर्दे।

(र) रक्तेति। रक्तस्य आस्वादने यत् लौल्यं चापल्यं तस्मात्।

मृतश्च शृगालः। देवशर्मापि तं शोचमानो मात्राम् (ल) उद्दिश्य शनैः शनैः प्रस्थितो यावदाषाढ़भूतिं न पश्यति ततश्च औत्सुक्येन शौचं विधाय यावत् कन्थामालोकयति तावत् मात्रां न पश्यति। ततश्च हा! हा! मुषितोऽस्मीति जल्पन् पृथिवीतले मूर्च्छया निपपात। ततः क्षणात् चेतनां लब्ध्वा भूयोऽपि समुत्थाय फूत्कर्तुम् (व) आरब्धः। भो आषाढ़भूते! क्व मां वञ्चयित्वा गतोऽसि। तत् देहि मे प्रतिवचनम्। एवं बहु विलप्य तस्य पदपद्धतिम् (श) अन्वेषयन् शनैः शनैः प्रस्थितः। अथ एवं गच्छन् सायन्तनसमये कञ्चिद् ग्रामम् आससाद। अथ तस्मात् ग्रामात् कश्चित् कौलिकः (ष) सभार्य्यो मद्यपानकृते समीपवर्त्तिनि नगरे प्रस्थितः। देवशर्मापि तमालोक्य प्रोवाच। भो भद्र! वयं सूर्य्योढ़ा (स) अतिथयः तवान्तिकं प्राप्ताः न कमपि अत्र ग्रामे जानीमः। तत् गृह्यताम् अतिथिधर्मः (ह)। उक्तञ्च,

सम्प्राप्तो योऽतिथिः सायं सूर्य्योढ़ो गृहमेधिनाम्।
पूजया तस्य देवत्वं प्रयान्ति गृहमेधिनः॥ १८१॥

---

(ल) मात्राम् अर्थस्थलीम्।
(व) फूत्कर्त्तुम् आह्वातुम्।
(श) पदपद्धतिं पदचिह्नम्।
(ष) कौलिकः तान्तु इति प्रसिद्धो जातिविशेषो वा।
(स) सूर्य्योढ़ाः सूर्य्यास्तगमनकालोपस्थिता इत्यर्थः। तादृशस्यातिथेः परिचर्य्यायां फलाधिक्यं श्रूयते इति भावः।
(ह) अतिथिधर्मः आतिथेयता।

सम्प्राप्त इति। यः सूर्य्योढ़ः अतिथिः सायं गृहमेधिनां गृहे इति शेषः सम्प्राप्तः उपस्थितः, गृहमेधिनः गृहिणः तस्य पूजया सत्कारेण देवत्वं प्रयान्ति॥ १८१॥

तथाच, तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
सतामेतानि हर्म्येषु नोच्छिद्यन्ते कदाचन ॥१८२॥
स्वागतेनाग्नयस्तृप्ता आसनेन शतक्रतुः।
पादशौचेन पितरः अर्घाच्छम्भुस्तथातिथेः ॥ १८३ ॥

कौलिकोऽपि तच्छ्रुत्वा भार्य्यामाह। प्रिये! गच्छ त्वम् अतिथिम् आदाय गृहं प्रति। पादशौचभोजनशयनादिभिः सत्कृत्य त्वं तत्रैव तिष्ठ अहं तव कृते प्रभूतं मद्यमानेष्यामि। एवमुक्त्वा प्रस्थितः। सापि भार्य्या पुंश्चली तमादाय प्रहसितवदना देवदत्तं (च) मनसि ध्यायन्ती गृहं प्रति प्रतस्थे। अथवा साधु च इदमुच्यते,

दुर्दिवसे घनतिमिरे दुःसञ्चारासु घनवीथीषु।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः ॥ १८४ ॥

---

सेवाद्रव्याभावेऽपि कथञ्चित् परिचर्य्या सम्भवतीत्याह तृणानीति। तृणानि आसनोपयोगीनीति भावः, भूमिः आश्रयः, उदकं जलं पादप्रक्षालनाद्यर्थमिति भावः चतुर्थी सूनृता सत्यमधुरा वाक् च एतानि सतां साधूनां गेहेषु कदाचन न उच्छिद्यन्ते न निराक्रियन्ते इत्यर्थः। एतैरपि अतिथिः पूजनीय इति भावः ॥ १८२ ॥

स्वागतेनेति। अतिथेः स्वागतेन शुभागमनप्रश्नेन अग्नयः तृप्ताः भवन्ति, आसनेन आसनदानेन इत्यर्थः शतक्रतुरिन्द्रः तृप्तः भवति, पादशौचेन पादप्रक्षालनेन पितरः गृहस्थस्येति भावः तृप्ताः भवन्ति, अर्घात् पूजनात् शम्भुः शिवः तृप्तो भवति सर्व्वत्रातिथेरिति सम्बध्यते ॥ १८३ ॥

(च) पुंश्चली कुलटा। प्रहसितवदना हसन्मुखी स्वाभिप्रायसिद्धेः सौकर्य्यात् इति भावः। देवदत्तं तदाख्यं जारम्।

दुर्दिवसे इति। दुर्दिवसे दुर्दिने मेघाच्छन्नेऽह्नीत्यर्थः मेघाच्छन्नेऽह्नि दुर्दिनम् इत्यमरः। घनतिमिरे निविड़ान्धकारे, नगरवीथीषु नगरमार्गेषु दुःसञ्चारासु सञ्चरितुमशक्यासु तथा पत्युः विदेशगमने सति जघनचपलायाः सुरतोत्सुकायाः इति भावः। परमसुखम् अत्यन्तं सुखम् अविघ्नेन मनोरथसिद्धेरिति भावः। आर्य्यावृत्तम् ॥ १८४ ॥

तथाच, पर्य्यङ्केष्वास्तरणं पतिमनुकूलं मनोहरं शयनम्।
तृणमिव लघु मन्यन्ते कामिन्यश्चौर्य्यरतलुब्धाः ॥१८५॥

तथाच,

केलिं प्रदहति लज्जा शृङ्गारोऽस्थीनि चाटवः कटवः।
बन्धक्याः परितोषो न किञ्चिदिष्टं भवेत्पत्यौ ॥ १८६ ॥

कुलपतनं जनगर्हां बन्धनमपि जीवितव्यसन्देहम्।
अङ्गीकरोति कुलटा सततं परपुरुषसंसक्ता ॥ १८७ ॥

अथ कौलिकभार्य्या गृहं गत्वा देवशर्मणि गतास्तरणां (क) भग्नाञ्च खट्वां समर्प्य इदमाह भो भगवन्! यावदहं स्वसखीं ग्रामादभ्यागतां सम्भाव्य (ख) द्रुतमागच्छामि तावत्त्वया मद्गृहेऽप्रमत्तेन (ग) भाव्यम्। एवमभिधाय शृङ्गारविधिं (घ)

---

पर्य्यङ्केष्विति। चौर्य्यरतलुब्धाः गोपने सुरतार्थिन्य इत्यर्थः कामिन्यः पर्य्यङ्केषु खट्वासु आस्तरणम् आच्छादनवसनम् अनुकूलं वशंवदं पतिं मनोहरं शयनं शय्याञ्च तृणमिव लघु अकिञ्चित्करमित्यर्थः मन्यन्ते। सर्वं सुखसाधनं गृहगतं वस्तु परित्यज्य अस्थानपतिताः जारं रमयन्तीति भावः। आर्य्यावृत्तम् ॥१८५॥

केलिरिति। बन्धक्याः कुलटायाः लज्जा पत्यौ केलिं क्रीड़ां सुरतमित्यर्थः प्रदहति पत्या सुरते समधिका लज्जा उपतिष्ठते इति भावः शृङ्गारः पतिकर्तृक-सुरतलीला इत्यर्थः अस्थीनि प्रदहति, न तेन सा सन्तुष्यतीति भावः, चाटवः प्रियवचनानि पत्युरिति भावः कटवः कर्कशा भवन्तीति शेषः। तस्मात् पत्यौ पतिविषये बन्धक्याः परितोषः न, नापि किञ्चित् भवेदिति सम्बन्धः। आर्य्या-वृत्तम् ॥ १८६ ॥

कुलपतनमिति। सततं परपुरुषसंसक्ता कुलटा बन्धकी कुलपतनं कुलकल-ङ्कमित्यर्थः जनगर्हां लोकनिन्दां बन्धनं स्वजनैः गृहे अवरोधनं जीवितव्यसन्देहं जीवनसंशयञ्च अङ्गीकरोति। आर्य्यावृत्तम् ॥ १८७ ॥

(क) गतास्तरणाम् आच्छादनशून्याम्।

(ख) सम्भाव्य अभिनन्द्य।

(ग) अप्रमत्तेन सावधानेन।

(घ) शृङ्गारविधिं शृङ्गारोचितानुष्ठानम्।

विधाय यावद्देवदत्तमुद्दिश्य व्रजति तावत् तद्भर्त्ता सम्मुखो मदविह्वलाङ्गो मुक्तकेशः पदे पदे प्रस्खलन् गृहीतमद्यभाण्डः समभ्येति। तञ्च दृष्ट्वा सा द्रुततरं व्याघुट्य (ङ) स्वगृहं प्रविश्य मुक्तशृङ्गारवेशा यथापूर्वम् अभवत्। कौलिकोऽपि तां पलायमानां कृताद्भुतशृङ्गारां (च) विलोक्य प्रागेव कर्णपरम्परया तस्याः श्रुतापवादक्षुभितहृदयः (छ) स्वाकारं निगूहमानः (ज) सदैवास्ते। ततश्च तथाविधं चेष्टितम् अवलोक्य दृष्टप्रत्ययः (झ) क्रोधवशगो गृहं प्रविश्य ताम् उवाच। आः पापे! पुंश्चलि! क्व प्रस्थितासि? सा प्रोवाच। अहं त्वत्सकाशात् आगता न कुत्रचिदपि निर्गता। तत् कथं मद्यपानवशात् अप्रस्तुतं (ञ) वदसि। अथवा साधु चेदमुच्यते।

वैकल्यं धरणीपातमयथोचितजल्पनम्।
सन्निपातस्य चिह्नानि मद्यं सर्वाणि दर्शयेत्॥ १८८॥
करस्पन्दोऽम्बरत्यागस्तेजोहानिः सरागता।
वारुणीसङ्गजावस्था भानुनाप्यनुभूयते॥ १८९॥

---

(ङ) व्याघुट्य परावृत्य।

(च) कृताद्भुतशृङ्गाराम् अनुष्ठितविचित्रशृङ्गारवेशाम् इत्यर्थः।

(छ) श्रुतेति। श्रुतेन अपवादेन कलङ्केन क्षुभितं दुःखितं हृदयं यस्य तथाभूतः।

(ज) स्वाकारं निजमाकारं विकृतभावमिति भावः। निगूहमानः सङ्गोपयन्।

(झ) दृष्टप्रत्ययः दृढ़प्रत्यय इति पाठान्तरम्। असन्दिग्ध इति भावः।

(ञ) अप्रस्तुतम् असङ्गतम्।

वैकल्यमिति। मद्यं सुरापानम् इत्यर्थः वैकल्यं विकृतेन्द्रियत्वं धरणीपातं भूपतनम् अयथोचितजल्पनम् असङ्गतं प्रलपनम् इत्यर्थः एतानि सर्वाणि सन्निपातस्य त्रिदोषजनितविकारस्य चिह्नानि दर्शयेत् प्रकाशयेत्॥ १८८॥

करस्पन्द इति। करस्पन्दः हस्तकम्पनं किरणस्फुरणञ्च अम्बरत्यागः वस्त्र-

सोऽपि तच्छ्रुत्वा प्रतिकूलवचनं वेशविपर्य्ययं च अवलोक्य तामाह। पुंश्चलि! चिरकालं श्रुतो मया तव अपवादः। तदद्य स्वयं सञ्जातप्रत्ययः तव यथोचितं निग्रहं करोमि इति अभिधाय लगुड़प्रहारैः तां जर्जरितदेहां विधाय स्थूणया (ट) सह दृढ़बन्धनेन बद्धा सोऽपि मदविह्वलो निद्रावशम् अगमत्। अत्रान्तरे तस्याः सखी नापिती कौलिकं निद्रावशगतं विज्ञाय तां गत्वा इदमाह। सखि! स देवदत्तः तस्मिन् स्थाने त्वां प्रतीक्षते तत् शीघ्रमागम्यतामिति। सा च आह। पश्य मम अवस्थाम्। तत्कथं गच्छामि? तद्गत्वा ब्रूहि तं कामिनं यत् अस्यां रात्रौ न त्वया सह समागमः। नापिती प्राह। सखि! मामैवं वद। न अयं कुलटाधर्म्मः (ठ)। उक्तञ्च,

विषमस्थस्वादुफलग्रहणव्यवसायनिश्चयो येषाम्।
उष्ट्राणामिव तेषां मन्येऽहं शंसितं जन्म॥ १९०॥

तथाच, सन्दिग्धे परलोके जनापवादे च जगति बहुचित्रे।
स्वाधीने पररमणे धन्यास्तारुण्यफलभाजः॥ १९१॥

---

त्यागः आकाशपरित्यागश्च, तेजोहानिः कान्तिह्रासः किरणह्रासश्च तथा सरागता रक्तवर्णता उभयत्र समानमेतत् वारुणी सुरा वरुणपालिता पश्चिमा दिक् च तत् सङ्गजा तत्पानजा तदाश्रयजा च पूर्वोक्ता अवस्था भानुनापि सूर्य्येणापि अन्येषां का कथेति भावः, अनुभूयते भुज्यते॥ १८९॥

(ट) स्थूणया गृहाधारदारुविशेषेण।

(ठ) कुलटाधर्मः कुलटाया रीतिः।

विषमेति। उष्ट्राणामिव येषां विषमस्थं दारुणस्थानस्थं यत् स्वादुफलं तस्य ग्रहणे यः व्यवसायः उद्यमः तत्र निश्चयः अवश्यमेव तादृशं फलं लभे इति निर्णय इत्यर्थः तेषां जन्म शंसितं प्रशंसितम् अहं मन्ये। दुर्लभलाभार्थी जनः प्रशस्यः, त्वमपि तथेति तव प्रशंसिरिति भावः। आर्य्यावृत्तम्॥ १९०॥

सन्दिग्धे इति। परलोके सन्दिग्धे सन्देहास्पदे अस्ति न वा इति सन्देह-

अन्यच्च।

यदि भवति दैवयोगात् पुमान् विरूपोऽपि बन्धकीरहसि।
न तु कृच्छ्रादपि भद्रं निजकान्तं सा भजत्येव ॥१९२॥

सा अब्रवीत्। यदि एवं तर्हि कथय कथं दृढ़बन्धनबद्धा सती तत्र गच्छामि। सन्निहितश्च अयं पापात्मा मत्पतिः। नापिती आह। सखि! मदविह्वलोऽयं सूर्य्यकरस्पृष्टः प्रबोधं (ड) यास्यति। तदहं त्वाम् उन्मोचयामि। माम् आत्मस्थाने बद्धा द्रुततरं देवदत्तं सम्भाव्य आगच्छ। सा अब्रवीत्। एवमस्तु इति। तदनु सा नापिती तां स्वसखीं बन्धनाद्विमोच्य तस्याः स्थाने यथापूर्वमात्मानं बद्धा तां देवदत्तसकाशे सङ्केतस्थानं प्रेषितवती। तथानुष्ठिते कौलिकः कस्मिंश्चित् क्षणे समुत्थाय किञ्चिद्गतकोपो विमदस्तामाह, हे परुषवादिनि! (ढ) यदि अद्यप्रभृति गृहात् निष्क्रमणं न करोषि न च परुषं वदसि ततः त्वाम् उन्मोचयामि। नापिती अपि स्वरभेदभयात् (ण) यावन्न किञ्चित् ऊचे तावत् सोऽपि भूयोभूयस्तां तदेव आह। अथ सा यावत् प्रत्युत्तरं किमपि न ददौ तावत् सः

---

युक्ते इत्यर्थः जगति जनापवादे लोकगर्हायां बहुचित्रे बह्वाश्चर्य्यवति जना यत्किञ्चिदलौकिकं व्यापारं दृष्ट्वैव चमत्कृताः तदपवदन्तीति भावः। स्वाधीने स्ववशे पररमणे परपुरुषरतौ सति धन्याः पुण्यवन्तः जनाः तारुण्यफलभाजः यौवनफलभोगिनः भवन्ति इत्यर्थः। आर्य्यावृत्तम् ॥ १९१ ॥

यदीति। बन्धकीरहसि बन्धक्या विजने देशे यदि विरूपोऽपि पुमान् दैवयोगात् भवति उपतिष्ठते, तदा सा कृच्छ्रादपि कष्टेऽपि क्लेशितापि इत्यर्थः भद्रं सुन्दरमपि निजकान्तं न तु भजत्येव। आर्य्यावृत्तम् ॥ १९२ ॥

(ड) सूर्य्यकरस्पृष्ट इति। सूर्य्यकिरणस्पर्शेन अस्य प्रबोधो भवतीति भावः।

(ढ) विमदः मत्तताशून्यः। परुषवादिनि! निष्ठुरभाषिणि!।

(ण) स्वरभेदभयात् कुलटायाः तस्याः स्वस्य च स्वरो भिन्नः, तेन असौ ज्ञास्यतीति भयादिति भावः।

प्रकुपितः तीक्ष्णशस्त्रमादाय नासिकाम् अच्छिनत् आह च, रे पुंश्चलि ! तिष्ठ इदानीं न त्वां भूयस्तोषयिष्यामीति जल्पन्, पुनरपि निद्रावशमगमत्। देवशर्मा अपि वित्तनाशात् क्षुत्क्षामकण्ठो नष्टनिद्रस्तत्सर्वं स्त्रीचरित्रमपश्यत्। सापि कौलिकभार्या यथेच्छया देवदत्तेन सह सुरतसुखमनुभूय कस्मिंश्चित् क्षणे स्वगृहमागत्य तां नापितीमिदमाह। अयि ! शिवं (त) भवत्याः ? नायं पापात्मा मम गताया उत्थितः। नापिती आह। शिवं नासिकया विना शेषस्य शरीरस्य। तद्द्रुतं मां मोचय बन्धनात्, यावन्नायं मां पश्यति येन स्वगृहं गच्छामि। तथा अनुष्ठिते भूयोऽपि कौलिक उत्थाय तामाह, पुंश्चलि ! किमद्यापि न वदसि। किं भूयोऽप्यतो दुष्टतरं निग्रहं कर्णच्छेदेन करोमि। अथ सा सकोपं साधिक्षेपमिदमाह (थ) धिक् धिक् महामूढ़ ! को मां महासतीं धर्षयितुं व्यङ्गयितुं (द) वा, समर्थः ? तत् शृण्वन्तु सर्वेऽपि लोकपालाः।

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम् ॥ १९३ ॥

---

(त) शिवं मङ्गलम्।

(थ) साधिक्षेपं सतिरस्कारम्।

(द) व्यङ्गयितुम् अङ्गविहीनां कर्तुम् इत्यर्थः।

आदित्येति। आदित्यचन्द्रौ सूर्याचन्द्रमसौ, अनिलो वायुः अनलः अग्निः, द्यौः आकाशं, भूमिः क्षितिः, आपो जलानि, हृदयम् अन्तःकरणं यमः अहः दिवसः, रात्रिः उभे द्वे प्रातः सायं रूपे इत्यर्थः सन्ध्ये च तथा धर्मश्च नरस्य वृत्तं चरितं जानाति। उपजातिवृत्तम् ॥ १९३ ॥

तद्यदि मम सतीत्वमस्ति मनसापि परपुरुषो न अभिलषितः ततो देवा भूयोऽपि मे नासिकां तादृग्रूपामक्षतां कुर्वन्तु। अथवा यदि मम चित्ते परपुरुषस्य भ्रान्तिरपि भवति मां भस्मसान्नयन्तु। एवमुक्त्वा भूयोऽपि तमाह। भो दुरात्मन्! पश्य मे सतीत्वप्रभावेण तादृशो एव नासिका संवृत्ता। अथ असौ उल्मुकमादाय (ध) यावत्पश्यति तावत् तद्रूपां नासिकाञ्च भूतले रक्तप्रवाहञ्च महान्तमपश्यत्। अथ स विस्मितमनास्तां बन्धनाद्विमुच्य शय्यायामारोप्य च चाटुशतैः (न) पर्य्यतोषयत्। देवशर्मा अपि तं सर्ववृत्तान्तमालोक्य विस्मितमना इदमाह।

शम्बरस्य च या माया या माया नमुचेरपि।
बलेः कुम्भीनसेश्चैव सर्वास्ता योषितो विदुः॥१९४॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्त्यपि।
अप्रियं प्रियवाक्यैश्च गृह्णन्ति कालयोगतः॥ १९५॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः।
स्त्रीबुद्ध्या न विशिष्येत तस्माद्रक्ष्याः कथं हि ताः?॥१९६॥

---

(ध) उल्मुकम् आलोकविशेषम् इत्यर्थः।

(न) चाटुशतैः प्रियवचनशतैः।

शम्बरस्येति। शम्बरस्य असुरभेदस्य या मायाः चातुर्य्यः, नमुचेरपि तदाख्यस्य असुरविशेषस्य च या मायाः बलेः बलिराजस्य कुम्भीनसेः तदाख्याया राक्षस्याश्च या मायाः ताः सर्वाः योषितः नार्य्यः विदुः विदन्ति बुधा इति शेषः॥१९४॥

हसन्तमिति। एताः नार्य्यः हसन्तं पुरुषं प्रहसन्ति, रुदन्तमपि प्ररुदन्ति अनुरुदन्ति इत्यर्थः, कालयोगतः समयवशात् अप्रियम् अननुरक्तम् जनं प्रियवाक्यैः मोहनवचनैः गृह्णन्ति वशीकुर्वन्ति च॥ १९५॥

उशनेति। उशना शुक्राचार्य्यः यत् शास्त्रं वेद जनाति, बृहस्पतिश्च यच्च शास्त्रं वेद, तत् स्त्रीबुद्ध्या न विशिष्येत, स्त्रीबुद्धिस्तत्सर्वं जानातीति भावः। तस्मात् ताः स्त्रियः कथं रक्ष्याः? रक्षणीयाः नैव निरोध्या इति भावः॥ १९६॥

अनृतं सत्यमित्याहुः सत्यं चापि तथानृतम् ।
इति यास्ताः कथं धीरैः संरक्ष्याः पुरुषैरिह ? ॥१९७॥

अन्यत्रापि उक्तम्,

नातिप्रसङ्गः प्रमदासु कार्यो नेच्छेद्बलं स्त्रीषु विवर्द्धमानम् ।
अतिप्रसक्तैः पुरुषैर्यतस्ताः क्रीड़न्ति काकैरिव लूनपक्षैः ॥१९८॥

सुमुखेन वदन्ति वल्गुना प्रहरन्त्येव शितेन चेतसा ।
मधु तिष्ठति वाचि योषितां हृदये हालहलं महद्विषम् ॥१९९॥

अतएव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ।
पुरुषैः सुखलेशवञ्चितैर्मधुलुब्धैः कमलं यथालिभिः ॥२००॥

अपि च,

आवर्त्तः संशयानामविनयभवनं पत्तनं साहसानां
दोषाणां सन्निधानं कपटशतगृहं क्षेत्रमप्रत्ययानाम् ।

---

अनृतमिति । याः अनृतम् असत्यं सत्यमिति तथा सत्यञ्च अनृतमिति आहुः, ताः धीरैः पुरुषैः इह संसारे कथं संरक्ष्याः ? नैव रक्षितुं शक्या इति भावः ॥ १९७ ॥

नेति । प्रमदासु नारीषु अतिप्रसङ्गः अत्यासक्तिः न कार्य्यः, स्त्रीषु विवर्द्धमानं विशेषेण वृद्धिं गच्छत् बलं न इच्छेत् धीर इति शेषः । विशेषासक्तिं न कुर्य्यादिति भावः । यतः ताः प्रमदाः अतिप्रसक्तैः अत्यनुरक्तैः पुरुषैः लूनपक्षैः छिन्नपक्षैः उड्डयनासमर्थैः इत्यर्थः काकैरिव क्रीड़न्ति । उपजातिवृत्तम् ॥१९८॥

सुमुखेनेति । एताः वल्गुना मनोहरेण सुमुखेन सुन्दरेण सुखेन वदन्ति आलपन्ति, शितेन तीक्ष्णेन चेतसा मनसा प्रहरन्ति, यतः योषितां वाचि मधु हृदये तु महत् हालहलं कालकूटं विषं तिष्ठति । अयुजोर्यदि सौ जगौ युजोः सभरा लगौ यदि सुन्दरी तदेति लक्षणात् ॥ १९९ ॥

अत इति । अतएव अस्मादेव कारणात् मुखे मधुसद्भावात् हृदये च विषसद्भावादिति भावः मधुलुब्धैः अलिभिः भ्रमरैः कमलं यथा पद्ममिव सुखलेशेन यत्किञ्चित्सुखलोभेनेति भावः वञ्चितैः विप्रलब्धैः पुरुषैः अधरः तासामिति शेषः निपीयते निःशेषेण आस्वाद्यते, हृदयन्तु मुष्टिभिरेव ताड्यते प्रह्रियते कुचमर्दनादिति भावः । सुन्दरीवृत्तम् ॥ २०० ॥

दुर्ग्राह्यं यन्महद्भिर्नरवरवृषभैः सर्वमायाकरण्डं
स्त्रीयन्त्रं केन लोके विषममृतयुतं धर्मनाशाय सृष्टम् ॥२०१॥
कार्कश्यं स्तनयोर्दृशो स्तरलतालीकं मुखे दृश्यते
कौटिल्यं कचसञ्चये प्रवचने मान्द्यं त्रिके स्थूलता।
भीरुत्वं हृदये सदैव कथितं मायाप्रयोगः प्रिये
यासां दोषगणो गुणा मृगदृशां ताः किं नराणां प्रियाः? ॥२०२॥

एता हसन्ति च रुदन्ति च कार्य्यहेतोः
विश्वासयन्ति च परं न च विश्वसन्ति।
तस्मान्नरेण कुलशीलवता सदैव
नार्य्यः श्मशानवटिका इव वर्जनीयाः ॥ २०३ ॥

---

आवर्त्त इति। लोके जगति केन जनेन अपरिवाध्याहार्य्यः। धर्मनाशाय संशयानां सन्देहानाम् आवर्त्तः भ्रमिस्थानं स्यादावर्त्तोऽम्भसां भ्रम इत्यमरः। अविनयस्य दुर्णयस्य भवनम् आश्रयः, साहसानां पत्तनं नगरविशेषः आलय इत्यर्थः दोषाणां सन्निधानं निकेतनमिति भावः कपटशतानां चातुरीशतानां गृहम्, अप्रत्ययानाम् अविश्वासानां चेत्रं स्थानं महद्भिः नरवरवृषभैः मानवश्रेष्ठैरित्यर्थः यत् दुर्ग्राह्यं ग्रहीतुमशक्यं वशीकर्त्तुमशक्यमित्यर्थः सर्वासां मायानां वञ्चनानां करण्डं पात्रविशेषः तथा अमृतयुतं विषं तत्स्वरूपमित्यर्थः स्त्रीयन्त्रं नारीरूपं यन्त्रं सृष्टम्। स्रग्धरावृत्तम् ॥ २०१ ॥

कार्कश्यमिति। यासां मृगदृशां स्तनयोः कार्कश्यं काठिन्यं, दृशोः नेत्रयोः तरलता चञ्चलता, मुखे अलीकम् असत्यं, कचसञ्चये केशनिचये कौटिल्यं वक्रता, प्रवचने आलापे मान्द्यं माधुर्य्यमित्यर्थः, त्रिके नितम्बे स्थूलता विशालता, पृष्ठवंशाधरे त्रिकमित्यमरः। हृदये भीरुत्वं भयशीलता, तथा प्रिये स्वामिनि कथितं वचनं मायाप्रयोगः इत्थं दोषगणः दोषसमूहः गुणाः भवतीति शेषः गुणत्वेन गृह्यते लोकैरिति भावः, ताः नराणां किं प्रियाः? नैव प्रियतामर्हन्ति सर्वदोषाकरत्वादिति भावः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २०२ ॥

एता इति। एताः नार्य्यः कार्य्यहेतोः स्वकार्य्यार्थं हसन्ति च रुदन्ति च विश्वासयन्ति विश्वस्तं कारयन्ति च, परं न च विश्वसन्ति स्वयमिति शेषः। तस्मात् कुलशीलवता कुलीनेन सुशीलेन च इत्यर्थः नरेण नार्य्यः श्मशानवटिका

व्याकीर्णकेशरकरालमुखा मृगेन्द्रा
नागाश्च भूरिमदराजिविराजमानाः।
मेधाविनश्च पुरुषाः समरेषु शूराः
स्त्रीसन्निधौ परमकापुरुषा भवन्ति ॥ २०४ ॥

कुर्वन्ति तावत्प्रथमं प्रियाणि यावन्न जानन्ति नरं प्रसक्तम्।
ज्ञात्वा च तं मन्मथपाशबद्धं ग्रस्तामिषं मीनमिवोद्धरन्ति॥२०५॥

समुद्रवीचीव चलस्वभावाः सन्ध्याभ्ररेखेव मुहूर्त्तरागाः।
स्त्रियः कृतार्थाः पुरुषं निरर्थं निष्पीड़ितालक्तकवत्त्यजन्ति॥२०६॥

अनृतं साहसं माया मूर्खत्वमतिलोभता।
अशौचं निर्दयत्वञ्च स्त्रीणां दोषाः स्वभावजाः ॥२०७॥

---

इव श्मशानस्था वटतरव इव सदैव वर्ज्जनीयाः परिहरणीया इत्यर्थः। वसन्त-तिलकं वृत्तम् ॥ २०३ ॥

व्याकीर्णेति। व्याकीर्णैः विशेषेण इतस्ततो विलुलितैः केशरैः जटाभिः। जटा केशरयोरित्यमरः। करालानि भीषणानि मुखानि येषां तथोक्ताः मृगेन्द्राः सिंहाः, भूरिभिः बहुभिः मदराजिभिः मदधाराभिरित्यर्थः विराजमानाः विशेषेण शोभमानाः मदस्राविण इत्यर्थः नागा हस्तिनश्च तथा समरेषु संग्रामेषु शूराः महावीराः मेधाविनो बुद्धिमन्तः पुरुषाश्च स्त्रीसन्निधौ नारीसमीपे परमकापुरुषाः अतिनीचा इत्यर्थः भवन्ति। वसन्ततिलकं वृत्तम् ॥ २०४ ॥

कुर्वन्तीति। यावत् नरं पुरुषं प्रसक्तं प्रकृष्टानुरागिणं न जानन्ति न बुध्यन्ते, तावत् प्रथमं प्रियाणि कुर्वन्ति प्रियकार्य्येण पुरुषं रञ्जयन्तीति भावः। ततः तं पुरुषं मन्मथपाशेन कामरज्ज्वा बद्धम् अतएव ग्रस्तं गिलितम् आमिषं भोग्यवस्तु-विशेषः येन तथाभूतं मीनमिव मत्स्यमिव ज्ञात्वा उद्धरन्ति व्यापादयन्तीति भावः। इन्द्रवज्रावृत्तम् ॥ २०५ ॥

समुद्रेति। समुद्रस्य वीचीव तरङ्ग इव चलस्वभावाः चपलप्रकृतयः, सन्ध्या-भ्ररेखेव सन्ध्याकालीनमेघरेखेव मुहूर्त्तरागाः प्रथममनुरागदर्शिन्य इत्यर्थः अन्यत्र अपरक्ता, स्त्रियः ततः कृतार्थाः सिद्धकामाः सत्यः निरर्थं निर्धनं पुरुषं निष्पी-ड़ितं निःशेषेण निर्गलितरसं यत् अलक्तकं तद्वत् त्यजन्ति। उपजातिवृत्तम् ॥२०६॥

अनृतमिति। अनृतम् असत्यभाषणं साहसम् अविमृष्यकारित्वं माया मोहन-

सम्मोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति।
एताः प्रविश्य सरलं हृदयं नराणां
किं वा न वामनयना न समाचरन्ति ? ॥२०८॥
अन्तर्विषमया ह्येता वहिश्चैव मनोरमाः।
गुञ्जाफलसमाकारा योषितः केन निर्मिताः ॥२०९॥

एवं चिन्तयतः तस्य परिव्राजकस्य सा निशा महता कृच्छ्रेण अतिचक्राम। सा च दूतिका छिन्ननासिका स्वगृहं गत्वा चिन्तयामास। किमिदानीं कर्त्तव्यम्। कथमेतत् महच्छिद्रं स्थगयितव्यम् (प) अथ तस्या एवं विचिन्तयन्त्या भर्त्ता कार्य्यवशात् राजकुले पर्य्युषितः (फ) प्रत्यूषे च स्वगृहमभ्युपेत्य द्वारदेशस्थः विविधपौरकृत्योत्सुकतया तामाह। भद्रे ! शीघ्रमानीयतां क्षुरभाण्डं येन क्षौरकर्मकरणाय

---

व्यवहारविशेषः मूर्खत्वम् अज्ञानम् अतिलोभता, अशौचं शुद्धिरभावः समलत्वमित्यर्थः निर्दयत्वं निष्ठुरत्वञ्च एते स्त्रीणां स्वभावजाः स्वाभाविकाः दोषाः वर्त्तन्ते इति शेषः ॥ २०७ ॥

सम्मोहयन्तीति। एताः वामनयनाः कुटिलनेत्राः कान्ताः नराणां सरलं सुकोमलमित्यर्थः हृदयं प्रविश्य किं वा न समाचरन्ति ? न कुर्वन्ति ? तथाहि सम्मोहयन्ति सम्यक् मुग्धं कुर्वन्ति, मदयन्ति हर्षयन्ति, विडम्बयन्ति प्रतारयन्ति, निर्भर्त्सयन्ति तिरस्कुर्वन्ति, रमयन्ति सुरतेन प्रीणयन्ति, तथा विषादयन्ति। विषादसागरे पातयन्ति निर्धनतायां गृहात् निष्काशनेनेति भावः। वसन्ततिलकं वृत्तम् ॥ २०८ ॥

अन्तरिति। एताः योषितः अन्तर्विषमया, विषमयहृदया इत्यर्थः वहिश्चैव मनोरमाः वचसा मनोहारिण्य इत्यर्थः अतएव गुञ्जाफलैः समः आकारो यासां तथाविधाः केन जनेन निर्मिताः सृष्टाः। गुञ्जाफलं बहिरतिरम्यं दृश्यते परन्तु अन्तर्विषमिति बोध्यव्यम् ॥ २०९ ॥

(प) छिद्रं दोषः कलङ्क इत्यर्थः। स्थगयितव्यम् आच्छादयितव्यम्।

(फ) पर्य्युषितः स्थित इत्यर्थः।

गच्छामि। सापि छिन्ननासिका गृहमध्यस्थितैव कार्य्य-करणापेक्षया क्षुरभाण्डात् क्षुरमेकं समाकृष्य तस्य अभिमुखं प्रेषयामास। नापितोऽपि उत्सुकतया तमेकं क्षुरमवलोक्य कोपाविष्टः सन् तदभिमुखमेव तं क्षुरं प्राहिणोत्। एतस्मिन् अन्तरे सा दुष्टा ऊर्द्ध्वं बाहू विधाय फूत्कर्त्तुमना (ब) गृहात् निश्चक्राम। अहो! पापेन अनेन मम सदाचारवर्त्तिन्याः पश्यत नासिकाच्छेदो विहितः। तत्परित्रायतां परित्रायताम्। अत्र अन्तरे राजपुरुषाः समभ्येत्य तं नापितं लगुड़प्रहारैः जर्जरीकृत्य दृढ़बन्धनैर्बद्ध्वा तया छिन्ननासिकया सह धर्माधि-करणस्थानं नीत्वा सभ्यान् ऊचुः। शृखन्तु भवन्तः सभासदः। अनेन नापितेन अपराधं विना स्त्रीरत्नमेतद्व्यङ्गितं (भ) तदस्य यत् युज्यते तत् क्रियताम्। इति अभिहिते सभ्या ऊचुः। रे नापित! किमर्थं त्वया भार्य्या व्यङ्गिता। किमनया पर-पुरुषोऽभिलषितः उतस्वित् प्राणद्रोहः (म) कृतः, किंवा चौर्य्यकर्म आचरितम्। तत् कथ्यताम् अस्या अपराधः। नापि-तोऽपि प्रहारपीड़िततनुर्वक्तुं न शशाक। अथ तं तूष्णीभूतं दृष्ट्वा पुनः सभ्या ऊचुः। अहो! सत्यमेतत् राजपुरुषाणां वचः, पापात्मा अयम्। अनेन इयं निर्दोषा वराकी (य) दूषिता। उक्तञ्च,

भिन्नस्वरमुखवर्णः शङ्कितदृष्टिः समुत्पतिततेजाः।

---

(ब) फूत्कर्त्तुमनाः आक्रन्दितुकामा इत्यर्थः।
(भ) व्यङ्गितम् अङ्गविहीनं कृतमित्यर्थः।
(म) प्राणद्रोहः जीवननाशचेष्टा।
(य) वराकी निर्दोषा।
भिन्नेति। पापं कृत्वा स्वकर्मणा तेन पापकर्मणा सन्त्रासितः सम्यक् वाचं

भवति हि पापं कृत्वा स्वकर्मसन्त्रासितः पुरुषः ॥ २१० ॥

तथाच, आयाति स्खलितैः पादैर्मुखवैवर्ण्यसंयुतः।
ललाटस्वेदभाग् भूरि गद्गदं भाषते वचः ॥ २११ ॥
अधोदृष्टिर्भवेत् कृत्वा पापं प्राप्तः सभां नरः।
तस्माद्यत्नात्परिज्ञेयश्चिह्नैरेतैर्विचक्षणैः ॥ २१२ ॥

अन्यच्च, प्रसन्नवदनो हृष्टः स्पष्टवाक्यः सरोषदृक्।
सभायां वक्ति सामर्षं सावष्टम्भो नरः शुचिः ॥ २१३ ॥

तदेष दुष्टचरित्रलक्षणो दृश्यते। स्त्रीधर्षणात् बध्य (र) इति। तच्छूलायामारोप्यतामिति। अथ बध्यस्थाने नीयमानं तम् अवलोक्य देवशर्मा तान् धर्माधिकृतान् गत्वा प्रोवाच। भोः! भोः! अन्यायेन एष वराको बध्यते। नापितः साधुसमाचार एषः। तत् श्रूयतां मे वाक्यम्। जम्बूका हुडयुद्धेनेति। अथ ते सभ्या ऊचुः। भो भगवन्! कथमेतत्? ततो देवशर्मा तेषां त्रयाणामपि वृत्तान्तं विस्त-

---

नीतः पुरुषः भिन्नः स्वरो मुखवर्णश्च यस्य तथाभूतः, शङ्किता दृष्टिर्यस्य तादृशः तथा समुत्पतितं विनष्टमित्यर्थः तेजो यस्य तथाभूतः हिशब्दोऽवधारणार्थः। आर्य्यावृत्तम् ॥ २१० ॥

आयातीति। पापी नर इति अध्याहार्य्यं स्खलितैः पदे पदे च्युतङ्घ्रिः पादैः आयाति आगच्छति, तथा मुखवैवर्ण्यसंयुतः विवर्णमुखकान्तिः ललाटस्वेदभाक् स्विन्नललाटश्च सन् भूरि बहु गद्गदम् अस्पष्टं वचः भाषते ॥ २११ ॥

अधोदृष्टिरिति। पापं कृत्वा सभां धर्माधिकरणं प्राप्तो नरः अधोदृष्टिः भवेत् तस्मात् विचक्षणैः पुरुषैः एतैः पूर्वोक्तैः चिह्नैः लक्षणैः यत्नात् परिज्ञेयः ॥२१२॥

प्रसन्नवदन इति। शुचिः निर्दोषो नरः प्रसन्नवदनः हृष्टः स्पष्टवाक्यः सरोषदृक् क्रोधपूर्णदृष्टिः अवमाननादिति भावः, सावष्टम्भः सधैर्य्यः सन् सभायां सामर्षं सकोपम् अनर्थकं मे धर्षणं कृतमिति कोपप्रकाशपूर्वं वक्ति कथयति ॥२१३॥

(र) दुष्टेति। दुष्टं चरित्रलक्षणं चरित्रचिह्नं यस्य तथोक्तः। स्त्रीधर्षणात् स्त्रिया अवमाननात्।

रेण अकथयत्। तदाकर्ण्य सुविस्मितमनसस्ते नापितं विमोच्य मिथः प्रोचुः। अहो!

अवध्यो ब्राह्मणो बालः स्त्री तपस्वी च रोगभाक्।
विहिता व्यङ्गिता तेषामपराधे महत्यपि॥ २१४॥

तदस्या नासिकाच्छेदः स्वकर्मणा हि संवृत्तः। ततो राजनिग्रहस्तु कर्णच्छेदः कार्य्यः। तथानुष्ठिते देवशर्मापि वित्तनाशसमुद्भूतशोकरहितः पुनरपि स्वकीयं मठायतनं जगाम। अतोऽहं ब्रवीमि। जम्बूको हुड़युद्धेनेति।

करटक आह। एवंविधे व्यतिकरे (ल) किं कर्त्तव्यमावयोः? दमनकोऽब्रवीत्। एवंविधेऽपि समये मम बुद्धिस्फुरणं भविष्यति, येन सञ्जीवकं प्रभोर्विश्लेषयिष्यामि (व) उक्तञ्च,

यतः, एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता।
बुद्धिर्बुद्धिमतः सृष्टा हन्ति राष्ट्रं सनायकम्॥ ३१५॥

तदहं मायाप्रपञ्चेन गुप्तमाश्रित्य तं स्फोटयिष्यामि (श)

---

अवध्य इति। ब्राह्मणः, बालः शिशुः, स्त्री, तपस्वी, रोगभाक् रोगी च तेषां महति अपराधेऽपि व्यङ्गिता अङ्गहानिः विहिता येन केनचिदङ्गेन एतेषां वियोगः कार्य्य इति शास्त्रनियम इत्यर्थः॥ २१४॥

(ल) व्यतिकरे अवस्थायाम्।

(व) विश्लेषयिष्यामि वियोजयिष्यामि।

एकमिति। धनुष्मता धानुष्केण मुक्तः विक्षिप्तः इषुः शरः एकं लक्ष्यमित्यर्थः हन्यात् न वा हन्यात् हनने संशयोऽस्तीति भावः। बुद्धिमतो बुद्धिः सृष्टा विनियुक्ता सती सनायकं स्वामिसहितं राष्ट्रं राज्यं हन्ति। इषोरपि बुद्धेरुत्कर्षात् व्यतिरेकालङ्कारः। तदुक्तं दर्पणे, आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक एक उक्तो नोक्ते हेतौ स च द्विधा इति॥ २१५॥

(श) मायाप्रपञ्चेन चातुरीविस्तारेण। स्फोटयिष्यामि वियोजयिष्यामि।

करटक आह। भद्र! यदि कथमपि तव मायाप्रवेशं पिङ्गलकः ज्ञास्यति, सञ्जीवको वा, तदा नूनं विघात (ष) एव। सोऽब्रवीत् तात! नैवं वद गूढ़बुद्धिभिः आपत्काले विधुरेऽपि दैवे बुद्धिः प्रयोक्तव्या नोद्यमस्त्याज्यः कदाचित् घुणाक्षरन्यायेन (स) बुद्धेः साम्राज्यं (ह) भवति। उक्तञ्च,

त्याज्यं न धैर्य्यं विधुरेऽपि दैवे
धैर्य्यात् कदाचित् स्थितिमाप्नुयात् सः।
याते समुद्रेऽपि हि पोतभङ्गे
सांयात्रिको वाञ्छति कर्म्म एव ॥ २१६ ॥

तथाच, उद्योगिनं सततमत्र समेति लक्ष्मीः
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः ? ॥२१७॥

---

(ष) विघातः व्याघातः।

(स) विधुरे प्रतिकूले। उद्यमः उद्योगः पुरुषकार इत्यर्थः। घुणाक्षरन्यायेनेति। घुणो नाम काष्ठभक्षकः कीटविशेषः स यदा काष्ठं प्रविशति तदा क्रमेण काष्ठं कृन्तन् कृन्तन् दैवात् ततोऽक्षरमेकं कदाचित् उद्भावयति एष न्यायः घुणाक्षरः तेन।

(ह) बुद्धेः बुद्धिवशात्। साम्राज्यं भवति साम्राज्यलाभो भवति इत्यर्थः।

त्याज्यमिति। दैवे विधुरे विपरीतेऽपि धैर्य्यं न त्याज्यं सः प्रतिकूलदैवो जन इत्यर्थः धैर्य्यात् कदाचित् स्थितिम् आप्नुयात् लभेत। समुद्रे पोतभङ्गे वाणिज्यद्रव्यपूर्णयानभङ्गे जातेऽपि सांयात्रिकः पोतवणिक्। सांयात्रिकः पोतवणिगित्यमरः। कर्म स्वं वाणिज्यमेव वाञ्छति न खलु स्वतो व्यवसायात् च्यवतीति भावः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। तदुक्तं सामान्यं वा विशेषेण विशेषस्तेन वा यदि। कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते। साधर्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः इति। इन्द्रवज्रावृत्तम् ॥ २१६ ॥

उद्योगिनमिति। अत्र संसारे लक्ष्मीः उद्योगिनं जनं सततं समेति प्राप्नोति, कापुरुषाः नीचाः पुरुषा हि दैवं दैवमिति वदन्ति, दैवं निहत्य निरस्य आत्म-

तदेवं ज्ञात्वा सुगूढ़बुद्धिप्रभावेण यथा तौ द्वौ अपि न ज्ञास्यतः तथा मिथो वियोजयिष्यामि। उक्तञ्च,

सुगुप्तस्यापि दम्भस्य ब्रह्माप्यन्तं न गच्छति।
कौलिको विष्णुरूपेण राजकन्यां निषेवते ॥ २१८ ॥

करटक आह। कथमेतत्? सोऽब्रवीत्।

## कथा ५।

कस्मिंश्चिदधिष्ठाने कौलिकरथकारौ मित्रे प्रतिवसतः स्म। तत्र च तौ बाल्यात् प्रभृति सहचारिणौ, परस्परमतीव स्नेहपरौ सदा एकस्थानविहारिणौ कालं नयतः। अथ कदाचित् तत्राधिष्ठाने कस्मिंश्चिद्देवायतने यात्रामहोत्सवः संवृत्तः। तत्र च नटनर्त्तकचारणसङ्कुले (च) नानादेशागतजनावृते तौ सहचरौ भ्रमन्तौ, काञ्चिद्राजकन्यां करेणुकारूढ़ां (क) सर्वलक्षणसनाथां कञ्चुकिवर्षवरपरिवारितां (ख) देवतादर्श-

---

शक्त्या पौरुषं पुरुषकारं कुरु, यत्ने पुरुषकारे कृते सति यदि न सिद्ध्यति कार्य्यम् इति शेषः तदा अत्र संसारे को दोषः? न कोऽपीति भावः। उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीर्दैवेन देयमिति कापुरुषा वदन्तीति पाठान्तरम्। वसन्ततिलकं वृत्तम् ॥ २१७ ॥

सुगुप्तस्येति। ब्रह्मणापि अन्येषां का कथेति अप्यर्थः। सुगुप्तस्य गूढ़ं प्रयुक्तस्य दम्भस्य मायायाः अन्तं न गच्छति नावबुध्यते इत्यर्थः। तथाहि कौलिकः कश्चित् विष्णुरहमिति मायां विस्तार्य्य राजकन्यां निषेवते भुङ्क्ते ॥ २१८ ॥

(च) नटेति। नटाश्च नर्त्तकाश्च चारणाः कुशीलवाश्च तैः सङ्कुले बहुले।

(क) करेणुकारूढ़ां हस्तिनीमारुह्य आगताम्। सर्वैः लक्षणैः सुचिह्नैः सनाथा युक्ता तां सुलक्षणसम्पन्नाम्।

(ख) कञ्चुकिभिः अन्तःपुरचरवृद्धब्राह्मणैः अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः। सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इति लक्षणान्वितैरित्यर्थः वर्षवरैः नपुंसकजातीयैः परिवारिताम्।

नार्थं समायातां दृष्टवन्तौ। अथासौ कौलिकस्तां दृष्ट्वा, विषार्दित इव, दुष्टग्रहगृहीत इव, कामशरैः हन्यमानः, सहसा भूतले निपपात। अथ तं तदवस्थम् अवलोक्य, रथकारः तद्दुःखदुःखित आप्तपुरुषैस्तं समुत्क्षिप्य (ग) स्वगृहमानाययत्। तत्र च विविधैः शीतोपचारैः चिकित्सकोपदिष्टैः मन्त्रवादिभिरुपचर्य्यमाणः (घ) चिरात् कथञ्चित् सचेतनो बभूव। ततो रथकारेण पृष्टः। भो मित्र! किमेवं त्वम् अकस्मात् विचेतनः सञ्जातः। तत्कथ्यताम् आत्मस्वरूपम्। स आह, वयस्य! यदि एवं तच्छृणु मे रहस्यं येन सर्वाम् आत्मवेदनां ते वदामि। यदि त्वं मां सुहृदं मन्यसे ततः काष्ठप्रदानेन (ङ) प्रसादः क्रियतां, क्षम्यतां यद्वा किञ्चित् प्रणयातिरेकात् अयुक्तं तव मया अनुष्ठितम्। सोऽपि तदाकर्ण्य वाष्पपिहितनयनः (च) सगद्गदमुवाच। वयस्य! यत्किञ्चित्दुःखकारणं तद्वद, येन प्रतीकारः क्रियते यदि शक्यते कर्त्तुम्। उक्तञ्च,

औषधार्थसुमन्त्राणां बुद्धेश्चैव महात्मनाम्।
असाध्यं नास्ति लोकेऽत्र यद्ब्रह्माण्डस्य मध्यगम् ॥२१९॥

तदेषां चतुर्णां यदि साध्यं भविष्यति तदा अहं साधयिष्यामि। कौलिक आह, वयस्य! एतेषाम् अन्येषाम् अपि सह-

---

(ग) आप्तपुरुषैः आत्मीयजनैः। समुत्क्षिप्य समुत्तोल्य।

(घ) शीतोपचारैः शीतलप्रक्रियाभिः उपचर्य्यमाणः सेव्यमानः।

(ङ) काष्ठप्रदानेन चितारचनेन इत्यर्थः।

(च) वाष्पेति। वाष्पेण नेत्रजलेन पिहिते आच्छादिते नयने यस्य तादृशः। औषधेति। अत्र लोके संसारे ब्रह्माण्डस्य जगतः मध्यगम् अन्तर्वर्त्ति यत् किञ्चित् अस्ति तत् औषधस्य अर्थस्य सुमन्त्रस्य महात्मनां बुद्धेश्च असाध्यं न, सर्वमेव औषधेन अर्थेन सुमन्त्रेण वा बुद्धिबलेन साध्यते इति फलितार्थः ॥२१९॥

स्त्राणाम् उपायानाम् असाध्यं तत् मे दुःखम्। तस्मात् मम मरणे मा कालक्षेपं कुरु। रथकार आह, भो मित्र! यद्यपि असाध्यं तथापि निवेदय येन अहमपि तत् असाध्यं मत्वा त्वया सह वह्नौ प्रविशामि। न क्षणमपि त्वद्वियोगं सहिष्ये। एष मे निश्चयः। कौलिक आह, वयस्य! या असौ राज-कन्या करेणुकारूढ़ा तत्र उत्सवे दृष्टा, तस्या दर्शनानन्तरं मकरध्वजेन मम इयम् अवस्था विहिता। तत् न शक्नोमि तद्वेदनां सोढ़ुम्।

तथाचोक्तम्, मत्तेभकुम्भपरिणाहिनि कुङ्कुमार्द्रे
तस्याः पयोधरयुगे रतखेदखिन्नः।
वक्षो निधाय भुजपञ्जरमध्यवर्त्ती
स्वप्स्ये कदा क्षणमवाप्य तदीयसङ्गम् ॥२२०॥

तथाच,

रागी बिम्बाधरोऽसौ स्तनकलशयुगं यौवनारूढ़गर्वम्
क्षीना नाभिः प्रकृत्या कुटिलकमलकं स्वल्पकञ्चापि मध्यम्।
कुर्वन्त्वेतानि नाम प्रसभमिह मनश्चिन्तितान्याशु खेदम्
यन्मां तस्याः कपोलौ दहत इति मुहुःस्वच्छकौ तन्न युक्तम् ॥२२१॥

---

मत्तेभेति। कदा तदीयसङ्गं तस्याः सङ्गमम् अवाप्य रतखेदेन सुरतश्रमेण खिन्नः क्लान्तः सन् मत्तेभस्य मत्तगजस्य यौ कुम्भौ तयोः परिणाहः विशालता इव परिणाहो यस्य तादृशे परिणाही विशालतेत्यमरः। कुङ्कुमार्द्रे कुङ्कुमेन गन्धद्रव्यभेदेन विलेपिते इत्यर्थः तस्याः कन्यायाः पयोधरयुगे कुचयुगले वक्षो निधाय अर्पयित्वा भुजपञ्जरमध्यवर्त्ती भुजयोः अन्तरालस्थितः सन् क्षणं स्वप्स्ये निद्रास्यामि ?। वसन्ततिलकं वृत्तम् ॥ २२० ॥

रागीति। असौ रागी रागवान् रक्त इत्यर्थः अन्यत्र क्रोधवान्, स्तनकलश-युगं कुचकुम्भद्वयं यौवनेन आरूढ़ः गर्वः औद्धत्यं येन तथोक्तं प्रकृत्या स्वभावेन क्षीना कुटिला आवर्त्तवती इत्यर्थः नाभिः, कुटिलं वक्रम् अलकं चूर्णकुन्तलं स्वल्पकं

रथकारोऽपि एवं सकामं तद्वचनम् आकर्ण्य सस्मितम् इदमाह, वयस्य! यदि एवं तर्हि दिष्ट्या सिद्धं नः प्रयोजनम्। तत् अद्यैव तया सह समागमः क्रियताम् इति। कौलिक आह, वयस्य! यत्र कन्यान्तःपुरे वायुं मुक्त्वा न अन्यस्य प्रवेशोऽस्ति तत्र रक्षापुरुषाधिष्ठिते कथं मम तया सह समागमः। तत् किं माम् असत्यवचनेन विडम्बयसि (छ) रथकार आह, मित्र! पश्य मे बुद्धिबलम्। एवम् अभिधाय तत्क्षणात् कीलसञ्चारिणं वैनतेयं बाहुयुगलं वायुजवृक्षदारुणा (ज) शङ्खचक्रगदापद्मान्वितं सकिरीटकौस्तुभम् अघटयत्। ततः तस्मिन् कौलिकं समारोप्य विष्णुचिह्नितं कृत्वा कीलसञ्चरणविज्ञानञ्च (झ) दर्शयित्वा प्रोवाच वयस्य! अनेन विष्णुरूपेण गत्वा कन्यान्तःपुरे निशीथे तां राजकन्याम् एकाकिनीं सप्तभूमिकप्रासादप्रान्तगतां (ञ)

---

क्षीणमित्यर्थः मध्यं कटिदेशः एतानि चिन्तितानि प्रसभं बलात् आशु शीघ्रं खेदं कुर्वन्तु जनयन्तु नाम सम्भावनायाम्। एतेषां रागवत्त्वादिगुणयोगात् लोकस्य मनः खेदनं सम्भाव्यते इति भावः। तस्याः स्वच्छकौ विमलौ कपोलौ यत् मां मुहुः पुनः पुनः चिन्तने इति भावः। दहतः खिन्नं कुरुत इति तत् न युक्तं नोचितं तयोर्वैमल्यात् परखेदनस्य अयुक्तत्वादिति भावः। स्रग्धरावृत्तम् ॥ २२१ ॥

(छ) विडम्बयसि प्रतारयसि।

(ज) कीलेति। कीलेन शङ्कुना सञ्चरति चलतीति तथाविधम्। वैनतेयं गारुड़म्। वायुजो नाम वृक्षभेदः तस्य दारुणा काष्ठेन तस्य वृक्षस्य वायुजातत्वात् सञ्चरणशक्तिरस्तीति भावः।

(झ) कीलसञ्चरणविज्ञानं कीलसञ्चरणकौशलम्।

(ञ) सप्तेति। सप्तसंख्या भूमयः उपर्युपरिभावेन स्थिता आलयविशेषा यत्र तादृशो यः प्रासादः सप्ततलं राजभवनमित्यर्थः तस्य प्रान्ते सर्वोपरिगृहे गतां स्थिताम्।

मुग्धस्वभावां, (ट) त्वां वासुदेवं मन्यमानां, स्वकीय-मिथ्यावक्रोक्तिभिः रञ्जयित्वा, वात्स्यायनोक्तविधिना (ठ) भज (ड) कौलिकोऽपि तत् आकर्ण्य तथारूपः तत्र गत्वा ताम् आह, राजपुत्रि! सुप्ता किं वा जागर्षि? अहं तव कृते समुद्रात् सानुरागो लक्ष्मीं विहाय एव आगतः। तत् क्रियतां मया सह समागम इति। सापि गरुड़ारूढ़ं चतुर्भुजं सायुधं कौस्तुभोपेतम् अवलोक्य सविस्मया शयनात् उत्थाय प्रोवाच, भगवन्! अहं मानुषी कीटिकाशुचिः (ढ) भगवान् त्रैलोक्यपावनो वन्दनीयश्च। तत्कथमेतद् युज्यते। कौलिक आह, सुभगे! सत्यम् अभिहितं भवत्या, परं किन्तु राधा नाम मे भार्य्या गोपकुलप्रसूता प्रथमम् आसीत् सा त्वम् अत्र अवतीर्णा। तेन अहमत्र आयातः। इति उक्ता सा प्राह, भगवन्! यदि एवं तत् मे तातं प्रार्थय, सोऽपि अविकल्पं (ण) मां तुभ्यं प्रयच्छति। कौलिक आह, सुभगे! न अहं दर्शनपथं मानुषाणां गच्छामि। किं पुनरालापकरणम्, त्वं गान्धर्वेण (त) विवाहेन आत्मानं प्रयच्छ। नो चेत् शापं दत्त्वा सान्वयं (थ) ते पितरं भस्मसात् करिष्यामि इति। एवम् अभिधाय गरु-

---

(ट) मुग्धस्वभावां सरलप्रकृतिम्।

(ठ) वात्स्यायनोक्तविधिनेति। वात्स्यायनेन मुनिना उक्तः यो विधिः कामशास्त्रं तेन।

(ड) भज भुङ्क्ष्व।

(ढ) कीटिका सामान्यकीटस्वरूपा अतिक्षुद्रेति भावः। अशुचिः अपवित्रा।

(ण) अविकल्पं निःसंशयम्।

(त) गान्धर्वेण अन्योऽन्यानुरागनिबन्धनविवाहविशेषेण गान्धर्वः, समयान्मिथ इति स्मरणात्।

(थ) सान्वयं सवंशम्।

ड़ात् अवतीर्य्य सव्ये (द) पाणौ गृहीत्वा, तां सभयां सलज्जां वेपमानां शय्यायामनयत् ततश्च रात्रिशेषं यावत् वात्स्यायनोक्त-विधिना निषेव्य प्रत्यूषे स्वगृहमलक्षितो जगाम। एवं तस्य तां नित्यं सेवमानस्य कालो याति। अथ कदाचित् कञ्चुकिनः तस्या अधरोष्ठप्रवालखण्डनं (ध) दृष्ट्वा मिथः प्रोचुः। अहो! पश्यत अस्या राजकन्यायाः पुरुषोपभुक्ताया इव शरीरावयवाः विभाव्यन्ते (न)। तत् कथमयं सुरक्षितेऽपि अस्मिन् गृहे एवंविधो व्यवहारः तत् राज्ञे निवेदयामः। एवं निश्चित्य सर्वे समेत्य राजानं प्रोचुः। देव! वयं न विद्मः परं सुरक्षितेऽपि कन्यान्तःपुरे कश्चित् प्रविशति। तद्देवः प्रमाणम् इति। तच्छ्रुत्वा राजा अतीव व्याकुलितचित्तो व्यचिन्तयत्।

पुत्रीति जाता महतीह चिन्ता
कस्मै प्रदेयेति महान् वितर्कः।
दत्त्वा सुखं प्राप्स्यति वा न वेति
कन्यापितृत्वं खलु नाम कष्टम्!॥ २२२॥
नद्यश्च नार्य्यश्च सदृक्प्रभावा-
स्तुल्यानि कूलानि कुलानि तासाम्।

---

(द) सव्ये दक्षिणे।

(ध) अधरोष्ठप्रवालखण्डनम् अधरोष्ठपल्लवदंशनम्।

(न) विभाव्यन्ते लक्ष्यन्ते।

पुत्रीति। इह संसारे पुत्रीति कन्येति महती चिन्ता जाता, ततः कस्मै प्रदेया इति भावना, ततो दत्ता कस्मैचिदिति शेषः सती सुखं प्राप्स्यति वा न वा इति च महान् वितर्कः भावना, तस्मात् कन्यापितृत्वं कन्योत्पादनमित्यर्थः कष्टं खलु नाम सम्भावनायाम् कन्यापिता सततं क्लेशं प्राप्नोतीति सम्भावयामि इति भावः। इन्द्रवज्रावृत्तम्॥ २२२॥

नद्य इति। नद्यश्च नार्य्यश्च सदृक्प्रभावाः तुल्यप्रभाववत्यः, तासां नदीनां

तोयैश्च दोषैश्च निपातयन्ति
नद्यो हि कूलानि कुलानि नार्य्यः ॥ २२३ ॥

तथाच, जननी मनो हरति जातवती
परिवर्द्धते सह शुचा सुहृदाम् ।
परसात्कृतापि कुरुते मलिनं
दुरतिक्रमा दुहितरो विपदः ॥ २२४ ॥

एवं बहुविधं विचिन्त्य देवीं रहःस्थां (प) प्रोवाच, देवि ! ज्ञायतां किमेते कञ्चुकिनो वदन्ति । तस्य कृतान्तः कुपितो येन एतदेवं क्रियते । देवी अपि तदाकर्ण्य व्याकुलीभूता सत्वरं कन्यान्तःपुरे गत्वा तां खण्डिताधरं नखविलिखितशरीरावयवां दुहितरमपश्यत् । आह च, आः पापे ! कुलकलङ्ककारिणि ! किमिवं शीलखण्डनं (फ) कृतम् । कोऽयं कृतान्तावलोकितः त्वत्सकाशमभ्येति । तत्कथ्यतां ममाग्रे सत्यम्, इति कोपाटोपविसङ्कटं (ब) वदत्यां

---

नारीणाञ्च कूलानि कुलानि च तुल्यानि, नद्यः तोयैः जलप्रवाहैः कूलानि, नार्य्यः दोषैः कलङ्कैः कुलानि पातयन्ति हि अवधारणे । इन्द्रवज्रावृत्तम् ॥ २२३ ॥

जननीति । कन्या जातवती जाता सती जनन्या मनः हरति आह्लादयति, ततः सुहृदां बन्धूनां शुचा शोकेन सह परिवर्द्धते वृद्धिं गच्छति कन्याया वृद्धिदर्शने बन्धूनां भाविक्लेशपर्य्यालोचनया शोकवृद्धिरिति भावः । परसात्कृतापि परस्मै वरायेति भावः प्रदत्तापि मलिनं बन्धुवर्गमिति शेषः कुरुते पश्चात् सुखं भवति न वेति भावनावशादिति भावः । अतः दुहितरः विपदः कन्यारूपा आपदः दुरतिक्रमाः दुस्तराः । अन्या विपत् कथञ्चित् अतिक्रम्यते कन्या तु नैवेति भावः । प्रमिताक्षरावृत्तं प्रमिताक्षरा सजससैः कथितेति तल्लक्षणात् ॥ २२४ ॥

(प) रहस्याम् एकान्तस्थिताम् ।

(फ) शीलखण्डनं चरित्रदूषणम् । कृतान्तावलोकितः यमेन दृष्टः । तस्य मृत्युरवश्यं भावीति भावः ।

(ब) कोपेति । कोपस्य आटोपः वेगः तेन विसङ्कटं निष्ठुरम् ।

मातरि राजपुत्री भयलज्जानताननं प्रोवाच। अम्ब! साक्षात् नारायणः प्रत्यहं गरुड़ारूढ़ो निशि समायाति। चेत् असत्यं मम वाक्यम्? तत् स्वचक्षुषा विलोकयतु निगूढ़तरा निशीथे भगवन्तं रमाकान्तम्। तत् श्रुत्वा सा अपि प्रहसितवदना पुलकाङ्कितसर्वाङ्गी सत्वरं गत्वा राजानम् ऊचे, देव! दिष्ट्या वर्द्धसे। नित्यम् एव निशीथे भगवान् नारायणः कन्यकापार्श्वेऽभ्येति। तेन गान्धर्वविवाहेन सा विवाहिता। तत् अद्य त्वया मया च रात्रौ वातायनगताभ्यां, निशीथे द्रष्टव्यो, यतो न स मानुषैः सह आलापं करोति। तच्छ्रुत्वा हर्षितस्य राज्ञः तद्दिनं वर्षशतप्रायमिव (भ) कथञ्चित् जगाम। ततस्तु रात्रौ निभृतो भूत्वा राज्ञीसहितो राजा वातायनस्थो (म)गगनासक्तदृष्टिः यावत् तिष्ठति तावत् तस्मिन् समये गरुड़ारूढ़ं तं शङ्खचक्रगदापद्महस्तं यथोक्तचिह्नाङ्कितं व्योम्नोऽवतरन्तं नारायणम् अपश्यत्। ततः सुधापूरप्लावितम् इव आत्मानं (य) मन्यमानः तामुवाच। प्रिये! नास्ति अन्यो धन्यतरो लोके मत्तः त्वत्तश्च, यत्प्रसूतिं नारायणो भजते। तत्सिद्धाः सर्वेऽस्माकं मनोरथाः, अधुना जामातृप्रभावेण सकलामपि वसुमतीं वश्यां करिष्यामि। एवं निश्चित्य सर्वैः सीमाधिपैः (र) सह मर्य्यादाव्यतिक्रमम् अकरोत् (ल) ते च तं मर्य्यादाव्यतिक्रमेण वर्त्तमानम् आलोक्य सर्वे समेत्य तेन सह

---

(भ) वर्षशतप्रायं शतवत्सरोपमम् औत्सुक्यातिशयादिति भावः।

(म) वातायनस्थः गवाक्षवर्त्ती।

(य) सुधेति। सुधाया अमृतस्य पूरेण प्रवाहेण प्लावितमिव सिक्तमिव।

(र) सीमाधिपैः स्वस्वाधिकारसीमापालकैः।

(ल) मर्य्यादाव्यतिक्रमं मर्य्यादायाः सीमायाः व्यतिक्रमं लङ्घनम्।

विग्रहं (व) चक्रुः। अत्रान्तरे स राजा देवीमुखेन तां दुहितरमुवाच। पुत्रि! त्वयि दुहितरि वर्त्तमानायां, नारायणे भगवति जामातरि स्थिते, तत् किमेवं युज्यते यत् सर्वे पार्थिवा मया सह विग्रहं कुर्वन्ति। तत् सम्बोध्योऽद्य (श) त्वया निजभर्त्ता, यथा मम शत्रून् व्यापादयति। ततः तया स कौलिको रात्रौ सविनयम् अभिहितः। भगवन्! त्वयि जामातरि स्थिते मम तातो यच्छत्रुभिः परिभूयते तत् न युक्तम्, तत्प्रसादं कृत्वा सर्वान् तान् शत्रून् व्यापादय। कौलिक आह, सुभगे! कियन्मात्रास्तु एते (ष) तव पितुः शत्रवः। तद्विश्वस्ता भव, क्षणेनापि सुदर्शनचक्रेण सर्वान् तिलशः खण्डयिष्यामि। अथ गच्छता कालेन सर्वदेशं शत्रुभिः उद्वास्य, (स) स राजा प्राकारशेषः कृतः। तथापि वासुदेवरूपधरं कौलिकमजानन् राजा नित्यमेव विशेषतः कर्पूरागुरुकस्तूरिकादिपरिमलविशेषान् नानाप्रकारवस्त्रपुष्पभक्ष्यपेयांश्च प्रेषयन् दुहितृमुखेन तमूचे। भगवन्! प्रभाते नूनं स्थानभङ्गो (ह) भविष्यति, यतो यवसेन्धनक्षयः सञ्जातः तथा सर्वोऽपि जनः प्रहारैः जर्जरितदेहः संवृत्तो योद्धुमक्षमः, प्रचुरो मृतश्च। तदेवं ज्ञात्वा अत्र काले यदुचितं भवति

---

(व) विग्रहं युद्धम्।

(श) सम्बोध्यः सम्यक् ज्ञापनीयः।

(ष) कियन्मात्राः कियत्परिमाणाः सामान्या इत्यर्थः।

(स) उद्वास्य उच्छिद्येत्यर्थः। प्राकारशेषः प्राचीरमात्रावशिष्टः।

(ह) स्थानभङ्गः वासस्थानच्युतिः वासस्थानमपि शत्रुभिरधिकरिष्यते इति भावः। यवसेति यवसानां घासानाम् इन्धनानां काष्ठानाञ्च क्षयः तृणकाष्ठादीनामपि शत्रुभिरधिकृतत्वात् दुर्लभत्वं जातम् इत्यर्थः।

तद्विधेयमिति। तच्छ्रुत्वा कौलिकोऽपि अचिन्तयद् यत् स्थानभङ्गे जाते मम अनया सह वियोगो भविष्यति तस्मात् गरुड़मारुह्य सायुधमात्मानमाकाशे दर्शयामि। कदाचित् मां वासुदेवं मन्यमानाः ते साशङ्का राज्ञो योद्धृभिः हन्यन्ते। उक्तञ्च।

निर्विषेणापि सर्पेण कर्त्तव्या महती फणा।
विषं भवतु मा भूयात् फणाटोपो भयङ्करः ॥२२५॥

अथ (च) यदि मम स्थानार्थम् उद्यतस्य मृत्युः भविष्यति तदपि सुन्दरतरम्, (क) उक्तञ्च,

गवामर्थे ब्राह्मणार्थे स्वाम्यर्थे स्त्रीकृतेऽथवा।
स्थानार्थे यस्त्यजेत् प्राणांस्तस्य लोकाः सनातनाः ॥२२६॥

चन्द्रे मण्डलसंस्थे विगृह्यते राहुणा दिनाधीशः।
शरणागतेन सार्द्धं विपदपि तेजस्विनां श्लाघ्या ॥२२७॥

एवं निश्चित्य प्रत्यूषे दन्तधावनं कृत्वा तां प्रोवाच।

---

निर्विषेणापीति। सर्पेण निर्विषेणापि महती फणा फणविस्तार इत्यर्थः कर्त्तव्या, विषं भवतु अस्तु, मा भूयात् नास्तु वा, फणाटोपः फणविस्तारः भयङ्करः सर्पफणविस्तारदर्शनेनैव लोकाः सभयाः पलायन्ते इति भावः ॥ २२५ ॥

(च) अथ पक्षान्तरे। स्थानार्थं स्ववासरक्षार्थमित्यर्थः उद्यतस्य चेष्टमानस्य।

(क) सुन्दरतरं भद्रतरम्।

गवामिति। यः नरः गवामर्थे गोरक्षणार्थे ब्राह्मणार्थे ब्राह्मणरक्षणार्थे स्वाम्यर्थे स्वामिरक्षार्थम् अथवा स्त्रीकृते स्त्रीनिमित्तं स्त्रीरक्षार्थमित्यर्थः तथा स्थानार्थे स्थानरक्षार्थं प्राणान् त्यजेत् तस्य सनातनाः अक्षयाः लोकाः भवन्तीति शेषः। चिरं स्वर्गवासी भवतीति भावः ॥ २२६ ॥

चन्द्रे इति। चन्द्रे मण्डलसंस्थे स्वमण्डलवर्त्तिनि अमावस्यायामिति भावः। दिनाधीशः दिनकरः राहुणा विगृह्यते योध्यते। शरणागतं चन्द्रं रक्षितुं सूर्य्यः राहुणा सह युध्यते इत्यर्थः सूर्य्यग्रहणं भवतीति भावः। तस्मात् शरणागतेन सार्द्धं तेजस्विनां महतां विपदपि श्लाघ्या प्रशस्ता। आर्य्यावृत्तम्॥२२७॥

सुभगे ! समस्तैः शत्रुभिः हतैः अन्नं पानं च आस्वादयिष्यामि। किं बहुना त्वयापि सह सङ्गमं ततः करिष्यामि। परं वाच्यस्त्वया आत्मपिता यत् प्रभाते प्रभूतेन सैन्येन सह नगरात् निष्क्रम्य योद्धव्यम्, अहं च आकाशस्थित एव सर्वान् तान् निस्तेजसः करिष्यामि पश्चात्सुखेन भवता हन्तव्याः। यदि पुनरहं तान् स्वयमेव सूदयामि (ख) तत्तेषां पापात्मनां वैकुण्ठीया गतिः स्यात्। तस्मात्ते तथा कर्त्तव्या यथा पलायन्तो हन्यमानाः स्वर्गं न गच्छन्ति। सापि तदाकर्ण्य पितुः समीपं गत्वा सर्वं वृत्तान्तं न्यवेदयत्। राजापि तस्या वाक्यं श्रद्दधानः प्रत्यूषे समुत्थाय सुसन्नद्धसैन्यो (ग) युद्धार्थं निश्चक्राम। कौलिकोऽपि मरणे कृतनिश्चयः चापपाणिर्गगनगतिर्गरुड़ारूढ़ो युद्धाय प्रस्थितः। अत्र अन्तरे भगवता नारायणेन अतीतानागतवर्त्तमानवेदिना स्मृतमात्रो वैनतेयः सम्प्राप्तो विहस्य प्रोक्तः। भो गरुत्मन् ! जानासि त्वं ग्रन्मम रूपेण कौलिको दारुमयगरुड़े समारूढ़ो राजकन्यां कामयते। सोऽब्रवीत्। देव ! सर्वं ज्ञायते तच्चेष्टितम्। तत् किं कुर्मः साम्प्रतम्, श्रीभगवान् आह, अद्य कौलिको मरणे कृतनिश्चयो विहितनियमो युद्धार्थं विनिर्गतः। स नूनं प्रधानक्षत्रियशराहतो निधनमेष्यति। तस्मिन् हते सर्वो जनो वदिष्यति यत्प्रभूतक्षत्रियैर्मिलित्वा वासुदेवो गरुड़श्च निपातितः। ततः परं लोकोऽयमावयोः पूजां न करिष्यति। ततस्त्वं द्रुततरं तत्र दारुमयगरुड़े सङ्क्रमणं (घ) कुरु। अह-

(ख) सूदयामि नाशयामि।

(ग) सुसन्नद्धसैन्यः सुसज्जितबलः।

(घ) सङ्क्रमणम् अधिष्ठानम्।

मपि कौलिकशरीरे प्रवेशं करिष्यामि। येन स शत्रून् व्यापादयति। ततश्च शत्रुवधात् आवयोः माहात्म्यवृद्धिः स्यात्। अथ गरुड़े तथेति प्रतिपन्ने श्रीभगवान् नारायणस्तच्छरीरे सङ्क्रमणम् अकरोत्। ततो भगवन्माहात्म्येन गगनस्थः सः कौलिकः शङ्खचक्रगदाचापचिह्नितः क्षणादेव लीलयेव समस्तान् अपि प्रधानक्षत्रियान् निस्तेजसश्चकार। ततस्तेन राज्ञा स्वसैन्यपरिवृतेन संग्रामे जिता निहताश्च ते सर्वेऽपि शत्रवः। जातश्च लोकमध्ये प्रवादो यथा अनेन विष्णुजामातृप्रभावेण सर्वे शत्रवो निहता इति। कौलिकोऽपि तान् हतान् दृष्ट्वा प्रमुदितमना गगनात् अवतीर्णः सन् यावद्राजामात्यपौरलोकास्तं नगरवास्तव्यं (ङ) कौलिकं पश्यन्ति ततः पृष्टः किमेतदिति। ततः सोऽपि मूलादारभ्य सर्वं प्रागवृत्तान्तं न्यवेदयत्। ततश्च कौलिकसाहसानुरञ्जितमनसा शत्रुवधात् अवाप्ततेजसा राज्ञा सा राजकन्या सकलजनप्रत्यक्षं विवाहविधिना तस्मै समर्पिता देशश्च प्रदत्तः। कौलिकोऽपि तया सार्द्धं पञ्चप्रकारं (च) जीवलोकसारं विषयसुखमनुभवन् कालं निनाय। अतस्तु उच्यते। सुप्रयुक्तस्य दम्भस्येति।

तच्छ्रुत्वा करटक आह, भद्र! अस्ति एवम्। परं तथापि महत् मे भयम्। यतो बुद्धिमान् सञ्जीवकः रौद्रश्च सिंहः। यद्यपि ते बुद्धिप्रागल्भ्यं तथापि त्वं पिङ्गलकात् तं वियोजयितुम्

---

(ङ) नगरवास्तव्यं नगरवासिनम्।

(च) पञ्चप्रकारं पञ्चविधं पञ्चेन्द्रियग्राह्यमित्यर्थः। विषयाणां स्रक्चन्दनवनितादीनां सम्भोगसुखस्य पञ्चेन्द्रियसाध्यत्वादिति भावः।

असमर्थ एव। दमनक आह, भ्रातः! असमर्थोऽपि समर्थ एव। उक्तञ्च,

उपायेन हि यत् कुर्य्यात्तन्न शक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥ २२८॥

करटक आह। कथमेतत्? सोऽब्रवीत्।

## कथा ६।

अस्ति कस्मिंश्चित् प्रदेशे महान् न्यग्रोधपादपः (छ)। तत्र वायसदम्पती प्रतिवसतः स्म। अथ तयोः प्रसवकाले वृक्ष-विवरात् निष्क्रम्य कृष्णसर्पः सदैव तदपत्यानि भक्षयति। ततस्तौ (ज) निर्वेदात् अन्यवृक्षमूलनिवासिनं प्रियसुहृदं शृगालं गत्वा ऊचतुः। भद्र! किम् एवंविधे सञ्जाते आवयोः कर्त्तव्यं भवति। एवं तावत् दुष्टात्मा कृष्णसर्पो वृक्षविवरात् निर्गत्य आवयोर्बालकान् भक्षयति। तत् कथ्यतां तद्रक्षार्थं कश्चिदुपायः।

यस्य क्षेत्रं नदीतीरे भार्य्या च परसङ्गता।
ससर्पे च गृहे वासः कथं स्यात् तस्य निर्वृतिः?॥ २२९॥

अन्यच्च, सर्पयुक्ते गृहे वासो मृत्युरेव न संशयः।

---

उपायेनेति। उपायेन बुद्धिकौशलेन यत् कुर्य्यात् जन इति शेषः तत् पराक्रमैः न शक्यम्। तथाहि काक्या वायस्या कनकसूत्रेण कृष्णसर्पः निपातितः उपायेन हि यच्छक्यमिति पाठान्तरम्॥ २२८॥

(छ) न्यग्रोधपादपः वटतरुः।

(ज) निर्वेदात् विरक्तिवशात्।

यस्येति। यस्य जनस्य नदीतीरे क्षेत्रं कृषिभूमिः, भार्य्या परसङ्गता पर-पुरुषगामिनी तथा ससर्पे गृहे वासश्च, तस्य कथं निर्वृतिः सन्तोषः स्यात्? न कथमपि इत्यर्थः॥ २२९॥

यद्ग्रामान्ते वसेत् सर्पस्तस्य स्यात् प्राणसंशयः ॥२३०॥

अस्माकमपि तत्रस्थितानां प्रतिदिनं प्राणसंशयः। स आह, न अत्र विषये स्वल्पोऽपि विषादः कार्य्यः। नूनं (झ) स लुब्धो न उपायम् अन्तरेण (ञ) बध्यः स्यात्।

उपायेन जयो यादृग् रिपोस्तादृग् न हेतिभिः।

उपायज्ञोऽल्पकायोऽपि न शूरैः परिभूयते ॥ २३१ ॥

तथाच, भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान्।

अतिलौल्याद्बकः कश्चित् मृतः कर्कटकग्रहात् ॥२३२॥

तौ ऊचतुः। कथमेतत् ? सोऽब्रवीत्।

## कथा ७।

अस्ति कस्मिंश्चित् वनप्रदेशे नानाजलचरसनाथं महत् सरः। तत्र च कृताश्रयो बक एको वृद्धभावमुपागतो मत्स्यान् व्यापादयितुम् असमर्थः। ततश्च क्षुत्क्षामकण्ठः सरस्तीरे उपविष्टो मुक्ताफलप्रकरसदृशैः अश्रुप्रवाहैः धरातलमभिषिञ्चन् रुरोद। एकः कुलीरको नानाजलचरसमेतः समेत्य तस्य दुःखेन दुःखितः सादरम् इदमूचे, माम ! किमद्य त्वया न

---

सर्पेति। सर्पयुक्ते गृहे वासः मृत्युरेव संशयो नास्तीति शेषः यद्ग्रामान्ते यस्य ग्रामस्य अन्ते सीमायां सर्पो वसेत् तस्य प्राणसंशयः स्यात् ॥ २३० ॥

(झ) नूनं निश्चितम्।

(ञ) अन्तरेण विना।

उपायेनेति। उपायेन कौशलेन रिपोः शत्रोः यादृक् जयः स्यादिति शेषः, हेतिभिः अस्त्रैः तादृक् न, उपायज्ञो जनः अल्पकायः क्षुद्रशरीरोऽपि शूरैः बलवद्भिः न परिभूयते ॥ २३१ ॥

भक्षयित्वेति। बहून् उत्तमाधममध्यमान् मत्स्यान् भक्षयित्वा कश्चित् बकः अतिलौल्यात् अतिचापल्यात् कर्कटकग्रहात् कुलीरग्रहणेन मृतः ॥ २३२ ॥

आहारवृत्तिः अनुष्ठीयते, केवलम् अश्रुपूर्णनेत्राभ्यां सनिःश्वासेन स्थीयते। स आह, वत्स! सत्यमुपलक्षितं भवता, मया हि मत्स्यादनं (ट) प्रति परमवैराग्यतया साम्प्रतं प्रायोपवेशनं (ठ) कृतं, तेनाहं समीपगतान् अपि मत्स्यान् न भक्षयामि। कुलीरकः तच्छ्रुत्वा प्राह, माम! किं तद्वैराग्यकारणम्। स प्राह, वत्स! अहम् अस्मिन् सरसि जातो वृद्धिं गतश्च। तत् मया एतत् श्रुतं यत् द्वादशवार्षिकी अनावृष्टिः सम्पद्यते लग्ना (ड)। कुलीरक आह, कस्मात् तच्छ्रुतम्? वक आह, दैवज्ञमुखात्। यतः शनैश्चरो हि रोहिणीशकटं (ढ) भित्त्वा भौमं शुक्रञ्च प्रयास्यति।

उक्तञ्च, वराहमिहिरेण,

यदि भिन्ते सूर्य्यपुत्रो रोहिण्याः शकटमिह लोके।
द्वादशवर्षाणि तदा न हि वर्षति वासवो भूमौ ॥२३३॥

तथा च, प्राजापत्ये शकटे भिन्ने कृत्वैव पातकं वसुधा।
भस्मास्थिशकलकीर्णा कापालिकमिव व्रतं धत्ते ॥२३४॥

---

(ट) मत्स्यादनं मत्स्यभोजनम्।

(ठ) प्रायोपवेशनम् अनशनव्रतम्।

(ड) द्वादशवार्षिकी द्वादशवर्षव्यापिनी। सम्पद्यते भविष्यति। लग्ना क्रमागता।

(ढ) शनैश्चरः शनिग्रहः। रोहिणीशकटं रोहिणीनाम नक्षत्रभेदः तस्याः शकटं रथं तत् भित्त्वा परित्यज्येत्यर्थः। भौमं भूमिसुतं मङ्गलम्। रोहिणीनक्षत्रात मङ्गले शुक्रे च शनैश्चरस्य गमने अनावृष्टिर्भवतीति भावः।

यदीति। सूर्य्यपुत्रः शनैश्चरः यदि रोहिण्या शकटं रथं गृहमित्यर्थः भिन्ते, भित्त्वा गच्छति इत्यर्थः तदा वासव इन्द्रः इहलोके संसारे भूमौ पृथिव्यां द्वादशवर्षाणि न हि वर्षति। आर्य्यावृत्तम् ॥ २३३ ॥

प्राजापत्ये इति। प्राजापत्ये प्रजापतिदेवताके शकटे रोहिणीशकटे इत्यर्थः तस्याः प्रजापतिदेवताकत्वादिति भावः। भिन्ने शनैश्चरेणेति शेषः, वसुधा पृथिवी

तथाच, रोहिणीशकटमर्कनन्दन-
श्चेद्भिनत्ति रुधिरोऽथवा शशी।
किं वदामि तदनिष्टसागरे
सर्वलोकमुपयाति संचयः॥ २३५॥
रोहिणीशकटमध्यसंस्थिते
चन्द्रमस्यशरणीकृता जनाः।
क्वापि यान्ति शिशुपाचिताशनाः
सूर्य्यतप्तभिदुराम्बुपायिनः॥ २३६॥

तदेतत्सरः स्वल्पतोयं वर्त्तते। शीघ्रं शोषं यास्यति। अस्मिन् शुष्के यैः सह अहं वृद्धिं गतः, सदैव क्रीड़ितश्च ते सर्वे तोयाभावात् नाशं यास्यन्ति। तत् तेषां वियोगं द्रष्टुमहमसमर्थः। तेनैतत् प्रायोपवेशनं कृतम्। साम्प्रतं सर्वेषां स्वल्पजला-

---

भस्मास्थिशकलकीर्णा भस्मभिः प्राणिदाहोत्थैरिति भावः, अस्थिशकलैः कङ्काल-खण्डैः अदग्धानां मृतानामिति भावः कीर्णा व्याप्ता अतएव पातकं कृत्वेव कापालिकमिव व्रतं नियमं धत्ते धारयति कापालिका हि भस्मास्थिग्रहणरूपं व्रतं धारयन्तीति प्रसिद्धिः। अनावृष्ट्या शस्यविघातेन प्राणिनः अनाहारेणैव मरिष्यन्तीति भावः। आर्य्यावृत्तम॥ २३४॥

रोहिणीति। अर्कनन्दनः शनिः रुधिरः मङ्गलः अथवा शशी चन्द्रः चेत् यदि रोहिणीशकटं भिनत्ति भित्वा गच्छतीत्यर्थः तदा किं वदामि कथयामि, तदनिष्टसागरे तस्मिन् अमङ्गलाम्बुधौ संचयः सर्वलोकमुपयाति प्राप्नोति। उद्धतावृत्तम्॥ २३५॥

रोहिणीति। चन्द्रमसि चन्द्रे रोहिणीशकटमध्यसंस्थिते रोहिणीशकटं गते इत्यर्थः अशरणीकृताः निरवलम्बनीकृता जनाः शिशुपाचिताशनाः शिशून् स्वबालकान् पाचितान् अश्नन्तीति तथोक्ताः स्वान् स्वान् शिशून् पाचयित्वा खादन्त इत्यर्थः तथा सूर्य्येण तप्तानि भिदुराणि भेदं गतानि विनष्टप्रायाणीति भावः अम्बूनि जलानि पिबन्तीति तथाभूताः सन्तः क्वापि यान्ति म्रियन्ते इति भावः। उद्धतावृत्तं रात्परैर्नरलगैरथोद्धतेति तल्लक्षणात्॥ २३६॥

शयानां जलचरा गुरुजलाशयेषु स्वस्वजनैर्नीयन्ते, केचिच्च (ण) मकरगोधाशिशुमारजलहस्तिप्रभृतयः स्वयमेव गच्छन्ति। अत्र पुनः सरसि ये जलचरास्ते निश्चिन्ताः सन्ति, तेनाहं विशेषात् रोदिमि यद्बीजशेषमात्रमप्यत्र न उद्वरिष्यति (त) ततः स तदाकर्ण्य अन्येषामपि जलचराणां तत् तस्य वचनं निवेदयामास। अथ ते सर्वे भयत्रस्तमनसो मत्स्यकच्छपप्रभृतयः तमभ्युपेत्य पप्रच्छ। माम! अस्ति कश्चिदुपायो येन अस्माकं रक्षा भवति। वक आह, अस्ति अस्य जलाशयस्य न अतिदूरे प्रभूतजलसनाथं सरः पद्मिनीखण्डमण्डितं (थ) यच्चतुर्विंशत्यापि वर्षाणामवृष्ट्या न शोषमेष्यति। तद्यदि मम पृष्ठं कश्चिदारोहति तदहं तं तत्र नयामि। अथ ते तत्र विश्वासमापन्नाः तात! मातुल! भ्रात! इति ब्रुवाणा अहं पूर्वमहं पूर्वमिति समन्तात् परितस्थुः। सोऽपि दुष्टाशयः क्रमेण तान् पृष्ठे आरोप्य जलाशयस्य नातिदूरे शिलां समासाद्य तस्यामाक्षिप्य स्वेच्छया भक्षयित्वा भूयोऽपि जलाशयं समासाद्य जलचराणां मिथ्यावार्त्तासन्देशकैर्मनांसि रञ्जयन्नित्यामिवाहारवृत्तिमकरोत्। अन्यस्मिन् दिने च कुलीरकेणोक्तः, माम! मया सह ते प्रथमः स्नेहसम्भाषः (द) सञ्जातः तत् किं मां परित्यज्य अन्यान्नयसि। तस्मात् अद्य मे प्राणत्राणं कुरु। तदाकर्ण्य सोऽपि दुष्टाशयश्चिन्तितवान्।

---

(ण) मकरेति। मकराश्च गोधाश्च शिशुमाराश्च जलहस्तिनश्च प्रभृतयो येषां तथोक्ताः महाजलचरा इति भावः।

(त) उद्वरिष्यति स्थास्यति इत्यर्थः।

(थ) पद्मिनीति। पद्मिनीनां खण्डैः दलैः मण्डितम् समाकुलम्।

(द) स्नेहसम्भाषः प्रणयालापः।

निर्विण्णोऽहं (ध) मत्स्यमांसादनेन। तदद्य एनं कुलीरकं व्यञ्जनस्थाने (न) करोमि। इति विचिन्त्य तं पृष्ठे समारोप्य तां वध्यशिलामुद्दिश्य प्रस्थितः कुलीरकोऽपि दूरादेवास्थिपर्वतं शिलाश्रयमवलोक्य (प) मत्स्यास्थीनि परिज्ञाय तमपृच्छत्, माम! कियद्दूरे स जलाशयः, मदीयभारेण अतिश्रान्तस्त्वं तत् कथय, सोऽपि मन्दधीर्जलचरोऽयमिति मत्वा, स्थले न प्रभवतीति सस्मितमिदमाह। कुलीरक! कुतोऽन्यो जलाशयः? मम प्राणयात्रेयम्, तस्मात् स्मर्य्यतामात्मनोऽभीष्टदेवता। त्वामपि अस्यां शिलायां निक्षिप्य भक्षयिष्यामि। इत्युक्तवति तस्मिन् स्ववदनदंशद्वयेन मृणालनालधवलायां (फ) मृदुग्रीवायां गृहीतो मृतश्च। अथ स तां वकग्रीवां समादाय शनैः शनैः तज्जलाशयमाससाद। ततः सर्वैरेव जलचरैः पृष्टः, भो कुलीरक! किं निवृत्तः त्वम्? स मातुलोऽपि न आयातः? तत् किं चिरयति, वयं सर्वे सोत्सुकाः कृतक्षणास्तिष्ठामः (ब) एवं तैः अभिहिते कुलीरकोऽपि विहस्योवाच। मूर्खाः सर्वे जलचरास्तेन मिथ्यावादिना वञ्चयित्वा नातिदूरे शिलातले प्रक्षिप्य भक्षिताः। तन्मया आयुःशेषतया तस्य विश्वासघातकस्य अभिप्रायं ज्ञात्वा ग्रीवेयमानीता। तदलं सम्भ्रमेण (भ)

---

(ध) निर्विण्णः खिन्नः अनवरतभक्षणेन तृप्तत्वादिति भावः।

(न) व्यञ्जनस्थाने इति कुलीरकमांसेन व्यञ्जनं करोमि इत्यर्थः।

(प) शिलाश्रयं शिलोपरिस्थितम् इत्यर्थः।

(फ) मृणालधवलायां मृणालं पद्मगुल्मात् जातमतिशुभ्रं सुकोमलं लम्बमानं वस्तुविशेषः तद्वत् धवला ताम्।

(ब) कृतेक्षणाः प्रतीक्षमाणा इत्यर्थः।

(भ) सम्भ्रमेण भयेन। क्षेमं कुशलम्।

अधुना सर्वजलचराणां क्षेमं भविष्यति। अतोऽहं ब्रवीमि। भक्षयित्वा बहून् मत्स्यानिति।

वायस आह, भद्र! तत्कथय कथं स दुष्टसर्पो वधमुपैष्यति। शृगाल आह, गच्छतु भवान् कञ्चिन्नगरं राजाधिष्ठानम् (म) तत्र कस्यापि धनिनो राजामात्यादेः प्रमादिनः कनकसूत्रं हारं वा गृहीत्वा तत् कोटरे (य) प्रक्षिप येन सर्पस्तद्ग्रहणेन बध्यते (र) अथ तत्क्षणात् काकः काकी च तदाकर्ण्य आत्मेच्छयोत्पतितौ। ततश्च काकी किञ्चित्सरः प्राप्य यावत्पश्यति तावत् तन्मध्ये कस्यचिद्राज्ञोऽन्तःपुरं (ल) जलासन्नं न्यस्तकनकसूत्रं (व) मुक्तमुक्ताहारवस्त्राभरणं जलक्रीड़ां कुरुते। अथ सा वायसी कनकसूत्रमेकमादाय स्वगृहाभिमुखं प्रतस्थे। ततश्च कञ्चुकिनो वर्षधराश्च तं नीयमानमुपलक्ष्य गृहीतलगुड़ाः (श) सत्वरमनुययुः। काकी अपि सर्पकोटरे तत् कनकसूत्रं प्रक्षिप्य सुदूरमवस्थिता। अथ यावद्राजपुरुषास्तं वृक्षमारुह्य तत् कोटरमवलोकयन्ति तावत् कृष्णसर्पः प्रसारितभोगस्तिष्ठति (ष) ततस्तं लगुड़प्रहारेण

---

(म) राजाधिष्ठानं राज्ञा अधिष्ठितम्।

(य) प्रमादिनः अनवहितस्य। तत्कोटरे तस्य कृष्णसर्पस्य कोटरे गर्त्ते।

(र) बध्यते निहन्यते।

(ल) अन्तःपुरम् अन्तःपुरवासी जन इत्यर्थः। जलासन्नं जलम् आसन्नं यस्मिन् तद् यथा तथा क्रियाविशेषणमिदम्।

(व) न्यस्तं स्थापितं कनकसूत्रं येन तथाभूतम् अन्तःपुरमित्यस्य विशेषणमिदम्। मुक्तेति। मुक्तानि अङ्गात् उन्मुच्य रचितानि मुक्ताहारवस्त्राभरणानि येन तथोक्तं सत्।

(श) गृहीतलगुड़ाः लगुड़हस्ता इत्यर्थः।

(ष) प्रसारितभोगः विस्तारितदेहः। विस्तारितफणी वा। भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोरित्यमरः।

हत्वा कनकसूत्रमादाय यथाभिलषितं स्थानं गताः। वायसदम्पती अपि ततः परं सुखेन वसतः। अतोऽहं ब्रवीमि। उपायेन हि यत् कुर्य्यादिति। उक्तञ्च,

तन्न किञ्चिदिह बुद्धिमतामसाध्यमस्ति।
यस्य बुद्धिर्बलं तस्य निर्बुद्धेस्तु कुतो बलम्?
वने सिंहो मदोन्मत्तः शशकेन निपातितः॥ २३७॥

करटक आह, कथमेतत्? स आह।

## कथा ८।

कस्मिंश्चिद्वने भासुरको नाम सिंहः प्रतिवसति स्म। अथासौ वीर्य्यातिरेकान्नित्यमेव अनेकान् मृगशशकादीन् व्यापादयन् न उपरराम अथ अन्येद्युस्तद्वनजाः सर्वे सारङ्गवराहमहिषशशकादयो मिलित्वा तमभ्युपेत्य प्रोचुः। स्वामिन्! किमनेन सकलमृगवधेन? नित्यमेव यतस्तव एकेनापि मृगेण तृप्तिर्भवति। तत् क्रियतामस्माभिः सह समयधर्म्मः (स) अद्य प्रभृति तव अत्र उपविष्टस्य जातिक्रमेण प्रतिदिनमेको मृगो भक्षणार्थं समेष्यति। एवं कृते तव तावत् प्राणयात्रा क्लेशं विना अपि भविष्यति, अस्माकञ्च पुनः सर्वोच्छेदनं न स्यात्। तदेष राजधर्म्मोऽनुष्ठीयताम्।

उक्तञ्च, शनैः शनैश्च यो राज्यमुपभुङ्क्ते यथाबलम्।

---

यस्येति। यस्य जनस्य बुद्धिरस्तीति शेषः, तस्य बलम्। निर्बुद्धेः बुद्धिहीनस्य जनस्य बलं कुतः? नास्त्येव बलम् इत्यर्थः। तथाहि शशकेन वने मदोन्मत्तः सिंहः निपातितः बुद्धेरिति शेषः॥ २३७॥

(स) समयधर्मः नियमक्रमः व्यवस्थितनियम इत्यर्थः।

शनैरिति। यः शनै शनैः क्रमेण इत्यर्थः यथाबलं बलमनुसृत्य राज्यं रसायन-

रसायनमिव प्राज्ञः स पुष्टिं परमां व्रजेत् ॥ २३८ ॥
विधिना मन्त्रयुक्तेन रूक्षापि मथितापि च ।
प्रयच्छति फलं भूमिररणीव हुताशनम् ॥ २३९ ॥
प्रजानां पालनं शस्यं स्वर्गकोशस्य वर्द्धनम् ।
पीड़नं धर्मनाशाय पापायायशसे स्थितम् ॥ २४० ॥
गोपालेन प्रजाधेनोर्वित्तदुग्धं शनैः शनैः ।
पालनात्पोषणाद्ग्राह्यं न्याय्यां वृत्तिं समाचरेत् ॥२४१॥
अजामिव प्रजां मोहाद्यो हन्यात् पृथिवीपतिः ।
तस्यैका जायते तृप्तिर्न द्वितीया कथञ्चन ॥ २४२ ॥
फलार्थी नृपतिर्लोकान् पालयेत् यत्नमास्थितः ।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥ २४३ ॥

---

मिव औषधविशेषमिव उपभुङ्क्ते सः प्राज्ञः बुद्धिमान् जनः परमां महतीं पुष्टिं व्रजेत् प्राप्नोति ॥ २३८ ॥

विधिनेति । रूक्षापि कठिनापि भूमिः मन्त्रयुक्तेन सुयुक्तिसहितेन विधिना उपायेन अनुष्ठानेनेति यावत् मथिता विलोड़िता कृष्टेति भावः सती अरणी अग्निमन्थनदारुविशेषः हुताशनमिव अग्निमिव फलं प्रयच्छति प्रददाति ॥ २३९ ॥

प्रजानामिति । प्रजानां पालनं राज्ञ इति शेषः शस्यं प्रशंसनीयं स्वर्गकोषस्य स्वर्गरूपस्य धनभाण्डस्य वर्द्धनं वृद्धिकारकञ्च प्रजापालने इहलोके प्रशंसा, अन्ते च स्वर्गप्राप्तिरिति भावः । पीड़नं प्रजानामिति शेषः धर्मनाशाय पापाय अयशसे अकीर्त्तये च स्थितं नियतम् ॥ २४० ॥

गोपालेनेति । गोपालेन गोपेन प्रजाधेनोः प्रजारूपाया गोः पालनात् रक्षणात् पोषणात् प्रतिपालनाच्च शनैः शनैः वित्तदुग्धं दुग्धरूपं वित्तं धनं ग्राह्यं ग्रहणीयम् । तस्मात् न्यायात् युक्तियुक्तां वृत्तिं व्यवहारं समाचरेत् ॥ २४१ ॥

अजामिति । यः पृथिवीपतिः मोहात् अज्ञानात् प्रजाम् अजामिव छागमिव हन्यात् नाशयेत्, तस्य एका तृप्तिः तात्कालिकीति भावः जायते, कथञ्चन द्वितीया न ॥ २४२ ॥

फलार्थीति । फलार्थी नृपतिः यत्नमास्थितः यत्नवान् सन् मालाकारः

नृपदीपो धनस्नेहं प्रजाभ्यः संहरन्नपि।
अन्तरस्थैर्गुणैः शुभ्रैर्लक्ष्यते नैव केनचित् ॥ २४४ ॥
यथा गौर्दुह्यते काले पाल्यते च तथा प्रजाः।
सिच्यते चीयते चैव लता पुष्पफलप्रदा ॥ २४५ ॥
यथा बीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।
फलप्रदो भवेत् काले तद्वल्लोकः सुरक्षितः ॥ २४६ ॥
हिरण्यधान्यरत्नानि यानानि विविधानि च।
तथान्यदपि यत्किञ्चित् प्रजाभ्यः स्यान्महीपतेः ॥२४७॥
लोकानुग्रहकर्त्तारः प्रवर्द्धन्ते नरेश्वराः।
लोकानां संक्षयाच्चैव क्षयं यान्ति न संशयः ॥ २४८ ॥

---

मालौ अङ्कुरानिव वृक्षादीनामिति भावः लोकान् प्रजाः दानमानादितोयेन दानमानादिरूपेण जलेन पालयेत् पोषयेत् ॥ २४३ ॥

नृपदीप इति। नृपो दीप इवेति उपमितसमासः। दीपसदृशो नृपः अन्तरस्थैः शुभ्रैः गुणैः प्रजाभ्यः धनं स्नेह इव तं धनं तैलोपमं धनम् इत्यर्थः संहरन्नपि आकर्षन्नपि केनचित् जनेन नैव लक्ष्यते। प्रदीपो यथा दशया क्रमेण तैलमाकर्षन् केनापि न विभाव्यते, तथा नृपतिः स्वगुणेन प्रजाभ्यः करमाददानः न केनापि लक्ष्यते इति फलितार्थः ॥ २४४ ॥

यथेति। यथा गौः काले दुह्यते पाल्यते च तथा प्रजाः कालेन दुह्यन्ते पाल्यन्ते चेति शेषः। पुष्पफलप्रदा पुष्पाणि फलानि च प्रददातीति तथाभूता लता सिच्यते जलैरिति शेषः चीयते च पुष्पफलादिकमिति शेषः ॥ २४५ ॥

यथेति। यथा सूक्ष्मो बीजाङ्कुरः प्रयत्नेन अभिरक्षितः पर्य्यवेक्षितः सन् काले फलप्रदो भवेत् सुरक्षितः सुप्रतिपालितः लोकः तद्वत् फलप्रद इति शेषः ॥ २४६ ॥

हिरण्येति। महीपतेः राज्ञः हिरण्यधान्यरत्नानि हिरण्यानि स्वर्णानि, धान्यानि, रत्नानि मणयश्च तानि विविधानि नानाविधानि यानानि वाहनानि अश्वादीनि तथा अन्यत् यत् किञ्चिदपि धनं, तत्सर्वं प्रजाभ्यः स्यात् प्रजाभ्य एव सर्वाणि धनानि राज्ञा लभ्यन्ते इति भावः ॥ २४७ ॥

लोकेति। नरेश्वराः नृपतयः लोकानां प्रजानाम् अनुग्रहकर्त्तारः हित-

अथ तेषां तद्वचनमाकर्ण्य भासुरक आह, अहो! सत्यमभिहितं भवद्भिः, परं यदि मम उपविष्टस्य अत्र नित्यमेव नैकः श्वापदः समागमिष्यति तन्नूनं सर्वानपि भक्षयिष्यामि। अथ ते तथैव प्रतिज्ञाय निर्वृतिभाजः (ङ) तत्रैव वने निर्भयाः पर्य्यटन्ति। एकश्च प्रतिदिनं क्रमेण याति, वृद्धो वा, वैराग्ययुक्तो वा, शोकग्रस्तो वा, पुत्रकलत्रनाशभीतो वा, तेषां मध्यात् तस्य भोजनार्थं मध्याह्नसमये उपतिष्ठते। अथ कदाचित् जातिक्रमाच्छशकस्य अवसरः (च) समायातः स समस्तमृगैः प्रेरितोऽनिच्छन्नपि मन्दं मन्दं गत्वा तस्य बधोपायं चिन्तयन् वेलातिक्रमं कृत्वा व्याकुलितहृदयो यावद् गच्छति तावत् मार्गे गच्छता कूपः संदृष्टः। यावत् कूपोपरि (क) याति तावत् कूपमध्ये आत्मनः प्रतिबिम्बं ददर्श, दृष्ट्वा च तेन हृदये चिन्तितं यद्भव्य (ख) उपायोऽस्ति, अहं भासुरकं प्रकोप्य स्वबुद्ध्या अस्मिन् कूपे पातयिष्यामि। अथ असौ दिनशेषे भासुरकसमीपं प्राप्तः। सिंहोऽपि वेलातिक्रमेण क्षुत्क्षामकण्ठः कोपाविष्टः सृक्किणी (ग) परिलेलिहत् व्यचिन्तयत्। अहो! प्रातराहाराय निःसत्त्वं वनं मया कर्त्तव्यम्। एवं चिन्तयतस्तस्य शशको मन्दं मन्दं गत्वा

---

कारिणः सन्तः प्रवर्द्धन्ते प्रकर्षेण वृद्धिं गच्छन्ति। लोकानां प्रजानां संचयात् संचयकरणात् क्षयं नाशं यान्ति गच्छन्ति च, संशयः सन्देहः नास्तीति शेषः॥ २४८॥

(ङ) निर्वृतिभाजः निरुद्वेगा इत्यर्थः।

(च) अवसरः समयः वार इत्यर्थः।

(क) कूपोपरि याति कूपे दृष्टिं निक्षिपतीति भावः।

(ख) भव्यः उत्तमः।

(ग) सृक्किणी ओष्ठप्रान्तौ। परिलेलिहत् पुनः पुनर्लिहन्।

प्रणम्य तस्य अग्रे स्थितः। अथ तं प्रज्वलितात्मा भासुरको भर्त्सयन्नाह, रे शशकाधम! एकतः तावत् त्वं लघुः, प्राप्तोऽपरतः वेलातिक्रमेण, तदस्मादपराधात् त्वां निपात्य प्रातः सकलान्यपि मृगकुलानि उच्छेदयिष्यामि। अथ शशकः सविनयं प्रोवाच स्वामिन्! न अपराधो मम, न च सत्त्वानाम्, तत् श्रूयतां कारणम्, सिंह आह, सत्वरं निवेदय यावत् मम दंष्ट्रान्तर्गतो न भवान् भविष्यतीति। शशक आह, स्वामिन्! समस्तमृगैरद्य जातिक्रमेण मम लघुतरस्य प्रस्तावं (घ) विज्ञाय ततोऽहं पञ्चशशकैः समं प्रेषितः। ततश्च अहमागच्छन् अन्तराले महता केनचिदपरेण सिंहेन विवरान्निर्गत्य अभिहितः। रे! क्व प्रस्थिता यूयम्? अभीष्टदेवतां स्मरत, ततो मयाभिहितम्, वयं स्वामिनो भासुरकसिंहस्य सकाशे आहारार्थं समयधर्मेण गच्छामः। ततः तेन अभिहितम्, यद्येवं तर्हि मदीयमेतद्वनं मया सह समयधर्मेण समस्तैरपि श्वापदैर्वर्त्तितव्यम्। चौररूपी स भासुरकः। अथ यदि सोऽत्र राजा ततो विश्वासस्थाने चतुरः शशकानत्र धृत्वा तमाहूय द्रुततरमागच्छ, येन यः कश्चिदावयोर्मध्यात् पराक्रमेण राजा भविष्यति स सर्वानेतान् भक्षयिष्यतीति—ततोऽहं तेनादिष्टः स्वामिसकाशमभ्यागतः, एतत् वेलाव्यतिक्रमकारणम्। तदत्र स्वामी प्रमाणम्। तच्छ्रुत्वा भासुरक आह, भद्र! यदि एवं तत् सत्वरं दर्शय मे तं चौरसिंहम्, येन अहं मृगकोपं तस्य उपरि क्षिप्त्वा स्वस्थो भवामि। उक्तञ्च,

भूमिर्मित्रं हिरण्यञ्च विग्रहस्य फलत्रयम्।

---

(घ) प्रस्तावं भवदन्तिके आगमनप्रसङ्गम् इत्यर्थः।

भूमिरिति। भूमिः राज्यं मित्रं सुहृत् हिरण्यं स्वर्णादिधनम् एतत् विग्र-

नास्त्येकमपि यद्येषां न तं कुर्य्यात् कथञ्चन ॥ २४९ ॥
यत्र न स्यात् फलं भूरि यत्र च स्यात्पराभवः ।
न तत्र मतिमान् युद्धं समुत्पाद्य समाचरेत् ॥ २५० ॥

शशक आह, स्वामिन् ! सत्यमिदम्, स्वभूमिहेतोः परिभवाच्च युध्यन्ते क्षत्रियाः, परं स दुर्गाश्रयः, (ङ) दुर्गान्निष्क्रम्य वयं तेन विष्कम्भिताः (च) । ततो दुर्गस्थो दुःसाध्यो भवति रिपुः । उक्तञ्च,

न गजानां सहस्रेण न च लक्षेण वाजिनाम् ।
यत्कृत्यं साध्यते राज्ञां दुर्गेणैकेन सिद्ध्यति ॥ २५१ ॥
शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः ।
तस्माद्दुर्गं प्रशंसन्ति नीतिशास्त्रविचक्षणाः ॥ २५२ ॥
पुरा गुरोः समादेशात् हिरण्यकशिपोर्भयात् ।
शक्रेण विहितं दुर्गं प्रभावाद्विश्वकर्मणः ॥ २५३ ॥

---

हस्य युद्धस्य फलत्रयं युद्धजये सति एतत् त्रयं लभ्यते इति भावः । यदि एषां त्रयाणामेकमपि न अस्ति, तदा कथञ्चन तं विग्रहं न कुर्य्यात् ॥ २४९ ॥

यत्रेति । यत्र विग्रहे भूरि महत् फलं न स्यात् न लभ्यते इत्यर्थः, यत्र च विषये पराभवः पराजयः स्यात् सम्भवेत्, मतिमान् जनः तत्र युद्धं समुत्पाद्य न समाचरेत् ॥ २५० ॥

(ङ) दुर्गाश्रयः दुर्गमध्यवर्त्ती ।

(च) विष्कम्भिताः अवरुद्धाः । दुःसाध्यः दुर्जयः ।

नेति । गजानां सहस्रेण यत् कृत्यं न साध्यते, तथा वाजिनाम् अश्वानां लक्षेण यत् कृत्यं न साध्यते, राज्ञाम् एकेन दुर्गेण तत्कार्य्यं सिद्ध्यति ॥ २५१ ॥

शतमिति । एकोऽपि प्राकारस्थः दुर्गप्राचीरोपरिस्थितः धनुर्धरः शतं योधमिति शेषः सन्धत्ते योधयति इत्यर्थः । तस्मात् नीतिशास्त्रविचक्षणाः नीतिज्ञाः दुर्गं प्रशंसन्ति ॥ २५२ ॥

पुरेति । पुरा पूर्वस्मिन् काले हिरण्यकशिपोः दैत्यराजस्य भयात् हेतोः शक्रेण इन्द्रेण गुरोः बृहस्पतेः समादेशात् विश्वकर्मणः प्रभावात् विश्वकर्मप्रभावेण दुर्गं विहितम् ॥ २५३ ॥

तेनापि च वरो दत्तो यस्य दुर्गं स भूपतिः।
विजयी स्यात्ततो भूमौ दुर्गाणि स्युः सहस्रशः॥२५४॥

दंष्ट्राविरहितो नागो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः॥ २५५॥

तच्छ्रुत्वा भासुरक आह, भद्र! दुर्गस्थमपि दर्शय तं चौरसिंहं येन व्यापादयामि। उक्तञ्च,

जातमात्रं न यः शत्रुं रोगञ्च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते॥ २५६॥

तथाच, उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च॥२५७॥

अपिच, उपेक्षितः क्षीणबलोऽपि शत्रुः
प्रमाददोषात्पुरुषैर्मदान्धैः।
साध्योऽपि भूत्वा प्रथमं ततोऽसौ
असाध्यतां व्याधिरिव प्रयाति॥ २५८॥

---

तेनेति। तेन इन्द्रेणापि वरः दत्तः राजभ्य इति शेषः, यस्य भूपतेः दुर्गः अस्तीति शेषः स भूपतिः विजयी स्यात्। ततः वरप्रदानानन्तरं भूमौ पृथिव्यां सहस्रशः दुर्गाणि स्युः॥ २५४॥

दंष्ट्रेति। दंष्ट्राविरहितः दन्तविहीनः नागः पन्नगः यथा, मदहीनः गजो यथा सर्वेषां वश्यः जायते, तथा दुर्गहीनो नृपः सर्वेषां वशगो भवेदिति शेषः॥२५५

जातमात्रमिति। यः जातमात्रम् उत्पन्नम् वं शत्रुं रोगञ्च न प्रशमं नयेत् न नाशयेदित्यर्थः स महाबलोऽपि तेनैव शत्रुणा रोगेण च वृद्धिं प्राप्य हन्यते विनाश्यते॥ २५६॥

उत्तिष्ठमान इति। पथ्यं हितम् इच्छता अभिलषता पुरुषेण उत्तिष्ठमानः उत्पद्यमानः परः शत्रुः न उपेक्ष्यः, हि यतः शिष्टैः साधुभिः वर्त्स्यन्तौ वृद्धिं गमिष्यन्तौ आमयः रोगः स च शत्रुश्च समौ तुल्यौ समाम्नातौ कथितौ॥ २५७॥

उपेक्षित इति। मदान्धैः गर्वान्धैः पुरुषैः प्रमाददोषात् अनवधानतारूपात् दोषात् उपेक्षितः शत्रुः क्षीणबलोऽपि प्रथमं साध्यः प्रतीकार्य्योऽपि भूत्वा ततः

तथाच, आत्मनः शक्तिमुद्वीच्य मानोत्साहञ्च यो व्रजेत् ।
बहून् हन्ति स एकोऽपि चत्रियान् भार्गवो यथा ॥२५९॥

शशक आह, अस्त्येतत्तथापि बलवान् स मया दृष्टः तत् न युज्यते स्वामिनस्तस्य सामर्थ्यमविदित्वा गन्तुम् ।

उक्तञ्च, अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः ।
गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥ २६० ॥
यो बलात् प्रोन्नतं याति निहन्तुं सबलोऽप्यरिम् ।
विमदः स निवर्त्तेत शीर्णदन्तो गजो यथा ॥ २६१ ॥

भासुरकः आह, भो ! किं तव अनेन व्यापारेण, दर्शय मे तं दुर्गस्थमपि। अथ शशक आह, यद्येवं तर्हि आगच्छतु स्वामी । एवमुक्त्वा अग्रे व्यवस्थितः । ततश्च तेन आगच्छता यः कूपो दृष्टोऽभूत् तमेव कूपमासाद्य भासुरकमाह । स्वामिन् ! कस्ते प्रतापं सोढुं समर्थः। त्वां दृष्ट्वा दूरतोऽपि चौरसिंहः प्रविष्टः स्वं दुर्गम्, तदागच्छ येन दर्शयामीति। भासुरक आह, दर्शय मे दुर्गम्। तदनु दर्शितस्तेन कूपः। ततः

---

उपेक्षामलिनेति भावः व्याधिरिव असाध्यताम् अप्रतिविधेयतां प्रयाति गच्छति ॥ २५८ ॥

आत्मन इति । यः आत्मनः स्वस्य शक्तिं सामर्थ्यम् उद्वीच्य पर्य्यालोच्य मानोत्साहं मानरक्षार्थमुद्यमं व्रजेत् गच्छेत् कुर्य्यादिति भावः स एकोऽपि भार्गवो यथा परशुराम इव बहून् चत्रियान्, परशु हन्ति नाशयति ॥ २५९ ॥

अविदित्वेति । आत्मनः परस्य च शक्तिम् अविदित्वा समुत्सुकः अधीरः सन् अभिमुखः शत्रूनभिमुखीभूय च गच्छन् वह्नौ अग्नौ पतङ्गवत् शलभ इव नाशं याति प्राप्नोति ॥ २६० ॥

य इति । यः सबलोऽपि बलात् बलमाश्रित्य प्रोन्नतं प्रबलम् अरिं शत्रुं निहन्तुं याति गच्छति, स शीर्णदन्तः भग्नदशनः गजो यथा विमदः चूर्णगर्वः सन् निवर्त्तेत ॥ २६१ ॥

सोऽपि मूर्खः सिंहः कूपमध्ये आत्मप्रतिविम्बं जलमध्यगतं दृष्ट्वा सिंहनादं मुमोच। ततः प्रतिशब्देन कूपमध्याद्‌द्विगुणतरो नादः समुत्थितः। अथ तेन तं शत्रुं मत्वा आत्मानं तस्य उपरि प्रक्षिप्य प्राणाः परित्यक्ताः। शशकोऽपि हृष्टमनाः सर्वमृगान् आनन्द्य तैः सह प्रशस्यमानो यथासुखं तत्र वने निवसति स्म। अतोऽहं ब्रवीमि। यस्य बुद्धिर्बलं तस्येति।

तद्यदि भवान् कथयति, तत् तत्रैव गत्वा तयोः स्वबुद्धिप्रभावेण मैत्रीभेदं करोमि। करटक आह, भद्र! यदि एवं तर्हि गच्छ, शिवास्ते पन्थानः सन्तु, यथाभिप्रेतमनुष्ठीयताम्। अथ दमनकः सञ्जीवकवियुक्तं (छ) पिङ्गलकमवलोक्य तत्रान्तरे प्रणम्याग्रे समुपविष्टः। पिङ्गलकोऽपि तमाह, भद्र! किं चिरात् दृष्टः? दमनक आह, न किञ्चिद्देवपादानामस्माभिः प्रयोजनं, तेन अहं न आगच्छामि। तथापि राजप्रयोजनविनाशमवलोक्य सन्दह्यमानहृदयो व्याकुलतया स्वयमेव अभ्यागतो वक्तुम्। उक्तञ्च,

प्रियं वा यदि वा द्वेष्यं शुभं वा यदि वाशुभम्।
अपृष्टोऽपि हितं वक्ष्येत् यस्य नेच्छेत् पराभवम्॥ २६२॥

अथ तस्य साभिप्रायं वचनमाकर्ण्य पिङ्गलक आह। किं वक्तुमना भवान्? तत्कथ्यतां यत्कथनीयमस्ति, स प्राह देव! सञ्जीवको युष्मत्पादानामुपरि द्रोहबुद्धिः (ज) इति विश्वास-

---

(छ) सञ्जीवकवियुक्तं सञ्जीवकेन रहितम्।

प्रियमिति। यो जनः यस्य पराभवं पराजयं नाशमित्यर्थः न इच्छेत्, स जनः अपृष्टोऽपि तस्य जनस्य प्रियं वा, यदि वा द्वेष्यम् अप्रियं शुभं वा, यदि वा अशुभं भवतु इति शेषः हितं वक्ष्येत् कथयेत् वचधातोर्दिवादिकात् विधिलिङ् ॥ २६२ ॥

(ज) द्रोहबुद्धिः द्रोहे अनिष्टे बुद्धिर्यस्य तथाभूतः विद्रोहार्थीत्यर्थः।

गतस्य (झ) मम विजने इदमाह। भो दमनक! दृष्टा मया अस्य पिङ्गलकस्य सारासारता(ञ) तदहमेनं हत्वा सकलमृगाधिपत्यं त्वत्साचिव्यपदवीसमन्वितं (ट) करिष्यामि। पिङ्गलकोऽपि तद्वज्रसारप्रहारसदृशं दारुणं वचः समाकर्ण्य मोहमुपगतो न किञ्चिदपि उक्तवान्। दमनकोऽपि तस्य तमाकारमालोक्य चिन्तितवान्। अयं तावत् (ठ) सञ्जीवकनिबद्धरागः तन्नूनमनेन मन्त्रिणा राजा विनाशमवाप्स्यतीति। उक्तञ्च,

एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदाद्दास्येन निर्विद्यते।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणेष्वभिद्रुह्यते ॥२६३॥

---

(झ) विश्वासगतस्य विश्वस्तस्य।

(ञ) सारासारता बलाबलत्वम्।

(ट) त्वत्साचिव्येति। तव या साचिव्यपदवी मन्त्रिपदं तत्सहितम्। मम मृगाधिराज्ये त्वया मन्त्रिणा भवितव्यमिति भावः।

(ठ) सञ्जीवकेति। सञ्जीवके निबद्धः रागो येन तादृशः सञ्जीवके बद्धानुराग इत्यर्थः।

एकमिति। यदा भूमिपतिः एकं सचिवं मन्त्रिणं राज्ये प्रमाणं करोति एकस्मिन्नेव सचिवे सर्वराज्यभारं निक्षिपति इत्यर्थः। तदा तं सचिवं मोहात् अज्ञानात् मदः गर्वः अहमेव सर्वेषां प्रभुरित्येवं रूप इति भावः श्रयते आश्रयति, स च सचिवः मदात् तादृशात् गर्वात् दास्येन निर्विद्यते निर्वेदं गच्छति अहं सर्वस्य प्रभुरपि अस्य दास इति स्वात्मावमाननां गच्छतीति भावः ततः निर्विण्णस्य नि ेदं गतस्य सचिवस्य हृदये स्वतन्त्रस्पृहा स्वाधीनताकाङ्क्षा पदं करोति, कथमहं स्वाधीनो भवामीति आकाङ्क्षा जायते इति भावः। ततः सः स्वातन्त्र्यस्पृहया नृपतेः प्राणेषु अभिद्रुह्यते द्रोहमाचरति राजनि निहते ममैवाधिपत्यं भवेत् इति अभिलाषेण नृपतिं नाशयतीति भावः। शार्दूलविक्रीडितं वृत्तम् ॥२६३

तत् किमत्र युक्तमिति। पिङ्गलकोऽपि चेतनां समासाद्य कथमपि तमाह दमनक! सञ्जीवकस्तावत् प्राणसमो भृत्यः स कथं ममोपरि द्रोहबुद्धिं करोति। दमनक आह देव! भृत्यो भृत्य इति अनेकान्तिकमेतत् (ङ)।

उक्तञ्च, न सोऽस्ति पुरुषो राज्ञां यो न कामयते श्रियम्।
अशक्ता एव सर्वत्र नरेन्द्रं पर्य्युपासते॥ २६४॥

पिङ्गलक आह, भद्र! तथापि मम तस्य उपरि चित्तवृत्तिर्न विकृतिं याति। अथवा साधु इदमुच्यते,

अनेकदोषदुष्टोऽपि कायः कस्य न वल्लभः।
कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः॥ २६५॥

दमनक आह, अत एव अयं दोषः। उक्तञ्च,

यस्मिन्नेवाधिकं चक्षुरारोपयति पार्थिवः।
अकुलीनः कुलीनो वा स श्रियो भाजनं नरः॥ २६६॥

अपरं केन गुणविशेषेण स्वामी सञ्जीवकं निर्गुणकमपि निकटे धारयति (ढ)। अथ देव! यदि एवं चिन्तयसि महा-

---

(ङ) अनैकान्तिकम् अव्याप्यवृत्ति, यो भृत्यः स चिरमेव भृत्यत्वमभिलषति इति न, कदाचिदपि तस्मात् आत्मानं मोचयितुं सर्व एव यतते इति भावः।

नेति। यः राज्ञां श्रियं न कामयते, स पुरुषो नास्ति, सर्व एव राजश्रियं कामयते इत्यर्थः। सर्वत्र सर्वस्मिन् प्रदेशे अशक्ताः अक्षमा एव पुरुषाः नरेन्द्रं नृपं पर्य्युपासते सेवन्ते॥ २६४॥

अनेकेति। अनेकदोषदुष्टोऽपि बहुभिर्दोषैराव्रतोऽपि कायः देहः कस्य जनस्य न प्रियः? सर्वस्यैव प्रिय इत्यर्थः। यः प्रियः, स व्यलीकानि अप्रियाणि। व्यलीकन्त्वप्रियानृते इत्यमरः। कुर्वन्नपि प्रिय एव॥ २६५॥

यस्मिन्निति। पार्थिवः नृपतिः यस्मिन् एव जने अधिकं चक्षुः आरोपयति ददाति यमधिकम् आद्रियते इत्यर्थः स नरः कुलीनः अकुलीनो वा श्रियः सम्पदः भाजनं पात्रं भवतीति शेषः॥ २६६॥

(ढ) धारयति रक्षति।

कार्योऽयमनेन रिपून् व्यापादयिष्यामि, तदस्मात् न सिध्यति, यतोऽयं शष्पभोजी देवपादानां पुनः शत्रवो मांसाशिनः। तत् रिपुसाधनम् (ण) अस्य साहाय्येन न भवति। तस्मादेनं दूषयित्वा (त) हन्यतामिति। पिङ्गलक आह,

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
तस्य दोषो न वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ २६७॥

अन्यच्च, मया अस्य तव वचनेन अभयप्रदानं दत्तम्। तत्कथं स्वयमेव व्यापादयामि। सर्वथा सञ्जीवकोऽयं सुहृत् अस्माकं न तं प्रति कश्चित् मन्युरिति। उक्तञ्च,

इतः स दैत्यः प्राप्तश्रीर्नेत एवार्हति क्षयम्।
विषवृक्षोऽपि संवर्द्ध्य स्वयं छेत्तुमसाम्प्रतम्॥ २६८॥

आदौ न वा प्रणयिनां प्रणयो विधेयो
दत्तोऽथवा प्रतिदिनं परिपोषणीयः।
उत्क्षिप्य यत् क्षिपति तत् प्रकरोति लज्जां
भूमौ स्थितस्य पतनात् भयमेव नास्ति॥ २६९॥

---

(ण) रिपुसाधनं शत्रुजयः।

(त) दूषयित्वा दूषितं कृत्वा।

उक्त इति। पूर्वं संसदि सभायां गुणवान् इति उक्तः कथितो भवति, प्रतिज्ञाभङ्गभीरुणा जनेन तस्य दोषो न वक्तव्यः॥ २६७॥

(थ) मन्युः क्रोधः क्रोधकारणमिति भावः।

इत इति। तारकासुरपीड़िताम् तद्वधार्थिनो देवान् प्रति ब्रह्मण उक्तिरियं स दैत्यः तारकः इतः मत्तः सकाशादित्यर्थः प्राप्ता श्रीः त्रिलोकैश्वर्यं येन तथाभूतः, अतः इत एव मत्त एव क्षयं ध्वंसं न अर्हति, तथाहि विषवृक्षः अपि स्वयम् आत्मना संवर्द्ध्य छेत्तुं हन्तुम् असाम्प्रतम् अयुक्तः। युक्ते द्वे साम्प्रतं स्थाने इत्यमरः॥ २६८॥

आदाविति। आदौ प्रथमं वा प्रणयिनां प्रणयः न विधेयः, न कर्त्तव्यः,

उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ?।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ २७० ॥

तद्‌द्रोहबुद्धेरपि मया अस्य न विरुद्धमाचरणीयम्। दमनक आह, स्वामिन्! नैष राजधर्मो यद्‌द्रोहबुद्धेरपि क्षम्यते। उक्तञ्च,

तुल्यार्थं तुल्यसामर्थ्यं मर्मज्ञं व्यवसायिनम्।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥ २७१ ॥

अपरं त्वया अस्य सखित्वात् सर्वोऽपि राजधर्मः परित्यक्तो, राजधर्माभावात् सर्वोऽपि परिजनो विरक्तिं गतो, यः सञ्जीवकः शष्पभोजी, भवान् मांसादः, तव प्रकृतयश्च। यत्तव अवध्यव्यवसायवाह्यं (द) कुतस्तासां मांसाशनम्। यद्रहिताः ताः (ध) त्वां त्यक्त्वा यास्यन्ति। ततोऽपि त्वं विनष्ट एव

---

अथवा दत्तः प्रणय इति शेषः प्रतिदिनं परिपोषणीयः रक्षणीयः। प्रथमं तावत् प्रणयी न कर्त्तव्यः कृतश्चेत् न त्याज्य इति भावः। उत्क्षिप्य उत्तोल्य क्षिपतीति यत् तत् लज्जां प्रकरोति जनयति. भूमौ स्थितस्य जनस्य पतनात् भयमेव नास्ति, कस्यापि वर्द्धनं कृत्वा अधःपतनात् वर्द्धनाकरणमेव वरमिति भावः ॥२६९॥

उपकारिष्विति। यः उपकारिषु जनेषु साधुः, तस्य साधुत्वे गुणः कः ? न कोऽपीत्यर्थः। यः अपकारिषु साधुः, स एव सद्भिः साधुः उच्यते ॥ २७० ॥

तुल्यार्थमिति। यः तुल्यार्थं तुल्यप्रयोजनं तुल्यसामर्थ्यं तुल्यबलं मर्मज्ञम् आशयज्ञं छिद्राभिज्ञमिति भावः व्यवसायिनम् उद्युक्तम् अतएव अर्द्धराज्यहरं राज्यार्द्धहारित्वेन सम्भाव्यमानमिति भावः भृत्यं न हन्यात्, स हन्यते तेनैव भृत्येनेति शेषः ॥ २७१ ॥

(द) मांसादः मांसभोजी मांसभोजिन्यश्च एकवचनान्तपक्षे अन्प्रत्ययः बहुवचनान्तपक्षे क्विप्प्रत्ययो बोध्यः। यत् मांसाशनं तव अवध्यव्यवसायात् वाह्यं बहिःस्थितं वधव्यवसायराहित्येन मांसस्य दुष्प्रापत्वादिति भावः।

(ध) यद्रहिताः येन मांसेन रहिताः। ताः प्रकृतयः अमात्यादयः अनुचरवर्गा इति भावः।

अस्य सङ्गत्या पुनस्ते न कदाचित् आखेटके(त) मतिः भविष्यति।
उक्तञ्च,

याद्दशैः सेव्यते भृत्यैर्याद्दशांश्चोपसेवते।
कदाचिन्नात्र सन्देहस्ताद्दक् भवति पूरुषः ॥ २७२ ॥

तथाच, सन्तप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्रस्थितं राजते।
स्वातौ सागरशुक्तिकुक्षिपतितं तज्जायते मौक्तिकं
प्रायेणाधममध्यमोत्तमगुणः संवासतो जायते ॥२७३॥

तथाच, असतां सङ्गदोषेण साधवो यान्ति विक्रियाम्।
दुर्य्योधनप्रसङ्गेन भीष्मो गोहरणे गतः ॥ २७४ ॥

अतएव सन्तो नीचसङ्गं वर्जयन्ति। उक्तञ्च,

न ह्यविज्ञातशीलस्य प्रदातव्यः प्रतिश्रयः।

---

(त) अस्य सञ्जीवकस्य सङ्गत्या संसर्गेण, ते तव। आखेटके मृगयायां मतिर्न भविष्यतीति सम्बन्धः।

याद्दशैरिति। याद्दशैः भृत्यैः सेव्यते प्रभुरिति शेषः, याद्दशांश्च भृत्यानिति शेषः उपसेवते पालयति पूरुषः ताद्दक् ताद्दशगुणसम्पन्नः भवति, अत्र विषये कदाचित् सन्देहः न अस्तीति शेषः ॥ २७२ ॥

सन्तप्तायसीति। सन्तप्ते अयसि लौहे संस्थितस्य पयसः जलस्य नामापि न ज्ञायते, सद्य एव शुष्कत्वादिति भावः तदेव पयः नलिनीपत्रस्थितं पद्मिनीपत्राग्रसंस्थितं सत मुक्ताकारतया मौक्तिकवत् इत्यर्थः राजते शोभते। तत् पयः स्वातौ स्वातिनक्षत्रे सागरस्य शुक्तेः कुक्षिपतितम् अभ्यन्तरनिपातितं सत् मौक्तिकं जायते। तस्मात् संवासतः संसर्गात् प्रायेण अधमः मध्यमः उत्तमश्च गुणः जायते। शार्दूलविक्रीड़ितं वृत्तम् ॥ २७३ ॥

असतामिति। साधवः असतां दुर्जनानां सङ्गदोषेण विक्रियां विकारं यान्ति। तथाहि भीष्मः दुर्य्योधनप्रसङ्गेन दुर्य्योधनसंसर्गेण गोहरणे उत्तरगोग्रहे गतः ॥ २७४ ॥

नहीति। अविज्ञातशीलस्य अज्ञातचरित्रस्य जनस्य प्रतिश्रयः आश्रयः नहि

मत्कुणस्य च दोषेण हता मन्दविसर्पिणी ॥ २७५ ॥

पिङ्गलक आह, कथमेतत् ? सोऽब्रवीत्।

## कथा ९।

अस्ति कस्यचित् महीपतेः कस्मिंश्चित् स्थाने मनोरमं शयनस्थानम्। तत्र शुक्लतरपटयुगलमध्यसंस्थिता (प) मन्दविसर्पिणी नाम श्वेता यूका (फ) प्रतिवसति स्म। सा च तस्य महीपते रक्तमास्वादयन्ती सुखेन कालं नयमाना तिष्ठति। अन्येद्युश्च तत्र शयने क्वचिद्भ्राम्यन् अग्निमुखो नाम मत्कुणः समायातः। अथ तं दृष्ट्वा सा विषण्णवदना प्रोवाच, भो अग्निमुख! कुतस्त्वमत्र अनुचितस्थाने समायातः, तद्यावत् न कश्चिद्वेत्ति तावच्छीघ्रं गम्यतामिति। स आह, भगवति! गृहागतस्य असाधोरपि नैतत् युज्यते वक्तुम्। उक्तञ्च,

एह्यागच्छ समाश्वसासनमिदं कस्माच्चिराद्दृश्यसे
का वार्त्तान्वतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात्।
एवं नीचजनेऽपि युज्यति गृहं प्राप्ते सतां सर्वदा
धर्मोऽयं गृहमेधिनां निगदितः स्मार्त्तैर्लघुः स्वर्गदः ॥२७६॥

---

प्रदातव्यः तथाहि मत्कुणस्य शय्याकीटविशेषस्य दोषेण मन्दविसर्पिणी हता विनाशिता ॥ २७५ ॥

(प) तत्र शयनस्थाने। शुक्लेति। शुक्लतरम् अतिशुक्लं यत् पटयुगलं वस्त्रयुगलं तन्मध्यसंस्थिता।

(फ) यूका मत्कुणविशेषः।

एहीति। एहि आगच्छ, समाश्वस समाश्वस्तो भव, आसनमिदम् उपविशेति भावः। कस्मात् चिरात् दृश्यसे ? नु भोः का वार्त्ता ? कः संवादः ? अतिदुर्बलोऽसि, कुशलं तवेति शेषः, ते तव दर्शनात् प्रीतोऽस्मि। नीचजनेऽपि गृहं प्राप्ते सति सतां साधूनां सर्वदा एवम् उक्तप्रकारम् आलपनमिति शेषः युज्यति।

अपरं मया अनेकमानुषाणामनेकविधानि रुधिराणि आस्वादितानि आहारदोषात् कटुतिक्तकषायाम्लरसास्वादानि न च मया कदाचिन्मधुररक्तं समास्वादितम्। तद्यदि त्वं प्रसादं करोषि, तदस्य नृपतेर्विविधव्यञ्जनान्नपानचोष्यलेह्यस्वाद्वाहारवशादस्य शरीरे यत् मिष्टं रक्तं सञ्जातं, तदास्वादनेन सौख्यं सम्पादयामि जिह्वया इति। उक्तञ्च,

रङ्कस्य नृपतेर्वापि जिह्वासौख्यं समं स्मृतम्।
तन्मात्रञ्च स्मृतं सारं यदर्थं यतते जनः॥ २७७॥

यद्येव न भवेल्लोके कर्म जिह्वाप्रतुष्टिदम्।
तन्न भृत्यो भवेत् कश्चित् कस्यचिद्वशगोऽथवा॥२७८॥

यदसत्यं वदेत् मर्त्यो यद्वासेव्यञ्च सेवते।
यद्गच्छति विदेशञ्च तत्सर्वंमुदरार्थतः॥ २७९॥

तत् मया गृहागतेन (व) बुभुक्षया पीड्यमानेन त्वत्सकाशाद्भोजनम् अर्थनीयम् (भ) तन्न त्वया एकाकिन्या अस्य भूपतेः रक्तभोजनं कर्त्तुं युज्यते। तच्छ्रुत्वा मन्दविसर्पिणी आह, भो

---

आर्त्तैः स्मृतविशारदैः पण्डितैः गृहमेधिनां गृहिणाम् अयं स्वर्गदः स्वर्गसाधनं लघुः सामान्यो धर्मः निगदितः कथितः। शार्दूलविक्रीड़ितं वृत्तम्॥ २७६॥

रङ्कस्येति। रङ्कस्य दरिद्रस्य नृपतेश्चापि जिह्वासौख्यं रसनासुखं समं तुल्यं स्मृतम्। यदर्थं जनः यतते तन्मात्रं वस्तु सारम् स्मृतम्॥ २७७॥

यदीति। यदि लोके जगति जिह्वाप्रतुष्टिदं रसनासन्तोषप्रदं कर्म नैव भवेत्, तत तदा कश्चित् जनः कस्यापि वशगः वाध्यः भृत्यः न भवेत्। सर्व एव जिह्वातुष्टये लोकस्य वशगो भवतीति भावः॥ २७८॥

यदिति। मर्त्यः मानवः यत् असत्यं वदेत्, यद्वा असेव्यं जनं नीचमिति भावः सेवते, यच्च विदेशं गच्छति, तत् सर्वम् उदरार्थतः उदरपोषणार्थमेव इत्यर्थः॥ २७९॥

(व) गृहागतेन अतिथिना।

(भ) अर्थनीयं प्रार्थनीयम्।

मत्कुण! अहमस्य नृपतेर्निद्रावशं गतस्य रक्तमास्वादयामि, पुनः त्वम् अग्निमुखः चपलश्च, तत् यदि मया सह रक्तपानं करोषि तत्तिष्ठ। अभीष्टतरं रक्तमास्वादय। सोऽब्रवीत्, भगवति! एवं करिष्यामि, यावत्त्वं न आस्वादयसि प्रथमं नृपरक्तं, तावत् मम देवगुरुकृतः (म) शपथः स्याद् यदि तत् आस्वादयामि। एवं तयोः परस्परं वदतोः स राजा तच्छयनमासाद्य प्रसुप्तः। अथ असौ मत्कुणो जिह्वालौल्यप्रकृष्टौत्सुक्यात् (य) जाग्रतमपि तं महीपतिम् अदशत्। अथवा साधु इदमुच्यते,

स्वभावो नोपदेशेन शक्यते कर्त्तुमन्यथा।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥ २८० ॥

यदि स्याच्छीतलो वह्निः शीतांशुर्दहनात्मकः।
न स्वभावोऽत्र मर्त्यानां शक्यते कर्त्तुमन्यथा ॥ २८१ ॥

अथ असौ महीपतिः सूच्यग्रविद्ध इव तच्छयनं त्यक्त्वा तत्क्षणादेव उत्थितः। अहो! ज्ञायतामत्र प्रच्छादनपटे मत्कुणो, यूका वा, नूनं तिष्ठति येन अहं दष्ट इति। अथ ये कञ्चुकिनस्तत्र स्थितास्ते सत्वरं प्रच्छादनपटं गृहीत्वा सूक्ष्म-दृष्ट्या वीक्षां चक्रुः। अत्रान्तरे स मत्कुणः चापल्यात् खट्वान्तं

---

(म) देवगुरुकृतः देवान् गुरून् उद्दिश्य यः क्रियते स इत्यर्थः।

(य) जिह्वेति। जिह्वाया लौल्यात् चापल्यात् यत् प्रकृष्टं महत् औत्सुक्यं तस्मात्।

स्वभाव इति। स्वभावः उपदेशेन अन्यथा कर्त्तुं न शक्यते। तथाहि सुतप्तमपि पानीयं पुनः शीततां गच्छति तस्य शीतप्रकृतिकत्वादिति भावः ॥२८०॥

यदीति। यदि वह्निः अग्निः शीतलः, तथा शीतांशुश्चन्द्रः दहनात्मकः दहनकारी स्यात्, तथापि अत्र संसारे मर्त्यानां स्वभावः अन्यथा कर्त्तुं न शक्यते ॥ २८१ ॥

प्रविष्टः सा मन्दविसर्पिणी अपि वस्त्रसन्ध्यन्तर्गता तैर्दृष्टा व्यापादिता च। अतोऽहं ब्रवीमि, न हि अविज्ञातशीलस्येति। एवं ज्ञात्वा त्वया एष बध्यः। नो चेत् त्वां व्यापादयिष्यति। उक्तञ्च, त्यक्ताश्चाभ्यन्तरा येन वाह्याश्चाभ्यन्तरीकृताः।

स एव मृत्युमाप्नोति यथा राजा ककुद्द्रुमः ॥२८२॥

पिङ्गलक आह, कथमेतत् ? सोऽब्रवीत्,

## कथा १०।

कस्मिंश्चित् वनप्रदेशे चण्डरवो नाम शृगालः प्रतिवसति स्म। स कदाचित् क्षुधाविष्टो जिह्वालौल्यात् नगरान्तरे प्रविष्टः। अथ तं नगरवासिनः सारमेया (र) अवलोक्य सर्वतः शब्दायमानाः परिधाव्य (ल) तीक्ष्णदंष्ट्राग्रैर्भक्षितुमारब्धाः। सोऽपि तैः भक्ष्यमाणः प्राणभयात् प्रत्यासन्नरजकगृहं प्रविष्टः। तत्र च नीलीरसपरिपूर्णमहाभाण्डं सज्जीकृतमासीत्। तत्र सारमेयैः आक्रान्तो भाण्डमध्ये पतितः। अथ यावत् निष्क्रान्तस्तावत् नीलीवर्णः सञ्जातः। तत्र अपरे सारमेयास्तं शृगालमजानन्तो यथाभीष्टदिशं जग्मुः, चण्डरवोऽपि दूरतरं प्रदेशमासाद्य काननाभिमुखं प्रतस्थे न च नीलवर्णेन कदाचित् निजरङ्गः (व) त्यज्यते।

---

त्यक्ता इति येन जनेन आभ्यन्तराः आत्मीयाः स्वजना इत्यर्थः त्यक्ताः तथा वाह्याः अपरे अस्वजना इत्यर्थः अभ्यन्तरीकृताः आत्मीयत्वेन परिगृहीता इति भावः स एव राजा ककुद्द्रुमः यथा मृत्युमाप्नोति ॥ २८२ ॥

(र) सारमेयाः कुक्कुराः।

(ल) परिधाव्य धावित्वा।

(व) निजरङ्गः स्ववर्णः।

उक्तञ्च, वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोर्यथा ॥ २८३ ॥

अथ तं हरगलगरलतमालसमप्रभमपूर्वं (अ) सत्त्वमवलोक्य सर्वे सिंहव्याघ्रद्वीपिवृकप्रभृतयोऽरण्यनिवासिनो भयव्याकुलितचित्ताः समन्तात् पलायनक्रियां कुर्वन्ति, कथयन्ति च, न ज्ञायतेऽस्य कीदृग्विचेष्टितं पौरुषञ्च, तद्दूरतरं गच्छामः। उक्तञ्च,

न यस्य चेष्टितं विद्यात् न कुलं न पराक्रमम्।
न तस्य विश्वसेत् प्राज्ञो यदीच्छेच्छ्रियमात्मनः ॥ २८४ ॥

चण्डरवोऽपि तान् भयव्याकुलितान् विज्ञाय इदमाह, भोः भोः श्वापदाः! किं यूयं मां दृष्ट्वैव सन्त्रस्ता व्रजथ? तन्न भेतव्यम्, अहं ब्रह्मणा अद्य स्वयमेव सृष्टाभिहितः—यत् श्वापदानां मध्ये कश्चिद्राजा नास्ति, तत्त्वं मया अद्य सर्वश्वापदप्रभुत्वेऽभिषिक्तः ककुदद्रुमाभिधस्ततो (ष) गत्वा क्षिति-

---

वज्रेति। वज्रलेपस्य वज्रमयप्रलेपस्य, मूर्खस्य, नारीणां, कर्कटस्य कुलीरस्य मीनानां मत्स्यानाञ्च नीलमद्यपयोर्यथा नीलवर्णमद्यपायिनोरिव एकस्तु एक एव तुकारोऽत्रावधारणार्थः। ग्रहः ग्रहणम् आग्रहश्च वज्रलेपलिप्तात् वस्तुनः कदाचिदपि वज्रलेपविमुक्तिः स्यात्। कर्कटमीनयोः दशनाग्रेण ग्रहणे तथा नीलवर्णस्य सङ्गे सती विमुक्तिरतिदुष्करा। मूर्खनारीमद्यपानाञ्च आग्रहो न प्रबोधोपशमनीय इति भावः ॥ २८३ ॥

(अ) हरेति। हरस्य शम्भोः गले कण्ठे यत् गरलं कालकूटमित्यर्थः तत् तमालं तदाख्यवृक्षपुष्पञ्च तयोः समा प्रभा यस्य तथाभूतम्।

नेति। यस्य जनस्य चेष्टितम् आचरणं न, कुलं वंशं न, तथा पराक्रमञ्च न विद्यात्, प्राज्ञो बुद्धिमान् जनः यदि आत्मनः श्रियं सम्पदं कल्याणमित्यर्थः इच्छेत् अभिलषेत् तदा तस्य अज्ञातचेष्टितकुलपराक्रमस्य जनस्य न विश्वसेत् न विश्वासं कुर्य्यात् ॥ २८४ ॥

(ष) ककुदद्रुमाभिधः ककुदद्रुमनामा।

तत्ते तान् सर्वान् परिपालयेति—ततोऽहमत्रागतः। तन्मम छत्रच्छायायां ( स ) सर्वैरेव श्वापदैर्वर्त्तितव्यम्। अहं ककुद्द्रुमो नाम राजा त्रैलोक्येऽपि सञ्जातः। तच्छ्रुत्वा सिंहव्याघ्रपुरःसराः श्वापदाः स्वामिन्! प्रभो! समादिशेति वदन्तस्तं परिवव्रुः। अथ तेन सिंहस्य अमात्यपदवी प्रदत्ता, व्याघ्रस्य शय्यापालत्वं, द्वीपिनः ताम्बूलाधिकारो, वृकस्य द्वारपालकत्वम्, ये च आत्मीयाः शृगालाः तैः सह आलापमात्रमपि न करोति। शृगालाः सर्वेऽपि अर्द्धचन्द्रं ( ह ) दत्त्वा निःसारिताः। एवं तस्य राज्यक्रियायां वर्त्तमानस्य ते सिंहादयो मृगान् व्यापाद्य तत्पुरतः प्रक्षिपन्ति। सोऽपि प्रभुधर्मेण सर्वेषां तान् प्रविभज्य प्रयच्छति। एवं गच्छति काले, कदाचित् तेन सभागतेन दूरदेशे शब्दायमानस्य शृगालवृन्दस्य कोलाहलोऽश्रावि। तं शब्दं श्रुत्वा पुलकिततनुः आनन्दाश्रुपरिपूर्णनयनः उत्थाय तारस्वरेण ( च ) विरोतुमारब्धवान्। अथ ते सिंहादयस्तं तारस्वरमाकर्ण्य शृगालोऽयमिति मत्वा सलज्जमधोमुखाः क्षणमेकं स्थित्वा मिथः प्रोचुः, भो! वाहिता ( क ) वयमनेन क्षुद्रशृगालेन तद्वध्यतामिति। सोऽपि तदाकर्ण्य पलायितुमिच्छन् तत्र स्थाने एव सिंहादिभिः खण्डशः कृतो मृतश्च। अतोऽहं ब्रवीमि त्यक्ताश्चाभ्यन्तरा येनेति।

तदाकर्ण्य पिङ्गलक आह, भो दमनक! कः प्रत्ययोऽत्र विषये यत् स ममोपरि दुष्टबुद्धिः। स आह, यदद्य ममाग्रे

---

(स) छत्रच्छायायाम् अधिराज्ये इति भावः।

(ह) अर्द्धचन्द्रं गलहस्तमिति भावः।

(च) तारस्वरेण महता स्वरेण। विरोतुं शब्दितुम्।

(क) वाहिताः कर्म्म कारिताः।

तेन निश्चयः कृतो यत्प्रभाते पिङ्गलकं बधिष्यामि तदत्रैव प्रत्ययः। प्रभातेऽवसरवेलायाम् (ख) आरक्तमुखनयनः स्फुरिताधरो दिशोऽवलोकयन् अनुचितस्थानोपविष्टस्त्वां क्रूरदृष्ट्या विलोकयिष्यति। एवं ज्ञात्वा यदुचितं तत्कर्त्तव्यमिति कथयित्वा सञ्जीवकसकाशं गतः। तं प्रणम्य उपविष्टः, सञ्जीवकोऽपि सोद्वेगाकारं मन्दगत्या समायान्तं तमुद्वीक्ष्य सादरतरमुवाच, भो मित्र! स्वागतम्, चिराद्दृष्टोऽसि, अपि शिवं भवतः? तत्कथय येनादेयमपि तुभ्यं गृहागताय प्रयच्छामि। उक्तञ्च,

ते धन्यास्ते विवेकज्ञास्ते सभ्या इह भूतले।
आगच्छन्ति गृहे येषां कार्य्यार्थं सुहृदो जनाः॥ २८५॥

दमनक आह, भोः! कथं शिवं सेवकजनस्य?

सम्पत्तयः परायत्ताः सदा चित्तमनिर्वृतम्।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः॥ २८६॥

तथाच, सेवया धनमिच्छद्भिः सेवकैः पश्य यत् कृतम्।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम्॥२८७॥

---

(ख) अवसरवेलायां भवत्सन्निधानागमनसमये इत्यर्थः।

ते इति। सुहृदो जनाः मित्राणीत्यर्थः कार्य्यार्थं येषां गृहे आगच्छन्ति, इह अस्मिन् भूतले ते जनाः धन्याः पुण्यवन्तः ते जनाः विवेकज्ञाः परमविज्ञा इत्यर्थः तथा ते जनाः सभ्याः साधवः॥ २८५॥

सम्पत्तयः इति। ये जनाः राजसेवकाः नृपकिङ्कराः, तेषां सम्पत्तयः धनानि परायत्ताः पराधीनाः, चित्तं मनः सदा सर्वस्मिन् काले अनिर्वृतम् असुखिनं तथा स्वजीवितेऽपि निजजीवनेऽपि अविश्वासः अप्रत्ययः कदा राजा किं कुर्य्यादिति भावः॥ २८६॥

सेवयेति। सेवया दास्येन धनमिच्छद्भिः सेवकैः दासैः यत् कृतं तदिति शेषः पश्य अवलोकय, मूढैः मूर्खैः तैः शरीरस्य यत् स्वातन्त्र्यं स्वाधीनत्वं, तदपि हारितं नाशितम्। शरीरध्वंसे भवत्यपि प्रभोराज्ञा पालनीयेति भावः॥ २८७॥

तावज्जन्मातिदुःखाय ततो दुर्गतता सदा।
तत्रापि सेवया वृत्तिरहो दुःखपरम्परा ॥ २८८ ॥
जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारते।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ॥ २८९ ॥
नाश्नाति स्वेच्छयौत्सुक्याद्विनिद्रो न प्रबुध्यते।
न निःशङ्कं वचो ब्रूते सेवकोऽप्यत्र जीवति ॥ २९० ॥
सेवा श्ववृत्तिराख्याता यैस्तैर्मिथ्या प्रजल्पितम्।
स्वच्छन्दं चरति श्वात्र सेवकः परशासनात् ॥ २९१ ॥
भूशय्या ब्रह्मचर्य्यञ्च कृशत्वं लघुभोजनम्।

---

तावदिति। जन्म तावत प्रथममिति भावः ततः जन्मन आरभ्य सदा आजीवनमित्यर्थः दुर्गतता दारिद्र्यं तत्रापि दारिद्र्येऽपि सेवया दास्येन वृत्तिर्जीवनम् अहो इति खेदसूचकमव्ययम्। दुःखपरम्परा दुःखधारा ॥ २८८ ॥

जीवन्त इति। भारते महाभारतपुराणे इत्यर्थः दरिद्रः व्याधितः मूर्खः प्रवासी तथा नित्यसेवकः चिरदास एते पञ्च जीवन्तोऽपि मृताः किल मृता एव किलशब्दोऽत्र अवधारणार्थः श्रूयन्ते ॥ २८९ ॥

नेति। अत्र संसारे सेवकः अपि जीवति। यः सेवकः औत्सुक्यात् उत्कण्ठावशात् साम्प्रतमेव प्रभुसमीपे गन्तव्यमिति उद्वेगादिति भावः। स्वेच्छया न अश्नाति न भक्षयति, विनिद्रः विगतनिद्रावेश इत्यर्थः न प्रबुध्यते न जागर्त्ति प्रभुभयात् निद्रावशे सत्यपि निद्रां त्यजतीत्यर्थः तथा निःशङ्कं निर्भयं यथा तथा वचः न ब्रूते न वक्तुं शक्नोतीति भावः। ईदृशस्य सेवकस्य जीवनमनुचितमिति भावः ॥ २९० ॥

सेवेति। यैः शास्त्रकारैरिति भावः सेवा दास्यं श्ववृत्तिः कुक्कुरजीविका आख्याता उक्ता, तैः मिथ्या जल्पितम् यतः श्वा कुक्कुरः अत्र जगति स्वच्छन्दं चरति, सेवकः दासः परशासनात् प्रभोरादेशात् चरतीति शेषः। तस्मात् कुक्कुरोऽपि सेवकाद्द वरमिति शास्त्रकाराणां सेवा श्ववृत्तिरिति मिथ्याजल्पनमिति भावः ॥ २९१ ॥

भूशय्येति। सेवकस्य यतेः सन्न्यासिनः यद्वत् यथा भूशय्या, ब्रह्मचर्य्यं स्रक्-चन्दनवनिताद्युपभोगराहित्यमिति भावः। कृशत्वं क्षीणकायत्वं प्रभुकार्य्यसम्पा॰

सेवकस्य यतेर्यद्वद्विशेषः पापधर्म्मजः ॥ २९२ ॥

शीतातपादिकष्टानि सहते यानि सेवकः।

धनाय तानि चाल्पानि यदि धर्मान्न मुच्यते ॥ २९३ ॥

मृदुनापि सुवृत्तेन सुमिष्टेनापि हारिणा।

मोदकेनापि किं तेन? निष्पत्तिर्यस्य सेवया ॥ २९४ ॥

सञ्जीवक आह, अथ भवान् किं वक्तुमनाः? सोऽब्रवीत्। मित्र! सचिवानां मन्त्रभेदं कर्त्तुं न युज्यते। उक्तञ्च, यो मन्त्रं स्वामिनो भिन्द्यात्साचिव्यसन्नियोजितः।

स हत्वा नृपकार्य्यं तत् स्वयञ्च नरकं व्रजेत् ॥२९५॥

येन यस्य कृतो भेदः सचिवेन महीपतेः।

तेनाशस्त्रबधस्तस्य कृत इत्याह नारदः ॥ २९६ ॥

---

दनशनेन तपोजनितक्लेशेन चेति भावः। तथा लघुभोजनं यत्किञ्चनाशित्वमित्यर्थः अस्तीति शेषः। विशेषः प्रभेदः सेवकसन्न्यासिनोरिति शेषः। पापधर्मजः पापनिबन्धनः धर्मनिबन्धनश्च सेवकः पापी यतिस्तु पुण्यवानिति भावः ॥ २९२ ॥

शीतेति। सेवकः यानि शीतातपादिकष्टानि धनाय सहते, तानि शीतातपादिकष्टानि अल्पानि सहते यदि सः धर्मात् न मुच्यते न हीयते धनार्थं यादृशानि कष्टान्यनुभूयन्ते सेवकेन धर्मार्थं ततोऽल्पानीति भावः ॥ २९३ ॥

मृदुनेति। यस्य मोदकस्य मिष्टान्नविशेषस्य सेवया दास्येन निष्पत्तिः प्राप्तिरित्यर्थः तेन मृदुना कोमलेन सुवृत्तेन सुवर्त्तुलेन सुमिष्टेन अतिमधुरेण हारिणा मनःप्रीतिकरेण मोदकेनापि किम्? न किमपि प्रयोजनमित्यर्थः यथा कथञ्चित् शाकादिनापि उदरपूरणं वरं नतु सेवया मिष्टान्नभोजनमिति भावः ॥ २९४ ॥

य इति। यः साचिव्ये मन्त्रित्वे सन्निवेशितः अधिष्ठापितः प्रभुणेति शेषः स्वामिनः प्रभोः मन्त्रं गूढं परामर्शं न भिन्द्यात् प्रकाशयेत् स तत् नृपकार्य्यं हत्वा स्वयञ्च नरकं व्रजेत् ॥ २९५ ॥

येनेति। येन सचिवेन मन्त्रिणा यस्य महीपतेः मन्त्रभेदः कृतः, तेन मन्त्रिणा तस्य महीपतेः अशस्त्रबधः विना शस्त्रधारणं बधः कृत इति नारदः आह। मन्त्रभेदः प्रभुवध एवेति भावः ॥ २९६ ॥

तथापि मया तव स्नेहपाशबद्धेन मन्त्रभेदः कृतः। यतस्त्वं मम वचनेनात्र राजकुले विश्वस्तः प्रविष्टश्च।

उक्तञ्च, विस्रम्भाद्यस्य यो मृत्युमवाप्नोति कथञ्चन।
तस्य हत्या तदुत्था सा प्राहेदं वचनं मनुः॥ २९७॥

तत् तवोपरि पिङ्गलकोऽयं दुष्टबुद्धिः। कथितं च अद्य अनेन मत्पुरतश्चतुष्कर्णतया (ग) यत्प्रभाते सञ्जीवकं हत्वा समस्तमृगपरिवारं चिरात् तृप्तिं नेष्यामि। ततः स मयोक्तः। स्वामिन्! न युक्तमिदं यन्मित्रद्रोहेण जीवनं क्रियते। उक्तञ्च,

अपि ब्रह्मवधं कृत्वा प्रायश्चित्तेन शुध्यति।
तदर्हेण विचीर्णेन न कथञ्चित् सुहृद्द्रुहः॥ २९८॥

ततस्तेनाहं सामर्षेणोक्तः (घ)। भो दुष्टबुद्धे! सञ्जीवकस्तावत् शष्पभोजी, वयं मांसाशिनस्तदस्माकं स्वाभाविकं वैरमिति। कथं रिपुरुपेक्ष्यते। तस्मात् सामादिभिरुपायैर्हन्यते। न च हते तस्मिन् दोषः स्यात्। उक्तञ्च,

---

विस्रम्भादिति। यः यस्य विस्रम्भात् विश्वासात् कथञ्चन केनापि प्रकारेण मृत्युमवाप्नोति, सा तस्य विश्वासिन इत्यर्थः हत्या तदुत्था यद्वचसि विश्वासः कृतस्तस्मात् जाता भवतीति शेषः मनुः इदं वचनं प्राह॥ २९७॥

(ग) चतुष्कर्णतया षट्कर्णो भिद्यते मन्त्र इति महाजनवाक्यात् केवलं मया सह मन्त्रण एतन्मन्त्रस्य चतुष्कर्णत्वमिति भावः।

अपीति। ब्रह्मवधमपि कृत्वा तदर्हेण तद्योग्येन विचीर्णेन विशेषेणानुष्ठितेन प्रायश्चित्तेन चतुर्विंशतिवार्षिकद्वादशवार्षिकव्रतरूपेण इति भावः शुध्यति पापात् विमुक्तो भवति जन इति शेषः। सुहृद्द्रुहः मित्रद्रोही मित्रद्रोहिणो वा कथञ्चित् केनापि प्रकारेण न शुध्यति वा शुध्यन्तीति शेषः। अत्र द्रुहधातोः कप्रत्यय क्विप्प्रत्ययभेदेन एकवचनबहुवचनान्तता बोध्या॥ २९८॥

(घ) सामर्षेण सक्रोधेन।

दत्त्वापि कन्यकां वैरी निहन्तव्यो विपश्चिता ।
अन्योपायैरशक्यो यो हते दोषो न विद्यते ॥ २९९ ॥
कृत्याकृत्यं न मन्येत क्षत्रियो युधि सङ्गतः ।
प्रसुप्तो द्रोणपुत्रेण धृष्टद्युम्नः पुरा हतः ॥ ३०० ॥

तदहं तस्य निश्चयं ज्ञात्वा त्वत्सकाशमिहागतः । साम्प्रतं मे नास्ति विश्वासघातकदोषः । मया सुगुप्तमन्त्रस्तव निवेदितः । अथ यत् ते प्रतिभाति तत्कुरुष्वेति । अथ सञ्जीवकस्तस्य तद्वज्रपातदारुणं वचनं श्रुत्वा मोहमुपागतः । अथ चेतनां लब्ध्वा सवैराग्यमिदमाह । भो ! साधु इदमुच्यते,

दुर्जनगम्या नार्यः प्रायेणास्नेहवान् भवति राजा ।
कृपणानुसारि च धनं मेघो गिरिदुर्गवर्षी च ॥ ३०१ ॥
अहं हि सम्मतो राज्ञो य एवं मन्यते कुधीः ।
बलीवर्दः स विज्ञेयो विषाणपरिवर्जितः ॥ ३०२ ॥

---

दत्त्वेति । यः अन्योपायैः अशक्यः असाध्यः हन्तुमिति शेषः, विपश्चिता विदुषा कन्यकां दत्त्वापि स वैरी शत्रुः निहन्तव्यः, तस्मिन् वैरिणि हते दोषो न विद्यते । येन केनापि शत्रुवधो न दोषायेति भावः ॥ २९९ ॥

कृत्येति । युधि सङ्गतः युयुत्सुरित्यर्थः क्षत्रियः वीर इति भावः कृत्याकृत्यं कर्त्तव्याकर्त्तव्यं न मन्यते न विचारयति, तथाहि पुरा पूर्वस्मिन् काले द्रोणपुत्रेण अश्वत्थाम्ना प्रसुप्तः निद्रितः धृष्टद्युम्नः हतः नाशितः ॥ ३०० ॥

दुर्जनेति । नार्यः प्रायेण दुर्जनगम्याः दुर्जनानां प्राप्याः, राजा प्रायेण अस्नेहवान् भवति न कुत्रापि स्निह्यतीत्यर्थः धनं कृपणानुसारि, कृपणो व्ययकुण्ठः तदनुसारि तद्गामि प्रायेण भवतीति शेषः मेघः प्रायेण गिरिदुर्गवर्षी गिरौ दुर्गे दुर्गमनीये लोकानामिति शेषः स्थाने गहनादौ वर्षतीति तथोक्तः नतु, उर्वरक्षेत्रादिषु मेघो वर्षतीति भावः ॥ ३०१ ॥

अहमिति । यः कुधीः कुबुद्धिः पुमान् अहं राज्ञः सम्मतः प्रियः इत्येवं मन्यते, स विषाणपरिवर्जितः शृङ्गविहीनः बलीवर्दः पुङ्गवः विज्ञेयः ॥ ३०२ ॥

वरं वनं वरं भैक्ष्यं वरं भारोपजीवनम्।
वरं व्याधिर्मनुष्याणां नाधिकारेण सम्पदः॥ ३०३॥

तदयुक्तं मया कृतं यदनेन सह मैत्री विहिता। उक्तञ्च,

ययोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः॥ ३०४॥

तथाच, मृगा मृगैः सङ्गमनुव्रजन्ति
गावश्च गोभिस्तुरगास्तुरङ्गैः।
मूर्खाश्च मूर्खैः सुधियः सुधीभिः
समानशीलव्यसनेषु सख्यम्॥ ३०५॥

तद्यदि गत्वा तं प्रसादयामि, तथापि न प्रसादं यास्यति।

उक्तञ्च, निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रशाम्यति।
अकारणद्वेषपरो हि यो भवेत्
कथं नरस्तं परितोषयिष्यति॥ ३०६॥

---

वरमिति। वनम् अरण्यं वरं मनाक् प्रियं, भैक्ष्यं भिक्षाशिलं वरं मनाक् प्रियं, भारोपजीवनं भारवहनेन जीवनधारणं वरं मनाक् प्रियम्। व्याधिः रोगः वरं मनाक् प्रियम्, अधिकारेण सेवया मनुष्याणां सम्पदः न वरमिति शेषः॥३०३॥

ययोरिति। ययोर्जनयोः सममेव वित्तं धनं, ययोः सममेवं कुलम्, तयोरेव मैत्री सौहृदं विवाहश्च परस्परमिति भावः शुभाय भवतीति शेषः पुष्टविपुष्टयोः धनिनिर्धनयोः कुलीनाकुलीनयोश्च नतु नैव शुभायेति भावः॥ ३०४॥

मृगा इति। समानशीलव्यसनेषु तुल्यचरित्रतुल्यदुःखेषु जनेषु सख्यं मैत्रं भवतीति शेषः तथाहि मृगाः मृगैः, गावः गोभिः, तुरगाः अश्वाः तुरङ्गैः अश्वैः, मूर्खाः मूर्खैः तथा सुधियः सुधीभिः सङ्गं संसर्गम् अनुव्रजन्ति कुर्वन्ति॥ ३०५॥

निमित्तमिति। यः निमित्तं कारणम् उद्दिश्य अनुसृत्य प्रकुप्यति कुपितो भवति स जनः ध्रुवं निश्चितं तस्य कोपनिमित्तस्य अपगमे नाशे प्रशाम्यति शान्तिं

अहो! साधु चेदमुच्यते,

भक्तानामुपकारिणां परहितव्यापारयुक्तात्मनां
सेवासंव्यवहारतत्त्वविदुषां द्रोहच्युतानामपि।
व्यापत्तिः स्खलितान्तरेषु नियता सिद्धिर्भवेद्वा न वा
तस्मादम्बुपतेरिवावनिपतेः सेवा सदाशङ्किनी॥३०७॥

तथाच, भावस्निग्धैरुपकृतमपि द्वेष्यतां याति लोके
साक्षादन्यैरपकृतमपि प्रीतये चोपयाति।
दुर्ग्राह्यत्वान्नृपतिमनसां नैकभावाश्रयाणां
सेवाधर्म्मः परमगहनो योगिनामप्यगम्यः॥ ३०८॥

---

गच्छति, यः अकारणद्वेषपरः भवेत्, नरः लोकः तं जनम् अकारणद्वेषिणमित्यर्थः कथं केन प्रकारेण परितोषयिष्यति परितुष्टं करिष्यति॥ ३०६॥

भक्तानामिति। भक्तानाम् अनुरक्तानाम उपकारिणां परहितव्यापारे परेषां हितानुष्ठाने युक्तात्मनाम् अभिनिवेशवतां सेवायाः दास्यस्य यः संव्यवहारः सम्यगाचारनियमः तस्य तत्त्वविदुषां द्रोहच्युतानां परानिष्टविरतानामपि जनानां स्खलितान्तरेषु च्युतान्तःकरणवृत्तिषु नष्टस्वभावेषु इत्यर्थः अस्थिरस्वभावेषु च प्रभुष्विति शेषः व्यापत्तिः विशिष्टा आपद् नियता निश्चिता अवश्यम्भाविनीत्यर्थः, सिद्धिः स्वप्रयोजनस्येति भावः भवेत वा नवा, सिद्धिविषये सन्देहोऽस्त्येवेत्यर्थः। तस्मात अम्बुपतेरिव समुद्रस्येव अवनीपतेः राज्ञः सेवा सदा शङ्किनी संशयास्पदमित्यर्थः। समुद्रसेवायां रत्नादिलाभः सन्दिग्धः प्राणपरिरक्षणन्तु प्रायेण न घटते तद्वत राजसेवायामिति भावः॥ ३०७॥

भावस्निग्धैरिति। भावेन भक्त्या अनुरागेणेत्यर्थः स्निग्धैः स्नेहान्वितैः जनैः उपकृतमपि कृतः उपकारोऽपि लोके संसारे द्वेष्यताम् अप्रियताम् अनिष्टभावं याति प्राप्नोति, अन्यैः अननुरक्तैरित्यर्थः साक्षात् समक्षकृतमित्यर्थः अपकृतमपि अनिष्टकरणमपि प्रीतये उपयाति च प्रीतिं जनयति च इत्यर्थः। नैकभावाश्रयाणां विविधाश्रयशालिनां नृपतिमनसां प्रभुचित्तानां दुर्ग्राह्यत्वात् दुर्बोधत्वात् सेवाधर्मः परिचर्य्यारूपी विधिः योगिनामपि अगम्यः दुर्बोधः यतः परमगहनः अतिदुष्प्रवेशः। प्रभुचित्तं कदा कीदृगाशयं स्यात तद् बोद्धुं न शक्यते सुतरां तस्य हितकरणे अहितबुद्धिः अहितकरणे हितबुद्धिर्जायते तस्मात् तत्सेवा अतीव दुष्करेति भावः॥ ३०८॥

तत्परिज्ञातं मया यत् प्रसादम् (ङ) असहमानैः समीपवर्त्तिभिः एष पिङ्गलकः प्रकोपितः। तेनायं मम अदोषस्यापि एवं वदति। उक्तञ्च,

प्रभोः प्रसादमन्यस्य न सहन्तीह सेवकाः।
सपत्न्य इव संक्रुद्धाः स्वपत्न्याः सुकृतैरपि॥ ३०९॥

भवति चैवं यद्गुणवत्सु समीपवर्त्तिषु गुणहीनानां न प्रसादो भवति। उक्तञ्च।

गुणवत्तरपात्रेण छाद्यन्ते गुणिनां गुणाः।
रात्रौ दीपशिखाकान्तिर्न भानावुदिते सति॥३१०॥

दमनक आह, भो मित्र! यद्येवं तन्नास्ति ते भयम्, प्रकोपितोऽपि स दुर्जनैः तव वचनरचनया (च) प्रसादं यास्यति। स आह, भो! न युक्तमुक्तं भवता, लघूनामपि दुर्जनानां मध्ये वस्तुं न शक्यते, उपायान्तरं विधाय ते नूनं घ्नन्ति। उक्तञ्च,

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः।

---

(ङ) प्रसादं प्रसन्नतां मयीति शेषः।

प्रभोरिति। इह संसारे सेवकाः भृत्याः सुकृतैः स्वाचरितैरपि संक्रुद्धाः स्वभाववैरित्वादिति भावः सपत्न्यः एकपतिकाः स्त्रियः स्वपत्न्याः अन्यतरस्याः प्रसादमिव अन्यस्य स्वभिन्नस्य स्वभिन्ने भृत्ये इति भावः। प्रभोः प्रसादं न सहन्ति न क्षमन्ते। सहधातोरात्मनेपदित्वेऽपि अत्र परस्मैपदमार्षमिति बोध्यम्॥ ३०९॥

गुणवत्तरेति। गुणवत्तरपात्रेण अतिगुणशालिना जनेन गुणिनां गुणवतां गुणाः छाद्यन्ते तिरस्क्रियन्ते, तथाहि रात्रौ रजन्यां दीपशिखायाः कान्तिः शोभा भवतीति शेषः। भानौ सूर्य्ये उदिते सति न, यथा सूर्य्योदये दीपशिखा न शोभते, तथा गुणवत्तरसन्निधाने गुणवान् न आद्रियते इति भावः॥ ३१०॥

(च) वचनरचनया वाक्कौशलेन।

बहव इति। बहवः पण्डिताः कुशलाः नीतिनिपुणा इत्यर्थः क्षुद्राः नीचाः

कुर्य्युः कृत्यमकृत्यं वा उष्ट्रे काकादयो यथा ॥३११॥

दमनक आह, कथमेतत्? सोऽब्रवीत्,

## कथा ११।

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः प्रतिवसति स्म। तस्य च अनुचरा अन्ये द्वीपिवायसगोमायवः (छ) सन्ति। अथ कदाचित् तैः इतस्ततो भ्रमद्भिः सार्थभ्रष्टः (ज) क्रथनको नाम उष्ट्रो दृष्टः। अथ सिंह आह, अहो! अपूर्वमिदं सत्त्वम्। तज्ज्ञायतां किमेतदारण्यकं ग्राम्यं वेति। तच्छ्रुत्वा वायस आह, भोः स्वामिन्! ग्राम्योऽयमुष्ट्रनामा जीवविशेषस्तव भोज्यः। तत् व्यपाद्यताम्। सिंह आह, नाहं गृहमागतं हन्मि। उक्तञ्च,

गृहे शत्रुमपि प्राप्तं विश्वस्तमकुतोभयम्।
यो हन्यात्तस्य पापं स्याच्छतब्राह्मणघातजम् ॥३१२॥

तदभयप्रदानं दत्त्वा मत्सकाशमानीयतां येन अस्यागमनकारणं पृच्छामि। अथ असौ सर्वैरपि विश्वास्य अभयप्रदानं दत्त्वा मदोत्कटसकाशमानीतः प्रणम्योपविष्टश्च। ततस्तस्य पृच्छतस्तेनात्मवृत्तान्तः सार्थभ्रंशसमुद्भवो (झ) निवेदितः।

---

मायोपजीविनः कापटिकाः सर्वे समवेताः सन्त इत्यर्थः उष्ट्रे काकादयः यथा उष्ट्रं प्रति काकादयः मिलिताश्चक्रुः तथा इत्यर्थः कृत्यं कर्त्तव्यम् अकृत्यम् अकर्त्तव्यं वा कुर्य्युः कुर्वन्तीत्यर्थः। धूर्त्तैः सर्वं कर्त्तुं शक्यते इति भावः ॥ ३११ ॥

(छ) द्वीपिवायसगोमायवः शार्दूलकाकशृगालाः।

(ज) सार्थभ्रष्टः यूथच्युतः।

गृहे इति। यः विश्वस्तम् अतएव अकुतोभयं निःशङ्कं गृहे प्राप्तं गृहागतं शत्रुमपि हन्यात् तस्य शतब्राह्मणघातजं शतब्रह्महत्याजनितं पापं स्यात् ॥३१२॥

(झ) सार्थेति। सार्थभ्रंशात् स्वयूथच्युतेः समुद्भवः समुत्पन्नः यूथभ्रंशजनितावस्था इत्यर्थः।

ततः सिंहेनोक्तम्, भोः क्रथनक! मा त्वं ग्रामं गत्वा भूयोऽपि भारोद्वहनकष्टभागी भूयाः। तदत्रैव अरण्ये निर्विशङ्को मरकतसदृशानि शष्पाग्राणि भक्षयन् मया सह सदैव वस। सोऽपि तथेत्युक्त्वा तेषां मध्ये विचरन् न कुतोऽपि भयमिति सुखेन आस्ते। तथान्येद्युर्मदोत्कटस्य महागजेन अरण्यचारिणा सह युद्धमभवत्। ततस्तस्य दन्तमुषलप्रहारैर्व्यथा सञ्जाता। व्यथितः कथमपि प्राणैर्न वियुक्तः। अथ शरीरासामर्थ्यात् न कुत्रचित्पदमपि चलितुं शक्नोति। तेऽपि सर्वे काकादयोऽप्रभुत्वेन (ञ) क्षुधाविष्टाः परं दुःखं भेजुः। अथ तान् सिंहः प्राह, भोः! अन्विष्यतां कुत्रचित् किञ्चित् सत्त्वं येन अहम् एतामपि दशां प्राप्तस्तद्धत्वा युष्मद्भोजनं सम्पादयामि। अथ ते चत्वारोऽपि भ्रमितुमारब्धा यावन्न किञ्चित् सत्त्वं पश्यन्ति तावद्वायसशृगालौ परस्परं मन्त्रयतः। शृगाल आह, भो वायस! किं प्रभूतभ्रान्तेन, (ट) अयमस्माकं प्रभोः क्रथनको विश्वस्तस्तिष्ठति। तदेनं हत्वा प्राणयात्रां कुर्मः। वायस आह, युक्तमुक्तं भवता, परं स्वामिना तस्य अभयप्रदानं दत्तमास्ते न बध्योऽयमिति। शृगाल आह, भोः वायस! अहं स्वामिनं विज्ञाप्य तथा करिष्ये यथा स्वामी बधं करिष्यति तत्तिष्ठन्तु भवन्तोऽत्रैव यावदहं गृहं गत्वा प्रभोराज्ञां गृहीत्वा च आगच्छामि। एवमभिधाय सत्वरं सिंहमुद्दिश्य प्रस्थितः। अथ सिंहमासाद्य इदमाह, स्वामिन्! समस्तं वनं भ्रान्त्वा वयमागताः, न किञ्चित्सत्त्वमासादितम्,

---

(ञ) अप्रभुत्वेन स्वयं भक्ष्याहरणे इति भावः।

(ट) प्रभूतभ्रान्तेन अधिकेन भ्रमणेन।

तत् किं कुर्मो वयम्। सम्प्रति वयं बुभुक्षया पदमेकमपि प्रचलितुं न शक्नुमः। देवोऽपि पथ्याशी (ठ) वर्त्तते। तद्यदि देवादेशो भवति तत् क्रथनकपिशितेन अद्य पथ्यक्रिया (ड) क्रियते। अथ सिंहस्तस्य तद्दारुणं वचनमाकर्ण्य सकोपम् इदमाह, धिक् पापाधम ! यद्येवं भूयोऽपि वदसि ततः त्वां तत्क्षणमेव बधिष्यामि यतो मया तस्य अभयं प्रदत्तम्। तत् कथं व्यापादयामि। उक्तञ्च,

न गोप्रदानं न महीप्रदानं न चान्नदानं हि तथा प्रधानम्।
यथा वदन्तीह बुधाः प्रधानं सर्वप्रदानेष्वभयप्रदानम् ॥३१३॥

तच्छ्रुत्वा शृगाल आह, स्वामिन्! यदि अभयप्रदानं दत्त्वा बधः क्रियते तदा एष दोषो भवति। पुनर्यदि देवपादानां भक्त्या स आत्मनो जीवितव्यं प्रयच्छति तन्न दोषः, ततो यदि स स्वयमेव आत्मानं बधाय नियोजयति, तद्बध्योऽन्यथा अस्माकं मध्यादेकतमो बध्य इति, यतो देवपादाः पथ्याशिनः क्षुन्निरोधादन्त्यां (ढ) दशां यास्यन्ति। तत् किमेतैः प्राणैः अस्माकं ये स्वाम्यर्थे न यास्यन्ति? अपरं पश्चादपि अस्माभिर्वह्निप्रवेशः कार्य्यो, यदि स्वामिपादानां किञ्चिदनिष्टं भविष्यति। उक्तञ्च,

---

(ठ) पथ्याशी पथ्यं रोगिणः आहारः यत्किञ्चन हितकरं द्रव्यं तत् अश्नातीति तथोक्तः पूर्वेद्युः यत्किञ्चित् पथ्यं भुक्त्वा स्थित इत्यर्थः।

(ड) पथ्यक्रिया पथ्यव्यापारः।

नेति। बुधाः विद्वांसः इह संसारे सर्वप्रदानेषु सर्वप्रकारदानेषु मध्ये अभयप्रदानं प्राणदानमित्यर्थः यथा प्रधानं वदन्ति, गोप्रदानं तथा न, महीप्रदानं तथा न, अन्नदानञ्च तथा प्रधानं न ॥ ३१३ ॥

(ढ) क्षुन्निरोधात् क्षुधावरोधात् क्षुधाकाले अभोजनादित्यर्थः अन्त्यां चरमाम्।

यस्मिन् कुले यः पुरुषः प्रधानः स सर्वयत्नैः परिरक्षणीयः ।
तस्मिन् विनष्टे कुलसारभूते न नाभिषङ्गे ह्यरयो वहन्ति ॥२१४॥

तदाकर्ण्य मदोत्कट आह, यद्येवं तत् कुरुष्व यद्रोचते। तच्छ्रुत्वा स सत्वरं गत्वा तान् आह, भोः स्वामिनो महती अवस्था वर्त्तते, तत् किं पर्य्यटितेन? तेन विना कोऽत्र अस्मान् रक्षयिष्यति। तद्गत्वा तस्य क्षुद्रोगात् परलोकं प्रस्थितस्य आत्मशरीरदानं कुर्मो येन स्वामिप्रसादस्य अनृणतां गच्छामः। उक्तञ्च,

आपदं प्राप्नुयात् स्वामी यस्य भृत्यस्य पश्यतः ।
प्राणेषु विद्यमानेषु स भृत्यो नरकं व्रजेत् ॥ २२५ ॥

तदनन्तरं ते सर्वे वाष्पपूरितदृशो (ण) मदोत्कटं प्रणम्य उपविष्टाः। तान् दृष्ट्वा मदोत्कट आह, भोः! प्राप्तं दृष्टं वा किञ्चित् सत्त्वम्? अथ तेषां मध्यात् काकः प्रोवाच, स्वामिन्! वयं तावत् सर्वत्र पर्य्यटिताः, परं न किञ्चित्सत्त्वमासादितं दृष्टं वा। तदद्य मां भक्षयित्वा प्राणान् धारयतु स्वामी, येन देवस्य आश्वासनं भवति मम पुनः स्वर्गप्राप्तिरिति (त)। उक्तञ्च,

---

यस्मिन्निति। यस्मिन् कुले वंशे यः पुरुषः प्रधानः सर्वश्रेष्ठः स्यादिति भावः, सः सर्वैः यत्नैः परिरक्षणीयः जीवनीयः। तस्मिन् कुलसारभूते वंशप्रधानतमे विनष्टे सति अभिषङ्गे तादृशे परिभवे। अभिषङ्गः पराभवे इत्यमरः। अरयः शत्रवः न वहन्ति इति न, अपि तु सर्वतः समाक्रामन्ति इत्यर्थः ॥ २१४ ॥

आपदमिति। यस्य भृत्यस्य पश्यतः अवलोकयतः नतु दूरस्थितस्येति भावः। प्राणेषु विद्यमानेषु सत्सु स्वामी आपदम् प्राप्नुयात् विपद्येत इत्यर्थः स भृत्यः नरकं व्रजेत् प्रभुरक्षार्थं प्राणा अपि देया इति भावः ॥ २१५ ॥

(ण) वाष्पपूरितदृशः अश्रुपूर्णनेत्रा इत्यर्थः।

(त) आश्वासनं जीवनधारणम्। स्वर्गप्राप्तिः प्रभुरक्षार्थं प्राणदानेनेति भावः।

स्वाम्यर्थे यस्त्यजेत् प्राणान् भृत्यो भक्तिसमन्वितः।
परं स पदमाप्नोति जरामरणवर्जितम् ॥ ३१६ ॥

तच्छ्रुत्वा शृगाल आह, भोः! स्वल्पकायो (थ) भवान्, तव भक्षणात् स्वामिनस्तावत् प्राणयात्रा न भवति अपरो दोषश्च (द) तावत् समुत्पद्यते। उक्तञ्च,

काकमांसं शुनोच्छिष्टं स्वल्पं तदपि दुर्लभम्।
भक्षितेनापि किं तेन? तृप्तिर्येन न जायते ॥ ३१७ ॥

तद्दर्शिता स्वामिभक्तिर्भवता, गतं च च आनृण्यं भर्त्तृपिण्डस्य, (ध) प्राप्तश्च उभयलोके साधुवादः, तदपसर अग्रतः, अहं स्वामिनं विज्ञापयामि। तथानुष्ठिते शृगालः सादरं प्रणम्य उपविष्टः स्वामिन्! मां भक्षयित्वा अद्य प्राणयात्रां विधाय मम उभयलोकप्राप्तिं (न) कुरु। उक्तञ्च,

स्वाम्यायत्ताः सदा प्राणा भृत्यानामर्जिता धनैः।
यतस्ततो न दोषोऽस्ति तेषां ग्रहणसम्भवः ॥ ३१८ ॥

---

स्वाम्यर्थे इति। यो भृत्यः भक्तिसमन्वितः प्रभौ अनुरक्तः सन् स्वाम्यर्थे प्रभुकार्य्यार्थे प्राणान् त्यजेत् स जरामरणवर्जितं परं पदं स्वर्गमित्यर्थः आप्नोति ॥ ३१६ ॥

(थ) स्वल्पकायः क्षुद्रदेहः।

(द) दोषः जीवहत्याजनितं पापम् इत्यर्थः।

काकमांसमिति। एकत इति अध्याहार्य्यम् एकतः काकमांसम् अभक्ष्यमिति भावः। तदपि शुना कुक्कुरेण उच्छिष्टं भुक्तावशिष्टं, तदपि स्वल्पं तदपि दुर्लभं दुष्प्रापम् अन्यच्च येन तृप्तिः परितोषः न जायते, तेन भक्षितेनापि किं फलमिति शेषः न किमपि इत्यर्थः ॥ ३१७ ॥

(ध) गतं प्राप्तम्। आनृण्यम् ऋणशून्यत्वम्। भर्त्तृपिण्डस्य स्वाम्यन्नस्य।

(न) उभयलोके इह परत्र च। साधुवादः धन्यवादः।

स्वामीति। यतः कारणात् धनैः अर्जिताः क्रीता इत्यर्थः भृत्यानां प्राणाः सदा

अथ तच्छ्रुत्वा द्वीपी आह, भोः ! साधु उक्तं भवता, पुनः भवानपि स्वल्पकायः स्वजातिश्च, नखायुधत्वात् अभक्ष्य (प) एव। उक्तञ्च, नाभक्ष्यं भक्षयेत् प्राज्ञः प्राणैः कण्ठगतैरपि।

विशेषात्तदपि स्तोकं लोकद्वयविनाशकम्॥ ३१९॥

तद्दर्शितं त्वया आत्मनः कौलीन्यम् (फ)। अथवा साधु चेदमुच्यते,

एतदर्थं कुलीनानां नृपाः कुर्वन्ति संग्रहम्।
आदिमध्यावसानेषु न ते गच्छन्ति विक्रियाम्॥३२०॥

तदपसर अग्रतो, येनाहं स्वामिनं विज्ञापयामि। तथानुष्ठिते द्वीपी प्रणम्य मदोत्कटमाह, स्वामिन् ! क्रियताम् अद्य मम प्राणैः प्राणयात्रा, दीयतामक्षयो वासः स्वर्गे, मम विस्तार्य्यतां क्षितितले प्रभूततरं यशः। तन्नात्र विकल्पः कार्य्यः। उक्तञ्च,

---

स्वामिनः आयत्ताः अधीनाः ततस्तस्मात् तेषां भृत्यप्राणानां ग्रहणसम्भवो ह्यन्यो दोषः न, पापं न अस्ति॥ ३१८॥

(प) नखायुधत्वात् नखास्त्रत्वात् श्वापदा हि नखैरेव अस्त्रैः अन्यान् पशून् हिंसन्तीति तेषां नखायुधत्वम्। नखायुधपशुभक्षणञ्च शास्त्रनिषिद्धमिति द्रष्टव्यम्।

नाभक्ष्यमिति। प्राज्ञः पण्डितो जनः प्राणैः कण्ठगतैरपि कण्ठागतप्राणोऽपीत्यर्थः विशेषणे तृतीया। आहाराभावे इति भावः। अभक्ष्यं शास्त्रनिषिद्धभक्षणं वस्तु न भक्षयेत्। तदपि अभक्ष्यमित्यर्थः स्तोकम् अल्पम् उदरपरिपोषणासमर्थमित्यर्थः। विशेषात् विशेषेण लोकद्वयविनाशनम्। अतृप्तिकरत्वात् नेह लोके प्रशस्तम्, अभक्ष्यत्वात् परलोकव्याघातकमिति भावः॥ ३१९॥

(फ) कौलीन्यं सत्कुलप्रसूतत्वम्।

एतदर्थमिति। नृपाः राजानः एतदर्थम् एतन्निमित्तं कुलीनानां महाकुलप्रसूतानां जनानां संग्रहं कुर्वन्ति तान् पालयन्ति इत्यर्थः। यतः ते कुलीनाः आदि-

मृतानां स्वामिनः कार्य्ये भृत्यानामनुवर्त्तिनाम् ।
भवेत् स्वर्गेऽक्षयो वासः कीर्त्तिश्च धरणीतले ॥ ३२१ ॥

तच्छ्रुत्वा क्रथनकश्चिन्तयामास, एतैः तावत् सर्वैरपि शोभनानि वाक्यानि प्रोक्तानि, न च एकोऽपि स्वामिना विनाशितः, तदहमपि प्राप्तकालं विज्ञापयामि, येन मम वचनमेते त्रयोऽपि समर्थयन्ति (ब)। इति निश्चित्य प्रोवाच, भोः ! सत्यमुक्तं भवता, परं भवानपि नखायुधः, तत् कथं भवन्तं स्वामी भक्षयति। उक्तञ्च,

मनसापि स्वजात्यानां योऽनिष्टानि प्रचिन्तयेत् ।
भवन्ति तस्य तान्येव इहलोके परत्र च ॥ ३२२ ॥

तदपसर अग्रतो येन अहं स्वामिनं विज्ञापयामि, तथानुष्ठिते क्रथनकोऽग्रे स्थित्वा प्रणम्योवाच। स्वामिन् ! एते तावदभक्ष्या भवतां, तत् मम प्राणैः प्राणयात्रा विधीयतां येन मम उभयलोकप्राप्तिर्भवति। उक्तञ्च,

न यज्वानोऽपि गच्छन्ति तां गतिं नैव योगिनः ।
यां यान्ति प्रोज्झितप्राणाः स्वाम्यर्थे सेवकोत्तमाः ॥३२३॥

---

मध्यावसानेषु कदापीत्यर्थः विक्रियां भावान्तरं न गच्छन्ति न प्राप्नुवन्ति समभावेनैव तिष्ठन्तीति भावः ॥ ३२० ॥

मृतानामिति। स्वामिनः कार्य्ये कार्य्यार्थमित्यर्थः मृतानां दत्तप्राणानाम् अनुवर्त्तिनाम् अनुरक्तानां भृत्यानां स्वर्गे अक्षयो वासः, धरणीतले कीर्त्तिश्च भवेत् ॥ ३२१ ॥

(ब) समर्थयन्ति सम्पुष्टं कुर्वन्ति सम्यक् स्पृहयन्ति वा।

मनसेति। यः मनसापि का कथा कार्य्येणेति भावः स्वजात्यानां स्वजातीयानाम् अनिष्टानि प्रचिन्तयेत् तस्य इह लोके परत्र च परलोके च तान्येव अनिष्टानि भवन्ति ॥ ३२२ ॥

नेति। सेवकेषु भृत्येषु उत्तमाः श्रेष्ठाः स्वाम्यर्थे प्रोज्झिताः परित्यक्ताः प्राणाः

एव मभिहिते ताभ्यां शृगालचित्रकाभ्यां (भ) विदारितोभयकुक्षिः क्रथनकः प्राणान् अत्याक्षीत्। ततश्च तैः क्षुद्रपण्डितैः सर्वैर्भक्षितः। अतोऽहं ब्रवीमि। बहवः पण्डिताः क्षुद्रा इति।

तद्भद्र! क्षुद्रपरिवारोऽयं ते राजा, मया सम्यग्ज्ञातः, सतामसेव्यश्च। उक्तञ्च,

अशुद्धप्रकृतौ राज्ञि जनता नानुरज्यते।
यथा गृध्रसमासन्नः कलहंसः समाचरेत्॥ ३२४॥

तथाच, गृध्राकारोऽपि सेव्यः स्यात् हंसाकारैः सभासदैः।
हंसाकारोऽपि सन्त्याज्यो गृध्राकारैः स तैः नृपः॥३२५॥

तन्नूनं ममोपरि केनचित् दुर्जनेन अयं प्रकोपितः। तेनैवं वदति। अथवा भवति एतत्। उक्तञ्च,

मृदुना सलिलेन खन्यमाना-
न्यवघृष्यन्ति गिरेरपि स्थलानि।
उपजापविदां च कर्णजापैः
किमु चेतांसि मृदूनि मानवानाम्?॥ ३२६॥

---

येः तथाभूताः सन्तः यां गतिं यान्ति प्राप्नुवन्ति, यज्वानः विधिना इष्टवन्तोऽपि जनाः यज्वा तु विधिनेष्टवानित्यमरः। तां गतिं न गच्छन्ति, योगिनोऽपि तां गतिं नैव गच्छन्ति॥ ३२३॥

(भ) शृगालचित्रकाभ्यां शृगालशार्दूलाभ्याम्।

अशुद्धेति। अशुद्धा सदोषा प्रकृतिर्यस्य तादृशे राज्ञि जनता लोकसमूहः न अनुरज्यते, नानुरागं व्रजति। यथा गृध्रसमासन्नः गृध्रपरिवृतः कलहंसः समाचरेत् सम्यक् अनुष्ठितवान्॥ ३२४॥

गृध्रेति। नृपः गृध्राकारः गृध्रः शवभोजी निकृष्टपक्षिविशेषः तस्य आकार इव आकारो यस्य तादृशः गृध्रवत् आचारवानपीति भावः। हंसाकारैः हंसानामाकार इव आकारो येषां तादृशैः हंसवत् सुनिर्मलैरिति भावः सभासदैः सभ्यैः सचिवादिभिः परिवृतश्चेदिति अध्याहार्यं सेव्यः स्यात्। हंसाकारोऽपि हंसवत् सुनिर्मलप्रकृतिरपि स नृपः गृध्राकारैः तैः सभ्यैः परिवृतश्चेत् संत्याज्यः॥३२५॥

मृदुनेति। गिरेः पर्वतस्यापि स्थलानि प्रदेशाः मृदुना कोमलेन सलिलेन

कर्णविषेण च भग्नः किं किं न करोति बालिशो लोकः ?
क्षपणकतामपि धत्ते पिबति सुरां नरकपालेन ॥ ३२७ ॥

अथवा साधु इदमुच्यते,

पादाहतोऽपि दृढ़दण्डसमाहतोऽपि
यं दंष्ट्रया स्पृशति तं किल हन्ति सर्पः।
कोऽप्येष एव पिशुनोऽग्रमनुष्यधर्मः
कर्णे परं स्पृशति हन्ति परं समूलम् ॥ ३२८ ॥

तथाच, अहो! खलभुजङ्गस्य विपरीतो बधक्रमः।
कर्णे लगति चैकस्य प्राणैरन्यो वियुज्यते ॥३२९॥

तदेवं गतेऽपि किं कर्त्तव्यमिति, अहं त्वां सुहृद्भावात् पृच्छामि। दमनक आह, तद्देशान्तरगमनं युज्यते, न एवंविधस्य कुस्वामिनः सेवां विधातुम्। उक्तञ्च,

---

नवेन खन्यमानानि सततमुपरिप्रवहणात् दल्यमानानि सन्ति अवघृष्यन्ति क्षयं गच्छन्ति, उपजापविदां भेदकुशलानां मानवानां कर्णजापैः कर्णभञ्जनैः मृदूनि चेतांसि किमु ? विकृतिं गच्छन्तीति भावः ॥ ३२६ ॥

कर्णविषेणेति। कर्णविषेण कर्णजापस्य अतीवानिष्टफलत्वात् विषत्वारोप इति बोध्यम्। कर्णजापेन भग्नः भग्नमना इति भावः बालिशो मूर्खो लोकः विद्वांस्तु कर्णजापवचनं न शृणोतीति भावः किं किं दुष्कार्य्यमिति शेषः न करोति ? सर्वमेव करोतीत्यर्थः। किं बहुना क्षपणकतां सन्न्यासित्वमपि संसारवैराग्यादिति भावः धत्ते आश्रयति, नरकपालेन सुरां पिबति च उन्मत्तत्वादिति भावः ॥ ३२७ ॥

पादाहत इति। सर्पः पादाहतोऽपि चरणताड़ितोऽपि दृढ़ेन कठिनेन दण्डेन समाहतोऽपि सम्पीड़ितोऽपि दंष्ट्रया यं स्पृशति दशतीत्यर्थः तं हन्ति किल, नाशयत्येव। एषः पिशुनानाम् उग्राणां दारुणानां मनुष्याणां धर्मः व्यवसाय इत्यर्थः, परम् अन्यं जनं समूलं हन्ति नाशयति। वसन्ततिलकं वृत्तम् ॥ ३२८ ॥

अहो इति। अहो! आश्चर्य्यं खल एव भुजङ्गः सर्पः तस्य बधक्रमः हत्यानियमः विपरीतः विभिन्नरूपः, तथाहि सः एकस्य कर्णे लगति जपति, अन्यः अपरो जनः प्राणैः वियुज्यते विहीयते ॥ ३२९ ॥

गुरोरप्यवलिप्तस्य कार्य्याकार्य्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ३३० ॥

सञ्जीवक आह, अस्माकमुपरि स्वामिनि कुपिते गन्तुं न शक्यते न च अन्यत्र गतानामपि निर्वृतिः (म) भवति। उक्तञ्च, महतां योऽपराध्येत दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू ताभ्यां हिंसति हिंसकम् ॥३३१॥

तद्युद्धं मुक्ता मे नान्यदस्ति श्रेयस्करम् उक्तञ्च,

न तान् हि तीर्थैस्तपसा च लोकान्
स्वर्गैषिणो दानशतैः सुवृत्तैः
क्षणेन यान् यान्ति रणेषु धीराः
प्राणान् समुज्झन्ति हि ये सुशीलाः ॥ ३३२ ॥

मृतैः सम्प्राप्यते स्वर्गो जीवद्भिः कीर्त्तिरुत्तमा ।
तदुभावपि शूराणां गुणावेतौ सुदुर्लभौ ॥ ३३३ ॥

---

गुरोरिति । अवलिप्तस्य उद्धतस्य कार्य्याकार्य्यं कर्त्तव्याकर्त्तव्यम् अजानतः उत्पथप्रतिपन्नस्य कुमार्गगामिनः गुरोः पित्रादेरपि परित्यागो विधीयते क्रियते । तादृशगुरुत्यागी न दोषायेति भावः ॥ ३३० ॥

( म ) निर्वृतिः सुखं निरुद्वेगो वा ।

महतामिति । यः महताम् अपराध्येत अपराधं कुर्य्यात्, स दूरस्थोऽपि न आश्वसेत् न जीवेत् न सुखं प्राप्नुयात् वा । यतः बुद्धिमतो जनस्य बाहू दीर्घौ ताभ्यां बाहुभ्यां दूरदेशप्रसृताभ्यामिति भावः हिंसकम् अपराधिनं हिंसति नाशयति स महान् इति शेषः ॥ ३३१ ॥

नेति । ये सुशीला धीराः रणेषु संग्रामेषु प्राणान् समुज्झन्ति सन्त्यजन्ति, हि निश्चितं ते क्षणेन प्राणत्यागमात्रेण नतु विलम्बेनेति भावः । यान् लोकान् यान्ति प्राप्नुवन्ति, स्वर्गैषिणः स्वर्गकामाः जनाः तीर्थैः पुण्यक्षेत्रपर्य्यटनैरित्यर्थः तपसा चान्द्रायणादिना, तथा सुवृत्तैः सुसम्पन्नैः दानशतैः तान् लोकान् न हि नैव प्राप्नुवन्तीत्यनुषज्यते । उपजातिवृत्तम् ॥ ३३२ ॥

मृतैरिति । मृतैः संग्रामे इति शेषः । स्वर्गः, जीवद्भिः युद्धं जित्वेति शेषः

ललाटदेशे रुधिरं स्रवत्तु शूरस्य यस्य प्रविशेच्च वक्त्रे ।
तत् सोमपानेन समं भवेच्च संग्रामयज्ञे विधिवत् प्रदिष्टम् ॥३२४॥
तथाच, होमार्थैर्विधिवत् प्रदानविधिना सद्विप्रवृन्दार्चनैः
यज्ञैर्भूरिसुदक्षिणैः सुविहितैः सम्प्राप्यते यत् फलम् ।
सत्तीर्थाश्रमवासहोमनियमैश्चान्द्रायणाद्यैः कृतैः
पुम्भिस्तत् फलमाहवे विनिहतैः सम्प्राप्यते तत्क्षणात्३२५

तदाकर्ण्य दमनकश्चिन्तयामास, युद्धाय कृतनिश्चयोऽयं दृश्यते दुरात्मा, तद्यदि कदाचित् तीक्ष्णशृङ्गाभ्यां स्वामिनं प्रहरिष्यति तत् महान् अनर्थः सम्पत्स्यते। तदेनं भूयोऽपि स्वबुद्ध्या प्रबोध्य तथा करोमि, यथा देशान्तरगमनं करोति, आह च, भो मित्र! सम्यक् अभिहितं भवता, परं किन्तु कः स्वामिभृत्ययोः संग्रामः (य)। उक्तञ्च,

बलवन्तं रिपुं दृष्ट्वा किलात्मानं प्रगोपयेत् ।

---

उत्तमा कीर्त्तिः सम्प्राप्यते लभ्यते तत् तस्मात् शूराणां वीराणाम् एतौ उभौ अपि स्वर्गलाभयशोलाभरूपाविति भावः गुणौ सुदुर्लभौ अन्येषामिति भावः ॥ ३२३ ॥

ललाटेति। यस्य शूरस्य ललाटदेशे यत् रुधिरं संग्रामप्रहारोत्थमिति भावः स्रवत् द्रवत् सत् वक्त्रे मुखे शूरस्येति शेषः। प्रविशेच्च तत् संग्रामयज्ञे विधिवत् यथाविधि सोमपानेन समं तुल्यं प्रदिष्टं कीर्त्तितं भवेच्च। उपजातिवृत्तम् ॥३२४॥

होमार्थैरिति। पुम्भिः पुरुषैः विधिवत् कृतैः होमार्थैः यज्ञवस्तुभिः अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु इत्यमरः। प्रदानविधिना प्रकृष्टेन दानरूपेण विधानेन सतां विदुषां विप्रवृन्दानां ब्राह्मणसमूहानाम् अर्चनैः पूजनैः, सुविहितैः सुनिष्पादितैः भूरिसुदक्षिणैः बहुशोभनदक्षिणावद्भिः यज्ञैः, सत्सु तीर्थेषु आश्रमेषु च वासैः होमैः अग्निहोत्रानुष्ठानैरित्यर्थः नियमैः इन्द्रियसंयमादिभिः तथा चान्द्रायणाद्यैः व्रतविशेषैः यत् फलं सम्प्राप्यते लभ्यते, तत् आहवे संग्रामे विनिहतैः तत्क्षणात् न तु विलम्बेनेति भावः संप्राप्यते। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३२५ ॥

(य) स्वामिभृत्ययोरिति। संग्रामः समयोरेव युज्यते, स्वामिभृत्ययोस्तु साम्याभावात् कथं संग्राम इति भावः।

बलवद्भिश्च कर्त्तव्या शरच्चन्द्रप्रकाशता ॥ ३३६ ॥

अन्यच्च, शत्रोर्विक्रममज्ञात्वा वैरमारभते हि यः।
स पराभवमाप्नोति समुद्रष्टिट्टिभाद् यथा ॥ ३३७ ॥

सञ्जीवक आह, कथमेतद् ? सोऽब्रवीत्।

## कथा १२।

कस्मिंश्चित् समुद्रतीरैकदेशे टिट्टिभदम्पती प्रतिवसतः स्म। ततो गच्छति काले ऋतुसमयमासाद्य टिट्टिभी गर्भमाधत्त। अथ आसन्नप्रसवा सती सा टिट्टिभमूचे। भोः कान्त ! मम प्रसवसमयो वर्त्तते तद्विचिन्त्यतां किमपि निरुपद्रवं स्थानं, येन तत्राहम् अण्डकविमोचणं (क) करोमि। टिट्टिभः प्राह, भद्रे ! रम्योऽयं समुद्रप्रदेशः। तदत्रैव प्रसवः कार्य्यः। सा आह, अत्र पूर्णिमादिने समुद्रवेला (ख) चरति। सा मत्तगजेन्द्रानपि समाकर्षति (ग)। तद् दूरमन्यत्र किञ्चित् स्थानमन्विष्यताम्। तत् श्रुत्वा विहस्य टिट्टिभः प्राह, भद्रे !

---

बलवन्तमिति। बलवन्तं प्रबलं रिपुं शत्रुं दृष्ट्वा आत्मानं प्रगोपयेत् प्रकर्षेण गोपितं कुर्य्यात् किलेत्यवधारणार्थम्। बलवद्भिश्च जनैः शरच्चन्द्रप्रकाशता शरच्चन्द्रवत् प्रकाशता स्वस्य प्रकाश इत्यर्थः अगोपनमिति भावः कर्त्तव्या। बलिभिः सह संग्रामे बलिनः स्वं प्रकाशयन्ति न तु दुर्बला इति भावः ॥ ३३६ ॥

शत्रोरिति। यः शत्रोः विक्रमम् अज्ञात्वा वैरम् आरभते, सः, समुद्रः टिट्टिभात् क्षुद्रपक्षिविशेषात् यथा पराभवम् आप्नोति ॥ ३३७ ॥

(क) अण्डकविमोचणम् अण्डकानां डिम्बानां विमोचणं गर्भात् निःसारणम्।

(ख) समुद्रवेला सागरजलं वेला स्यात्तीरनीरयोरित्यमरः। चरति वृद्धिं गच्छति चन्द्रोदयदर्शनादिति भावः।

(ग) सा वेला। समाकर्षति जलनिमग्नान् करोतीत्यर्थः।

युक्तमुक्तं भवत्या, का मात्रा (श) समुद्रस्य या मम दूषयिष्यति प्रसूतिम् (ष)? किं न श्रुतं भवत्या?

बद्धाम्बरचरमार्गं व्यपगतधूमं सदा महद्भयदम्।
मन्दमतिः कः प्रविशति हुताशनं स्वेच्छया मनुजः॥३३८॥

मत्तेभकुम्भविदलनकृतश्रमं सुप्तमन्तकप्रतिमम्।
यमलोकदर्शनेच्छुः सिंहं बोधयति को नाम?॥ ३३९॥

को गत्वा यमसदनं स्वयमन्तकमादिशत्यजातभयः?
प्राणानपहर मत्तो यदि शक्तिः काचिदस्ति तव॥३४०॥

प्रालेयमिश्रे मरुति प्राभातिके च वाति जड़े।
गुणदोषज्ञः पुरुषो जलेन कः शीतमपनयति॥३४१॥

तस्मात् विश्रब्धा अत्रैव (स) गर्भं मुञ्च। उक्तञ्च,

---

(श) मात्रा शक्तिरिति भावः।

(ष) प्रसूतिम् अपत्यम्।

बद्धेति। कः मन्दमतिः मूढ़चेताः मनुजः मानवः बद्धः रुद्ध इत्यर्थः अम्बरचराणां खेचराणां मार्गः पन्थाः येन तादृशः खमुत्पतन्तमित्यर्थः व्यपगतधूमं धूमशून्यं केवलं ज्वलन्तमिति भावः महाभयदम् अतिभयङ्करं हुताशनम् अग्निं स्वेच्छया प्रविशति? न कोऽपीत्यर्थः। मया सह विरोधः हुताशने प्रवेश इव भयङ्कर इति भावः। आर्य्यावृत्तम्॥ ३३८॥

मत्तेति। को नाम यमलोकदर्शनेच्छुः सन् मत्तानां मदस्राविणाम् इभानां गजानां कुम्भविदलने कृतः श्रमो येन तादृशम् अन्तकप्रतिमं यमसदृशं सुप्तं निद्रितं सिंहं बोधयति जागरयति? न कोऽपीत्यर्थः कोऽपि मया सह न विवदिष्यतीति भावः। आर्य्यावृत्तम्॥ ३३९॥

क इति। को जनः यमसदनं गत्वा अजातभयः निर्भयः सन् स्वयम्, अन्तकं यमम् आदिशति, यत् तव यदि काचित् शक्तिः अस्ति, तदा मत्तः मत्सकाशात् प्राणान् अपहर इति न कोऽपि इत्थमादिशतीत्यर्थः। आर्य्यावृत्तम्॥ ३४०॥

प्रालेयेति। प्रालेयमिश्रे शिशिरसंवलिते अतएव जड़े मन्थरे भारवतीत्यर्थः प्राभातिके प्रातःकालीने मरुति वायौ वाति वहति सति गुणदोषज्ञः कः पुरुषः जलेन शीतम् अपनयति निवारयति? न कोऽपीत्यर्थः। आर्य्यावृत्तम्॥ ३४१॥

(स) विश्रब्धा निःशङ्केत्यर्थः।

य: पराभवसन्त्रस्त: स्वस्थानं सन्त्यजेन्नर: ।
तेन चेत् पुत्रिणी माता तद्वन्ध्या केन कथ्यते ? ॥३४२॥

तत् श्रुत्वा समुद्रश्चिन्तयामास, अहो ! गर्व: पक्षिकीटस्य अस्य । अथवा साधु इदमुच्यते,

उत्क्षिप्य टिट्टिभ: पादावास्ते भङ्गभयाद्दिव: ।
स्वचित्तकल्पितो गर्व: कस्य नात्रापि विद्यते ॥ ३४३ ॥

तन्मया अस्य प्रमाणं (ह) कुतूहलादपि द्रष्टव्यम् । किं मम एषोऽण्डापहारे (च) कृते करिष्यति, इति चिन्तयित्वा स्थित: । अथ प्रसवानन्तरं प्राणयात्रार्थं गताया: टिट्टिभ्या: समुद्रो वेलाव्याजेन (क) अण्डानि अपजहार । अथ आयाता सा टिट्टिभी प्रसवस्थानं शून्यमवलोक्य प्रलपन्ती टिट्टिभमूचे, भो मूर्ख ! कथितमासीत् मया ते यत् समुद्रवेलया अण्डानां विनाशो भविष्यति, तद्दूरतरं व्रजाव: परं मूढतया अहङ्कारमाश्रित्य मम वचनं न करोषि । अथवा साधु इदमुच्यते,

सुहृदां हितकामानां न करोतीह यो वच: ।
स कूर्म इव दुर्बुद्धि: काष्ठाद् भ्रष्टो विनश्यति ॥ ३४४ ॥

---

य इति । य: नर: पराभवसन्त्रस्त: पराभवाद्भीत: सन् स्वस्थानं सन्त्यजेत्, तेन नरेण माता तज्जननी चेत् यदि पुत्रिणी पुत्रवती भवतीति शेष: तत् तदा वन्ध्या केन कथं कथ्यते वन्ध्याशब्दो नोच्चारणीय इति भाव: ॥ ३४२ ॥

उत्क्षिप्येति । टिट्टिभ: दिव: आकाशस्य भङ्गभयात् पादौ उत्क्षिप्य उत्तोल्य अवष्टम्भनार्थमिति भाव: आस्ते तिष्ठति, तथाहि अत्र जगति कस्य जनस्य स्वचित्तकल्पित: गर्व: अहङ्कार: नापि नैव विद्यते ? सर्वस्यापि क्षुद्रस्य महतो वा आत्मगर्व: स्वचित्तानुसारी वर्त्तते इत्यर्थ: ॥ ३४३ ॥

(ह) प्रमाणं निदर्शनमित्यर्थ: ।

(च) अण्डापहारे अण्डानां डिम्बानाम् अपहार: हरणं तस्मिन् ।

(क) वेलाव्याजेन जलवृद्धिच्छलेनेत्यर्थ: ।

सुहृदामिति । य: हितकामानां हितार्थिनां सुहृदां वच: न करोति न

टिट्टिभ आह, कथमेतत् ? सा अब्रवीत्,

## कथा १३।

अस्ति कस्मिंश्चित् जलाशये कम्बुग्रीवो नाम कच्छपः। तस्य च सङ्कटविकटनाम्नी मित्रे हंसजातीये परमस्नेहकोटिमाश्रिते नित्यमेव सरस्तीरमासाद्य, तेन सह अनेकदेवर्षिमहर्षीणां कथाः कृत्वा अस्तमयवेलायां (ख) स्वनीड़संश्रयं कुरुतः। अथ गच्छता कालेन अनावृष्टिवशात् सरः शनैः शनैः शोषमगमत्। ततस्तद्दुःखदुःखितौ तौ ऊचतुः। भो मित्र! जम्बालशेषम् (ग) एतत्सरः सञ्जातं तत्कथं भवान् भविष्यतीति व्याकुलत्वं नो हृदि वर्त्तते। तच्छ्रुत्वा कम्बुग्रीव आह, भोः! साम्प्रतं न अस्ति अस्माकं जीवितव्यं जलाभावात्। तथापि उपायश्चिन्त्यतामिति। उक्तञ्च,

त्याज्यं न धैर्य्यं विधुरेऽपि काले धैर्य्यात्कदाचिद्गतिमाप्नुयात्सः।
यथा समुद्रेऽपि च पोतभङ्गे सांयात्रिको वाञ्छति तर्त्तुमेव ॥३४५॥

अपरञ्च, मित्रार्थे बान्धवार्थे च बुद्धिमान् यतते सदा।
जातास्वापत्सु यत्नेन जगादेदं वचो मनुः ॥३४६॥

---

शृणोतीत्यर्थः न प्रतिपालयतीति यावत् स दुर्बुद्धिः इह जगति काष्ठाद् भ्रष्टः कूर्म इव विनश्यति ॥ ३४४ ॥

(ख) अस्तमयवेलायां सायंकाले। स्वनीड़संश्रयं निजवासाश्रयम्।

(ग) जम्बालशेषं कर्दमावशिष्टम्।

त्याज्यमिति। काले समये विधुरे विपरीतेऽपि दुःसमयेऽपीत्यर्थः धैर्य्यं न त्याज्यं कदाचित् स तादृशसमयेऽपि धैर्य्यवान् पुरुष इत्यर्थः धैर्य्यात् धैर्य्याश्रयात् गतिम् उपायम् आप्नुयात्। यथा समुद्रे पोतभङ्गे यानव्यसनेऽपि सांयात्रिकः पोतवणिक् तर्त्तुमेव वाञ्छति धैर्य्याश्रयेणेति भावः। उपजातिवृत्तम् ॥ ३४५ ॥

मित्रार्थे इति। बुद्धिमान् जनः आपत्सु जातासु उपस्थितासु सतीषु

तत् आनीयतां काचित् दृढ़रज्जुर्लघुकाष्ठं वा, अन्विष्यतां च प्रभूतजलसनाथं (घ) सरो, येन मया मध्यप्रदेशे दन्तैर्गृहीते सति युवां कोटिभागयोः (ङ) तत्काष्ठं मया सहितं संगृह्य तत्सरो नयथः। तौ ऊचतुः, भो मित्र! एवं करिष्यावः परं भवता मौनव्रतेन (च) स्थातव्यं, नो चेत् तव काष्ठात् पातो भविष्यति। तथा अनुष्ठिते, गच्छता कम्बुग्रीवेण अधोभागव्यवस्थितं (छ) किञ्चित् पुरमालोकितम्। तत्र ये पौरास्ते तथा नीयमानं विलोक्य सविस्मयमिदमूचुः, अहो! चक्राकारं किमपि पक्षिभ्यां नीयते, पश्यत पश्यत, अथ तेषां कोलाहलमाकर्ण्य कम्बुग्रीव आह, भोः! किमेष कोलाहल इति वक्तुमना अर्द्धोक्ते पतितः पौरैः खण्डशः कृतश्च। अतोऽहं ब्रवीमि। सुहृदां हितकामानामिति।

तथाच, अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ॥ ३४७ ॥

टिट्टिभ आह, कथमेतत्? सा अब्रवीत्,

---

मित्रार्थे बान्धवार्थे पित्रार्थ्य च सदा यत्नेन यतते यत्नं करोति, मनुः इदं वचो जगाद उक्तवान् ॥ ३४६ ॥

(घ) प्रभूतजलसनाथं बहुजलपूर्णम् इत्यर्थः।

(ङ) कोटिभागयोः अग्रभागयोः।

(च) भवता त्वया मौनव्रतेन मौनिना इत्यर्थः नो चेत् अन्यथा, कथने सति इत्यर्थः।

(छ) अधोभागव्यवस्थितं तलस्थितम्।

अनागतेति। अनागतस्य अनुपस्थितस्य विधाता कर्त्ता भविष्यद्विविच्य कर्मकर्त्ता इत्यर्थः तथा प्रत्युत्पन्ना प्रत्युपस्थिता विपत्प्रतीकारसमर्था इत्यर्थः मतिः यस्य तथोक्तः विपदुपस्थितावेव सञ्जाततत्प्रतीकारबुद्धिरित्यर्थः। एतौ द्वौ सुखं यथा तथा एधेते वृद्धिं गच्छतः, यत् भविष्यं यस्य तथोक्तः यत् भविष्यति तत् भविष्यतीति भाग्यनिर्णयात् प्रतीकारपराङ्मुखः इत्यर्थः विनश्यति ॥ ३४७ ॥

## कथा १४ ।

कस्मिंश्चित् जलाशये अनागतविधाता प्रत्युत्पन्नमतिः यद्भविष्यश्चेति त्रयो मत्स्याः सन्ति। अथ कदाचित् तं जलाशयं दृष्ट्वा गच्छद्भिर्मत्स्यजीविभिरुक्तं, यदहो! बहुमत्स्योऽयं ह्रदः, कदाचिदपि न अस्माभिरन्वेषितः। तदद्य तावदाहारवृत्तिः (ज) सञ्जाता, सन्ध्यासमयश्च संवृत्तः (झ) ततः प्रभातेऽत्र आगन्तव्यमिति निश्चयः। अतस्तेषां तत्कुलिशपातोपमं (ञ) वचः समाकर्ण्य अनागतविधाता सर्वान् मत्स्यान् आहूय इदमूचे, अहो! श्रुतं भवद्भिः यन्मत्स्यजीविभिरभिहितम्? तत् रात्रावपि गम्यतां कश्चिन्निकटं सरः।

उक्तञ्च, अशक्तैर्बलिनः शत्रोः कर्त्तव्यं प्रपलायनम्।
संश्रितव्योऽथवा दुर्गो नान्या तेषां गतिर्भवेत् ॥३४८॥

तन्नूनं प्रभातसमये मत्स्यजीविनोऽत्र समागम्य मत्स्यसंक्षयं करिष्यन्ति, एतन्मम मनसि वर्त्तते। तन्न युक्तं साम्प्रतं क्षणमपि अत्रावस्थातुम्। उक्तञ्च,

विद्यमाना गतिर्येषामन्यत्रापि सुखावहा।
ते न पश्यन्ति विद्वांसो देहभङ्गं कुलक्षयम् ॥ ३४९ ॥

---

(ज) आहारवृत्तिः आहाररूपी जीवनोपाय इत्यर्थः।

(झ) संवृत्तः उपस्थितः।

(ञ) कुलिशपातोपमं वज्रपातसदृशम्।

अशक्तैरिति। अशक्तैः दुर्बलैः जनैः बलिनः बलवतः शत्रोः सकाशादिति भावः प्रपलायनं प्रकर्षेण पलायनं कर्त्तव्यम्। अथवा दुर्गः दुर्गमस्थानं शत्रोरगम्यप्रदेश इत्यर्थः संश्रितव्यः आश्रयणीयः। तेषां दुर्बलानाम् अन्या गतिः उपायो न भवेत् नास्ति इत्यर्थः ॥ ३४८ ॥

विद्यमानेति। येषां जनानाम् अन्यत्रापि स्थानान्तरेऽपि सुखावहा गतिः

तदाकर्ण्य प्रत्युत्पन्नमतिः प्राह, अहो! सत्यमभिहितं भवता, ममापि अभीष्टमेतत्, तदन्यत्र गम्यतामिति। उक्तञ्च,

परदेशभयाद्भीता बहुमाया नपुंसकाः।
स्वदेशे निधनं यान्ति काकाः कापुरुषा मृगाः ॥३५०॥

यस्यास्ति सर्वत्र गतिः स कस्मात्
स्वदेशरागेण हि याति नाशम्।
तातस्य कूपोऽयमिति ब्रुवाणाः
क्षारं जलं कापुरुषाः पिबन्ति ॥ ३५१ ॥

अथ तत्समाकर्ण्य प्रोच्चैर्विहस्य यद्भविष्यः प्रोवाच, अहो! न भवद्भ्यां मन्त्रितं सम्यगेतदिति यतः, किं वाङ्मात्रेणापि तेषां पितृपैतामहिकम्(ट) एतत्सरः त्यक्तुं युज्यते। यदि आयुःक्षयोऽस्ति तदन्यत्र गतानामपि मृत्युर्भविष्यति एव। उक्तञ्च,

अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति।

---

विद्यमाना अस्तीत्यर्थः, ते विद्वांसः देहभङ्गं निजशरीरक्षयं कुलक्षयञ्च न पश्यन्ति ॥ ३४९ ॥

परेति। काकाः कापुरुषाः मृगाश्च परदेशभयात् भीताः परस्मिन् देशे कथं वस्तव्यमिति सन्त्रस्ताः बहुमायाः स्वदेशं प्रति सातिशयममताशालिनः अतएव नपुंसकाः क्लीवा अक्षमा इति भावः सुतरां स्वदेशे निधनं नाशं यान्ति प्राप्नुवन्ति ॥ ३५० ॥

यस्येति। यस्य जनस्य सर्वत्र गतिः उपायः स्यात् स जनः स्वदेशरागेण निजदेशानुरागेण कस्मात् कथं नाशं याति प्राप्नोति? कापुरुषाः जनाः तातस्य पितुः अयं कूप इति ब्रुवाणाः वदन्तः सन्तः क्षारं लवणाक्तं जलं पिबन्ति न कुत्रापि गच्छन्तीति भावः। उपजातिवृत्तम् ॥ ३५१ ॥

(ट) पितृपैतामहिकं पितृपितामहक्रमागतम्।

अरक्षितमिति। अरक्षितं यत्नेन अप्रतिपालितमित्यर्थः वस्तु दैवरक्षितं

जीवत्यनाथोऽपि वने विसर्जितः

कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ३५२ ॥

तदहं न यास्यामि, भवद्भ्यां च यत्प्रतिभाति तत्कर्त्तव्यम्। अथ तस्य तं निश्चयं ज्ञात्वा अनागतविधाता प्रत्युत्पन्नमतिश्च, निष्क्रान्तौ सह परिजनेन। अथ प्रभाते तैर्मत्स्यजीविभिः जालैस्तज्जलाशयमालोड्य यद्भविष्येण सह तत् सरो निर्मत्स्यतां नीतम्। अतोऽहं ब्रवीमि। अनागतविधाता चेति। तत् श्रुत्वा टिट्टिभ आह। भद्रे! किं मां यद्भविष्यसदृशं सम्भावयसि। तत्पश्य मे बुद्धिप्रभावं यावदेनं दुष्टसमुद्रं स्वचञ्च्वा शोषयामि; टिट्टिभी आह, अहो! कस्ते समुद्रेण सह विग्रहः? तन्न युक्तमस्योपरि कोपं कर्त्तुम्। उक्तञ्च,

पुंसामसमर्थानामुपद्रवायात्मनो भवेत् कोपः।

पिठरं ज्वलदतिमात्रं निजपार्श्वानेव दहतितराम् ॥३५३॥

तथाच, अविदित्वात्मनः शक्तिं परस्य च समुत्सुकः।

गच्छन्नभिमुखो नाशं याति वह्नौ पतङ्गवत् ॥३५४॥

---

दैवेन भाग्येन रक्षितं सत् तिष्ठति। सुरक्षितं सुयत्नपालितं वस्तु दैवहतं दैवेन विनाशितं विनश्यति न तिष्ठतीत्यर्थः। वने विसर्जितः परित्यक्तः अनाथोऽपि जीवति, गृहे कृतप्रयत्नोऽपि जनः विनश्यति नाशं गच्छति। वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति तल्लक्षणात् ॥ ३५२ ॥

पुंसामिति। असमर्थानाम् अक्षमाणां पुंसाम् आत्मनः स्वस्य उपद्रवाय नाशाय इत्यर्थः कोपो भवेत्। तथाहि अतिमात्रं ज्वलत् पिठरं स्थाली निजपार्श्वानेव दहतितराम् अतिशयेन दहति। आर्य्यावृत्तम् ॥ ३५३ ॥

अविदित्वेति। आत्मनः परस्य च शक्तिं सामर्थ्यम् अविदित्वा अज्ञात्वा समुत्सुकः सन् अभिमुखो गच्छन् जनः वह्नौ पतङ्गवत् शलभ इव नाशं याति ॥ ३५४ ॥

टिट्टिभ आह, प्रिये ! मामैवं वद, येषाम् उत्साहशक्तिः (ठ) भवति ते स्वल्पा अपि गुरून् विक्रमन्ते (ड)। उक्तञ्च,

विशेषात् परिपूर्णस्य याति शत्रोरमर्षणः।
आभिमुख्यं शशाङ्कस्य यथाद्यापि विधुन्तुदः ॥ ३५५ ॥

तथाच, प्रमाणादधिकस्यापि गण्डश्याममदच्युतेः।
पदं मूर्ध्नि समाधत्ते केशरी मत्तदन्तिनः ॥ ३५६ ॥

तथाच, बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम्।
तेजसा सह जातानां वयः कुत्रोपयुज्यते ? ॥ ३५७ ॥

हस्ती स्थूलतरः स चाङ्कुशवशः किं हस्तिमात्रोऽङ्कुशः ?
दीपे प्रज्वलिते प्रणश्यति तमः किं दीपमात्रं तमः ?।
वज्रेणापि हताः पतन्ति गिरयः किं वज्रमात्रो गिरिः ?
तेजो यस्य विराजते स बलवान् स्थूलेषु कः प्रत्ययः ॥३५८॥

---

(ठ) उत्साहशक्तिः अभ्युन्नतिसामर्थ्यम्।

(ड) स्वल्पाः क्षुद्राः। विक्रमन्ते विक्रमेण पराजयन्ते इत्यर्थः।

विशेषादिति। विधुन्तुदो राहुः अद्यापि यथा परिपूर्णस्य शशाङ्कस्य अभिमुखं याति, तथा अमर्षणः कोपनः जनः परिपूर्णस्य शत्रोः अभिमुखं विशेषेण याति गच्छति, नहि शूराः दुर्बलान् योधयन्तीति भावः ॥ ३५५ ॥

प्रमाणादिति। केशरी सिंहः प्रमाणात् स्वपरिमाणात् अधिकस्य गण्डयोः श्यामस्य श्यामवर्णस्य मदस्य च्युतिः क्षरणं यस्य तादृशस्य मदस्राविण इत्यर्थः मत्तदन्तिनः मत्तगजस्यापि मूर्ध्नि शिरसि पदं समाधत्ते अर्पयति। अल्पोऽपि उत्साही महाकायं शत्रुं पराजयते इति भावः ॥ ३५६ ॥

बालस्येति। बालस्य नवोदितस्य क्षुद्रकायस्येति भावः रवेः सूर्य्यस्य पादाः किरणाः भूभृतां पर्वतानाम् उपरि पतन्ति, तेजसा सह जातानाम् उत्पन्नानां तेजस्विनामित्यर्थः वयः क्षुद्रत्वाधिकत्वप्रमाणमिति भावः कुत्र उपयुज्यते उपयोगि भवति ? न कुत्रापीत्यर्थः तेजोऽतिरेकस्यैव जयः नतु महाकायस्येति भावः ॥३५७॥

हस्तीति। हस्ती स्थूलतरः अतिशयेन स्थूलकाय इत्यर्थः स च हस्ती अङ्कुशस्य हस्तिताड़नदण्डस्य वशः अधीनः, सः अङ्कुशः किं हस्तिमात्रः ? हस्तिप्रमाणः ?

तदनया चञ्च्वा अस्य सकलं तोयं शुष्कस्थलतां नयामि। टिट्टिभी आह, भो कान्त! यत्र जाह्नवी नवनदीशतानि गृहीत्वा नित्यमेव प्रविशति, तथा सिन्धुश्च, (ढ) तत्कथं त्वम् अष्टादशनदीशतैः पूर्य्यमाणं तं विप्रुषवाहिन्या (ण) चञ्च्वा शोषयिष्यसि। तत् किमश्रद्धेयेन (त) उक्तेन। टिट्टिभ आह, प्रिये!

अनिर्वेदः श्रियो मूलं चञ्चुर्मे लोहसन्निभा।
अहोरात्राणि दीर्घाणि समुद्रः किं न शुष्यति? ॥३५९॥

दुरधिगमः परभागो यावत्पुरुषेण पौरुषं न कृतम्।
जयति तुलामधिरूढ़ो भास्वानपि जलदपटलानि ॥३६०॥

---

नैवेत्यर्थः। दीपे प्रज्वलिते तमः तिमिरं प्रणश्यति, तत् तमः किं दीपमानं दीपप्रमाणम्? नैवेत्यर्थः। वज्रेण शताः शतसंख्यकाः गिरयः पर्वताः पतन्ति, गिरिः किं वज्रमात्रः? वज्रपरिमाणं नैवेत्यर्थः वज्रमतिक्षुद्रं गिरिस्तु अतिमहानिति भावः। यस्य तेजः विराजते विशेषेण शोभते, स बलवान् भवतीति शेषः स्थूलेषु महाकायेषु प्रत्ययः विश्वासः कः? नास्ति कोऽपि विश्वास इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ३५८ ॥

(ढ) सिन्धुः नदविशेषः।

(ण) विप्रुषवाहिन्या जलादीनां कणवाहिन्या इत्यर्थः।

(त) अश्रद्धेयेन अविश्वसनीयेन।

अनिर्वेद इति। अनिर्वेदः निर्वेदः स्वावमाननं तदभावः उत्साहावलम्बनमिति भावः श्रियः सम्पदः मूलं निदानम्। मे मम चञ्चुः लौहसन्निभा लौहवत्-कठिना। दीर्घाणि महान्ति अहोरात्राणि, समुद्रः किं न शुष्यति? न शोषं याति? अपि तु शुष्यत्येवेत्यर्थः सोत्साहं कठिनया मम चञ्च्वा दीर्घैरहोरात्रैः समुद्रं शोषयिष्यामीति भावः ॥ ३५९ ॥

दुरधिगम इति। यावत् पुरुषेण पौरुषं पराक्रमः न कृतं तावत् परभागः उत्कर्षः दुरधिगमः दुष्प्रापः। पराक्रमं विना महत्त्वं न प्रकाशते इति भावः भास्वानपि सूर्य्योऽपि का कथा अन्येषामिति भावः तुलां राशिविशेषमधिरूढ़ः सन् जलदपटलानि मेघवृन्दानि जयति तुलास्थो रविर्न मेघैराच्छाद्यते इति भावः।

टिट्टिभी आह, यदि त्वया अवश्यं समुद्रेण सह विग्रहानुष्ठानं कार्यं, तदन्यानपि विहङ्गमानाहूय सुहृज्जनसहित एवं समाचर। उक्तञ्च,

बहूनामप्यसाराणां समवायो हि दुर्जयः।
तृणैरावेष्ट्यते रज्जुर्येन नागोऽपि बध्यते ॥ ३६१ ॥

तथा च, चटका काष्ठकूटेन मक्षिकादर्दुरैस्तथा।
महाजनविरोधेन कुञ्जरः प्रलयं गतः ॥ ३६२ ॥

टिट्टिभ आह, कथमेतत् ? सा प्राह,

## कथा १५।

अस्ति कस्मिंश्चिद्वनोद्देशे चटकदम्पती तमालतरुकृतनिलयौ प्रतिवसतः स्म। अथ तयोर्गच्छता कालेन सन्ततिः अभवत्। अन्यस्मिन्नहनि प्रमत्तो वनगजः कश्चित्तं तमालवृक्षं घर्मार्त्तश्छायार्थी समाश्रितः, ततो मदोत्कर्षात् (थ) तां तस्य शाखां चटकाश्रितां पुष्कराग्रेण आकृष्य (द) बभञ्ज। तस्या भङ्गेन चटकाण्डानि सर्वाणि विशीर्णानि, (ध) आयुः-

---

यावत् पराक्रमो न प्रकाश्यते तावत् महानपि पराजीयते इति भावः। आर्य्यावृत्तम् ॥ ३६० ॥

बहूनामिति। बहूनाम् असाराणां सारहीनानामपि वस्तूनां समवायः समष्टिः दुर्जयः जेतुमशक्यो हि। तथाहि तृणैः रज्जुः आवेष्ट्यते क्रियते इति भावः येन तृणेन नागोऽपि गजोऽपि बध्यते बद्धः क्रियते ॥ ३६१ ॥

चटकेति। चटकया सह काष्ठकूटेन तदाख्यपक्षिणा मक्षिकया सह मिलितैः दर्दुरैः भेकैः एवं महाजनविरोधेन महतां बहूनां जनानां विरोधेन प्रलयं नाशं गतः ॥ ३६२ ॥

(थ) मदोत्कर्षात् मदातिरेकात्।

(द) पुष्कराग्रेण शुण्डाग्रेण।

(ध) विशीर्णानि भग्नानि।

शेषतया च चटकौ कथमपि प्राणैर्न वियुक्तौ। अथ चटका स्वाण्डभङ्गाभिभूता प्रलापान् कुर्वाणा न किञ्चित् सुखमाससाद। अत्रान्तरे तस्यास्तान् प्रलापान् श्रुत्वा काष्ठकूटो नाम पक्षी तस्याः परमसुहृत् तद्दुःखदुःखितोऽभ्येत्य ताम् उवाच, भगवति! किं वृथा प्रलापेन। उक्तञ्च,

नष्टं मृतमतिक्रान्तं नानुशोचन्ति पण्डिताः।
पण्डितानाञ्च मूर्खाणां विशेषोऽयं यतः स्मृतः ॥३६३॥

तथा च, अशोच्यानीह भूतानि यो मूढ़स्तानि शोचति।
स दुःखे लभते दुःखं द्वावनर्थौ निषेवते ॥ ३६४ ॥

अन्यच्च, श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
तस्मान्न रोदितव्यं हि क्रियाः कार्य्याश्च शक्तितः ॥३६५॥

चटका प्राह, अस्त्वेतत्। परं दुष्टगजेन मदात् मम (न) सन्तानक्षयः कृतः, तद्यदि मम त्वं सुहृत् सत्यस्तदस्य गजापसदस्य (प) कोऽपि वधोपायश्चिन्त्यतां यस्य अनुष्ठानेन मे सन्ततिनाशदुःखमपसरति। उक्तञ्च,

---

नष्टमिति। पण्डिताः विद्वांसः नष्टम् अदर्शनं गतं मृतं निधनं गतम् अतिक्रान्तं गतं विलयमिति शेषः न अनुशोचन्ति यतः पण्डितानां मूर्खाणाञ्च अयं विशेषः प्रभेदः स्मृतः उक्तः ॥ ३६३ ॥

अशोच्यानीति। यो मूढ़ः इह जगति अशोच्यानि शोकानर्हाणि तानि नष्टादीनि भूतानि शोचति, सः दुःखे दुःखं लभते यतः द्वौ अनर्थौ नष्टादिकमेकं तदनुशोचनञ्चापरमिति द्वाविति भावः निषेवते अनुभवति ॥ ३६४ ॥

श्लेष्मेति। प्रेतः मृतः बान्धवैः मुक्तं परित्यक्तं श्लेष्माश्रु श्लेष्मयुक्तम् अश्रु नेत्रजलं भुङ्क्ते भक्षयति, यतः सः प्रेतः अवशः पराधीनः। तस्मात् न रोदितव्यं हि न रोदनं कर्त्तव्यमेव। शक्तितः शक्तिमनुसृत्य क्रियाः और्द्धदेहिकव्यापाराः श्राद्धतर्पणादिका इत्यर्थः कार्य्याः येन प्रेतस्तृप्तिं गच्छेदिति भावः ॥ ३६५ ॥

(न) मदात् गर्वात्।

(प) गजापसदस्य हस्त्यधमस्य।

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥३६६॥

काष्ठकूट आह, भगवति! सत्यमभिहितं भवत्या। उक्तञ्च,

स सुहृद् व्यसने यः स्यादन्यजात्युद्भवोऽपि सन्।
वृद्धौ सर्वोऽपि मित्रं स्यात् सर्वेषामिव देहिनाम् ॥३६७॥

स सुहृद्व्यसने यः स्यात् स पुत्रो यस्तु भक्तिमान्।
स भृत्यो यो विधेयज्ञः सा भार्या यत्र निर्वृतिः ॥३६८॥

तत्पश्य मे बुद्धिप्रभावम्, परं ममापि सुहृद्भूता वीणारवा नाम मक्षिका अस्ति। तत् तामाहूय आगच्छामि येन स दुरात्मा दुष्टगजो बध्यते। अथ असौ चटकया सह मक्षिकामासाद्य प्रोवाच, भद्रे! मम इष्टा (फ) इयं चटका केनचिद् दुष्टगजेन पराभूता अण्डस्फोटनेन (ब)। तत्तस्य बधोपायम् अनुतिष्ठतो मे साहाय्यं कर्त्तुमर्हसि। मक्षिकापि आह, भद्र! किमुच्यतेऽत्र विषये। उक्तञ्च,

पुनः प्रत्युपकाराय मित्राणां क्रियते प्रियम्।

---

आपदीति। येन जनेन आपदि अपकृतम् येन च विषमासु दशासु दुरवस्थासु इत्यर्थः हसितं तयोः उभयोः अपकृत्य अनिष्टं विधाय पुनरपि जातं नरं मृतमिति शेषः मन्ये ॥ ३६६ ॥

य इति। अन्यजात्युद्भवोऽपि सन् यः व्यसने विपदि स्यात् सहाय इति भावः सः सुहृत्। सर्वोऽपि जनः सर्वेषामिव देहिनां वृद्धौ अभ्युदये मित्रं स्यात् ॥ ३६७ ॥

स इति। यः व्यसने विपदि स्यात् सहाय इति शेषः सः सुहृत्। यस्तु भक्तिमान् स पुत्रः, यः विधेयज्ञः कार्य्यज्ञः, स भृत्यः, यत्र निर्वृतिः सुखं सा भार्य्या ॥ ३६८ ॥

(फ) इष्टा प्रिया।

(ब) अण्डस्फोटनेन डिम्बभङ्गेन।

यत् पुनर्मित्रमित्रस्य कार्य्यं मित्रैर्न किं कृतम् ॥३६९॥

सत्यमेतत्, परं ममापि भेको मेघनादो नाम मित्रं तिष्ठति, तमपि आहूय यथोचितं कुर्मः। उक्तञ्च,

हितैः साधुसमाचारैः शास्त्रज्ञैर्मतिशालिभिः।
कथञ्चिन्न विकल्पन्ते विद्वद्भिश्चिन्तिता नयाः ॥ ३७० ॥

अथ ते त्रयोऽपि गत्वा मेघनादस्य अग्रे समस्तमपि वृत्तान्तं निवेद्य तस्थुः। अथ स प्रोवाच, कियन्मात्रोऽसौ (भ) वराको (म) गजो महाजनस्य कुपितस्याग्रे। तन्मदीयो मन्त्रः कर्त्तव्यः। मक्षिके! त्वं गत्वा मध्याह्नसमये तस्य मदोद्धतस्य गजस्य कर्णे वीणारवसदृशं शब्दं कुरु, येन श्रवणसुखलालसो निमीलितनयनो भवति। ततश्च काष्ठकूटचञ्च्वा स्फोटितनयनोऽन्धीभूतः तृषार्त्तो मम गर्त्ततटाश्रितस्य सपरिकरस्य (य) शब्दं श्रुत्वा जलाशयं गत्वा समभ्येति। ततो गर्त्तमासाद्य पतिष्यति पञ्चत्वं यास्यति च इति। एवं समवाहः (र) कर्त्तव्यो यथा वैरसाधनं (ल) भवति। अथ तथा अनुष्ठिते स मत्तगजो मक्षिकागेयसुखात् निमीलितनेत्रः

---

पुनरिति। पुनः प्रत्युपकाराय मित्राणां प्रियं क्रियते लोकैरिति शेषः मित्रमित्रस्य यत् पुनः कार्य्यं तत् किं मित्रैः न कृतम्? अपितु कृतमेव इत्यर्थः ॥ ३६९ ॥

हितैरिति। हितैः हितार्थिभिः साधुसमाचारैः सदाचारैः शास्त्रज्ञैः मतिशालिभिः बुद्धिमद्भिः जनैः विद्वद्भिः चिन्तिताः मनःकल्पिता नयाः नीतिव्यापाराः कथञ्चित् न विकल्पन्ते नान्यथा क्रियन्ते ॥ ३७० ॥

(भ) कियन्मात्रः किंप्रमाणः अतितुच्छ इत्यर्थः।

(म) वराकः अगण्य इति भावः।

(य) सपरिकरस्य सपरिवारस्य।

(र) समवायः संयोगः कौशलमिति यावत्।

(ल) वैरसाधनं प्रतिहिंसासिद्धिः।

काष्ठकूटहृतचक्षुः मध्याह्नसमये भ्राम्यन् मण्डूकशब्दानुसारी गच्छन् महतीं गर्त्तामासाद्य पतितो मृतश्च। अतोऽहं ब्रवीमि, चटका काष्ठकूटेन इति।

टिट्टिभ आह, भद्रे! एवं भवतु, सुहृद्वर्गसमुदायेन समुद्रं शोषयिष्यामि इति निश्चित्य बकसारसमयूरादीन् समाहूय प्रोवाच, भोः! पराभूतोऽहं समुद्रेण अण्डकापहारेण तच्चिन्त्यतामस्य शोषणोपायः। ते सम्मन्त्र्य प्रोचुः, अशक्ता वयं समुद्रशोषणे, तत् किं वृथाप्रयासेन? उक्तञ्च,

अबलः प्रोन्नतं शत्रुं यो याति मदमोहितः।
युद्धार्थं स निवर्त्तेत शीर्णदन्तो गजो यथा॥ ३७१॥

तदस्माकं स्वामी वैनतेयः (व) अस्ति, तत्तस्मै सर्वमेतत् परिभवस्थानं निवेद्यतां येन स्वजातिपरिभवकुपितो वैरानृण्यं गच्छति। अथवा अत्रावलेपं (श) करिष्यति तथापि नास्ति वो दुःखम्। उक्तञ्च,

सुहृदि निरन्तरचित्ते गुणवति भृत्येऽनुवर्त्तिनि कलत्रे।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति॥३७२॥

तद्यामो वैनतेयसकाशं यतोऽसौ अस्माकं स्वामी। तथा

---

अबल इति। यः अबलः दुर्बलः मदमोहितः सन् प्रोन्नतं प्रबलं शत्रुं युद्धार्थं याति, स शीर्णदन्तो गजो यथा निवर्त्तेत पराभूत इति शेषः॥ ३७१॥

(व) वैनतेयः विनतानन्दनः गरुड़ः।

(श) अवलेपं गर्वम् अहं समुद्रमतितुच्छं योधयिष्यामीति तेन ममैव लाघवमित्येवंरूपमिति भावः।

सुहृदीति। निरन्तरचित्ते अभिन्नचेतसि सुहृदि, गुणवति भृत्ये, अनुवर्त्तिनि अनुरक्ते कलत्रे भार्य्यायां तथा शक्तिसमेते सामर्थ्यवति स्वामिनि दुःखं निवेद्य सुखी भवति। आर्य्यावृत्तम्॥ ३७२॥

अनुष्ठिते सर्वे ते पक्षिणो विषण्णवदना वाष्पपूरितदृशः वैनतेयसकाशमासाद्य करुणस्वरेण फूत्कर्त्तुमारब्धाः, अहो! अब्रह्मण्यमब्रह्मण्यम्! (ष) अधुना सदाचारस्य टिट्टिभस्य भवति नाथे सति, समुद्रेण अण्डानि अपहृतानि। तत् प्रनष्टमधुना पक्षिकुलम्। अन्येऽपि स्वेच्छया समुद्रेण व्यापादयिष्यन्ते, उक्तञ्च,

एकस्य कर्म संवीक्ष्य करोत्यन्योऽपि गर्हितम्।
गतानुगतिको लोको न लोकः पारमार्थिकः ॥३७३॥

तथाच, चाटुतस्करदुर्वृत्तैस्तथा साहसिकादिभिः।
पीड्यमानाः प्रजा रक्ष्याः कूटच्छद्मादिभिस्तथा ॥३७४॥

प्रजानां धर्मषड्भागो राज्ञो भवति रक्षितुः।
अधर्मादपि षड्भागो जायते यो न रक्षति ॥३७५॥

प्रजापीड़नसन्तापात् समुद्भूतो हुताशनः।

---

(ष) अब्रह्मण्यम्। यथा वयं न हन्यामहे तथा क्रियतामित्येवमार्त्तवचनमिति भावः। अब्रह्मण्यमवध्योक्तौ इत्यमरः।

एकस्येति। एकस्य जनस्य कर्म कार्य्यं संवीक्ष्य गर्हितमिति शेषः अन्योऽपि गर्हितं कर्म करोति यतो लोकः गतानुगतिकः गता अनुगतिः येन तादृशः अपरकार्य्यानुसारीत्यर्थः पारमार्थिकः परमार्थपरः लोकः नास्तीति शेषः। समुद्रो यदि ईदृशं दुष्कार्य्यं कृत्वापि निस्तारं गच्छति तदान्योऽपि तथा करिष्यति, न कोऽपि हिताहितं विवेचयिष्यति, ततः संसारस्य अतीवानिष्टं सम्पद्यते इति भावः॥३७३॥

चाट्विति। चाटुतस्करदुर्वृत्तैः चाटुकारचौरदुराचारैः साहसिकादिभिः दुर्जनैरिति भावः। कूटच्छद्मादिभिः पीड्यमानाः प्रजाः रक्ष्याः रक्षणीयाः यथा न हन्यन्ते तथा कार्य्या इत्यर्थः महद्भिरिति शेषः ॥ ३७४ ॥

प्रजानामिति। रक्षितुः दुर्जनेभ्य इति शेषः राज्ञः प्रजानां धर्मस्य षड्भागः षष्ठीभागः भवति लभ्य इति भावः। यः राजा न रक्षति प्रजा इति शेषः तस्य अधर्मादपि प्रजाकृतादिति शेषः षड्भागः षष्ठी भागो जायते ॥ ३७५ ॥

प्रजेति। प्रजानां पीड़नेन यः सन्तापः तासां मनसि यत् दुःखमित्यर्थः

राज्ञः श्रियं कुलं प्राणानादग्ध्वा विनिवर्त्तते ॥३७६॥
राजा बन्धुरबन्धूनां राजा चक्षुरचक्षुषाम्।
राजा पिता च माता च सर्वेषां न्यायवर्त्तिनाम् ॥३७७॥
फलार्थी पार्थिवो लोकान् पालयेद् यत्नमास्थितः।
दानमानादितोयेन मालाकारोऽङ्कुरानिव ॥३७८॥
यथा वीजाङ्कुरः सूक्ष्मः प्रयत्नेनाभिरक्षितः।
फलप्रदो भवेत् काले तद्वल्लोकः सुरक्षितः ॥३७९॥
हिरण्यधान्यरत्नानि यानानि विविधानि च।
तथान्यदपि यत्किञ्चित् प्रजाभ्यः स्यात् नृपस्य तत् ॥३८०॥

अथ एवं गरुड़ः समाकर्ण्य तद्दुःखदुःखितः कोपाविष्टश्च व्यचिन्तयत्, अहो! सत्यमुक्तमेतैः पक्षिभिः, तत् अद्य गत्वा तं समुद्रं शोषयामः। एवं चिन्तयतस्तस्य विष्णुदूतः समागत्य आह, भो गरुत्मन्! भगवता नारायणेन अहं तव पार्श्वे

---

तस्मात् समुद्भूतः सञ्जातः हुताशनः अग्निः राज्ञः श्रियं कुलं प्राणांश्च अदग्ध्वा न निवर्त्तते ॥ ३७६ ॥

राजेति। राजा अबन्धूनां बन्धुरहितानां बन्धुः। राजा अचक्षुषां चक्षुः। राजा सर्वेषां न्यायवर्त्तिनां पिता च माता च ॥ ३७७ ॥

फलार्थीति। फलार्थी फलम् ऐहिकं राजस्वादि, पारलौकिकं च तदर्थी पार्थिवः राजा यत्नमास्थितः सयत्नः सन् मालाकारः माली अङ्कुरानिव दानमानादि तोयमिव तेन लोकान् प्रजाः पालयेत् ॥ ३७८ ॥

यथेति। सूक्ष्मः अत्यल्पमात्रः वीजाङ्कुरः प्रयत्नेन अभिरक्षितः सन् यथा काले फलप्रदो भवेत्, तद्वत् तथा सुरक्षितो लोकः राज्ञः फलप्रदो भवतीति शेषः ॥ ३७९ ॥

हिरण्येति। हिरण्यानि स्वर्णानि धान्यानि रत्नानि विविधानि यानानि वाहनानि अश्वादीनि तथा अन्यदपि यत्किञ्चित् वस्तु नृपस्य प्रयोजनीयमिति शेषः तत् सर्वं प्रजाभ्यः स्यात् ॥ ३८० ॥

प्रेषितः, देवकार्य्याय भगवान् अमरावत्यां यास्यतीति, तत् सत्वरम् आगम्यताम्, तच्छ्रुत्वा गरुड़ः साभिमानं प्राह, भो दूत! किं मया कुभृत्येन भगवान् करिष्यति। तद्गत्वा तं वद यदन्यो भृत्यो वाहनाय अस्मत्स्थाने क्रियताम्। मदीयो नमस्कारो वाच्यो भगवतः। उक्तञ्च,

यो न वेत्ति गुणान् यस्य न तं सेवेत पण्डितः।
न हि तस्मात् फलं किञ्चित् सुकृष्टादूषरादिव ॥३८१॥

दूत आह, भो वैनतेय! कदाचिदपि भगवन्तं प्रति त्वया न एतदभिहितम् ईदृक्। तत् कथय किं ते भगवता अपमानस्थानं कृतम्? गरुड़ आह, भगवदाश्रयभूतेन समुद्रेण अस्मट्टिट्टिभाण्डानि अपहृतानि, तद्यदि तस्य निग्रहं न करोति तदहं भगवतो न भृत्य इत्येष निश्चयस्त्वया वाच्यः। तत् द्रुततरं गत्वा भवता भगवतः समीपे वक्तव्यम्। अथ दूतमुखेन प्रणयकुपितं वैनतेयं विज्ञाय भगवान् चिन्तयामास, अहो! स्थाने कोपो वैनतेयस्य, तत् स्वयमेव गत्वा सम्मानपुरःसरं तमानयामि। उक्तञ्च,

भक्तं शक्तं कुलीनञ्च न भृत्यमपमानयेत्।
पुत्रवल्लालयेन्नित्यं य इच्छेत् श्रियमात्मनः॥ ३८२ ॥

अन्यच्च, राजा तुष्टोऽपि भृत्यानामर्थमात्रं प्रयच्छति।

---

य इति। यः यस्य गुणान् न वेत्ति न जानाति, पण्डितः जनः तं न सेवेत सुकृष्टात् सुष्ठु कृतकर्षणात् ऊषरात् क्षारभूमेरिव तस्मात् जनात् किञ्चिदपि फलं न भवतीति शेषः॥ ३८१॥

भक्तमिति। यः आत्मनः श्रियम् इच्छेत् सः भक्तम् अनुरक्तं शक्तं समर्थं कुलीनं सत्कुलप्रसूतं भृत्यं न अपमानयेत् प्रत्युत नित्यं पुत्रवत् पुत्रमिव लालयेत् प्रतिपालयेत्॥ ३८२॥

ते तु सम्मानितास्तस्य प्राणैरप्युपकुर्वते ॥ ३८३ ॥

इत्येवं सम्प्रधार्य्य रुक्मपुरे (स) वैनतेयसकाशं सत्वरमगमत्, वैनतेयोऽपि गृहागतं भगवन्तमवलोक्य त्रपाधोमुखः प्रणम्योवाच, भगवन्! त्वदाश्रयोन्मत्तेन समुद्रेण मम भृत्यस्य अण्डानि अपहृत्य ममापमानं विहितम्। परं भगवल्लज्जया(ह) मया विलम्बितं नोचेत् एनमहं स्थलान्तम् (च) अद्यैव नयामि, यतः स्वामिभयात् शुनोऽपि प्रहारो न दीयते।

उक्तञ्च, येन स्याल्लघुता वाथ पीड़ा चित्ते प्रभोः क्वचित्।
प्राणत्यागेऽपि तत् कर्म न कुर्य्यात् कुलसेवकः ॥३८४॥

तत् श्रुत्वा भगवान् आह, भो वैनतेय! सत्यमभिहितं भवता। उक्तञ्च,

भृत्यापराधजो दण्डः स्वामिनो जायते यतः।
तेन लज्जापि तस्योत्था न भृत्यस्य तथा पुनः ॥३८५॥

तदागच्छ येन अण्डानि समुद्रात् आदाय टिट्टिभं सम्भा-

---

राजेति। राजा तुष्टोऽपि भृत्यानाम् अर्थमात्रं केवलम् अर्थमेव प्रयच्छति पुरस्करोति ते तु भृत्याः सम्मानिताः सन्तः प्राणैरपि तस्य राज्ञः उपकुर्वते उपकारं कुर्वन्ति ॥ ३८३ ॥

(स) रुक्मपुरे तदाख्ये गरुड़नगरे।

(ह) भगवल्लज्जया भगवदाश्रयोऽसाविति तदपमानेन भगवतो लज्जा स्यादिति भयेनेति भावः।

(च) स्थलान्तं स्थलावासम्।

येनेति। येन कार्य्येण प्रभोः चित्ते लघुता वा पीड़ा स्यात् कुलसेवकः प्राणात्ययेऽपि क्वचित् कुत्रापि तत् कर्म न कुर्य्यात् ॥ ३८४ ॥

भृत्येति। यतः यस्मात् कारणात् भृत्यापराधजः दण्डः स्वामिनः जायते भवति, तेन तस्य स्वामिनः यथा लज्जा उत्था उत्पन्ना भवति, तथा भृत्यस्य पुनर्न लज्जेति शेषः ॥ ३८५ ॥

वयावः अमरावतीञ्च गच्छावः। तथानुष्ठिते समुद्रो भगवता निर्भर्त्स्य आग्नेयं शरं सन्धाय अभिहितः, भो दुरात्मन्! दीयन्तां टिट्टिभाण्डानि नो चेत् स्थलतां त्वां नयामि। ततः समुद्रेण सभयेन टिट्टिभाण्डानि तानि प्रदत्तानि, टिट्टिभेनापि भार्य्यायै समर्पितानि। अतोऽहं ब्रवीमि, शत्रोर्बलमविज्ञायेति।

तस्मात् पुरुषेण उद्यमो न त्याज्यः। तदाकर्ण्य सञ्जीवकस्तमेव भूयोऽपि पप्रच्छ, भो मित्र! कथं ज्ञेयो मया असौ दुष्टबुद्धिरिति। इयन्तं कालं यावदुत्तरोत्तरस्नेहेन प्रसादेन च अहं दृष्टो न कदाचित् तद्विकृतिर्दृष्टा, तत् कथ्यतां येनाहम् आत्मरक्षार्थं तद्वधाय उद्यमं करोमि। दमनक आह, भद्र! किमत्र ज्ञेयम्? एष ते प्रत्ययः, यदि रक्तनेत्रस्त्रिशिखां भ्रूकुटिं दधानः सृक्कणी परिलेलिहत् त्वां दृष्ट्वा भवति तद्दुष्टबुद्धिरन्यथा सुप्रसादश्चेति। तदाज्ञापय माम्, स्वाश्रयं प्रति गच्छामि। त्वया च यथा अयं मन्त्रभेदो न भवति तथा कार्य्यम्। यदि निशामुखं प्राप्य गन्तुं शक्नोषि तद्देशत्यागः कार्य्यः। यतः,

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ३८६॥

---

त्यजेदिति। कुलस्य अर्थे वंशरक्षार्थमित्यर्थः एकं त्यजेत् यदि एकस्य त्यागे वंशरक्षा स्यात् तदा एकस्य त्यागः कार्य्य इति भावः। ग्रामस्यार्थे ग्रामरक्षार्थमित्यर्थः कुलं वंशं त्यजेत् यदि एकवंशत्यागे ग्राम्याणां सर्वेषां रक्षा स्यात् तदा तस्यापि त्यागः कार्य्य इति भावः। जनपदस्यार्थे देशरक्षार्थमित्यर्थः ग्रामं त्यजेत् यदि ग्रामत्यागे देशरक्षा स्यात् तदा तस्य त्यागः कार्य्य इति भावः आत्मार्थे स्वरक्षार्थं पृथिवीं त्यजेत् पृथिवीत्यागेऽपि आत्मरक्षा स्यात् तदा तदपि कार्य्यमिति भावः॥ ३८६॥

आपदर्थे धनं रक्षेद्दारान् रक्षेत् धनैरपि ।
आत्मानं सततं रक्षेत् दारैरपि धनैरपि ॥ ३८७ ॥

बलवताभिभूतस्य (क) विदेशगमनं तदनुप्रवेशो वा नीतिः। तद्देशत्यागः (ख) कार्य्यः। अथवा आत्मा सामादिभिरुपायैः अभिरक्षणीयः। उक्तञ्च,

अपि पुत्रकलत्रैर्वा प्राणान् रक्षेत पण्डितः।
विद्यमानैर्यतस्तैः स्यात् सर्वं भूयोऽपि देहिनाम् ॥ ३८८ ॥

तथा च, येन केनाप्युपायेन शुभेनाप्यशुभेन वा ।
उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत् ॥ ३८९ ॥

यो मायां कुरुते मूढः प्राणत्यागे धनादिषु ।
तस्य प्राणाः प्रणश्यन्ति तैर्नष्टैर्नष्टमेव तत् ॥ ३९० ॥

एवमभिधाय दमनकः करटकसकाशमगमत्। करट-

---

आपदर्थे इति। आपदर्थे विपन्निवारणार्थं धनं रक्षेत्, धनैरपि दारान् स्त्रियः रक्षेत्, दारैरपि धनैरपि आत्मानं सततं रक्षेत् ॥ ३८७ ॥

(क) अभिभूतस्य आक्रान्तस्य। तदनुप्रवेशः तस्य बलवतः आश्रयणम्।

(ख) तद्देशत्यागः तस्य देशत्यागः। सामादिभिः सामदानभेददण्डरूपैरित्यर्थः। तत्र साम सन्धिः, दानं भूहिरण्यादिसमर्पणम्। भेदः उपजापः शत्रुणा सह तदमात्यमित्रादेर्मनोभङ्गकरणम्। सर्वाभावे दण्डः युद्धम्।

अपीति। पण्डितो जनः पुत्रकलत्रैरपि प्राणान् रक्षेत, यतः तैः प्राणैः विद्यमानैः तिष्ठद्भिः भूयोऽपि पुनरपि देहिनां सर्वं पुत्रकलत्रादिकमित्यर्थः स्यात् ॥ ३८८ ॥

येनेति। येन केनापि शुभेन अशुभेन वा उपायेन दीनं विपन्नम् आत्मानम् उद्धरेत् रक्षेत्। समर्थः शक्तिमान् सन् धर्ममाचरेत् अनुतिष्ठेत् ॥ ३८९ ॥

य इति। यः मूढः प्राणत्यागे अपिरत्राध्याहार्य्यः धनादिषु मायां ममतां करोति, तस्य प्राणाः प्रणश्यन्ति, तैः प्राणैः नष्टैः सद्भिरिति शेषः तत्सर्वं धनादिकं नष्टमेव भवतीति शेषः ॥ ३९० ॥

कोऽपि तमायान्तं दृष्ट्वा प्रोवाच, भद्र! किं कृतं तत्रभवता? दमनक आह, मया यावत् नीतिवीजनिर्वापणं (ग) कृतं परतो दैवविहितायत्तम् (घ)। उक्तञ्च यतः,

परान्मुखेऽपि दैवेऽत्र कृत्यं कार्य्यं विपश्चिता।
आत्मदोषविनाशाय स्वचित्तस्तम्भनाय च॥ ३९१॥

तथा च, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः?॥३९२॥

करटक आह, तत् कथय कीदृक् त्वया नीतिवीजं निर्वापितम्। सोऽब्रवीत्, मया अन्योन्यं ताभ्यां मिथ्याप्रजल्पनेन भेदः (ङ) तथा विहितो यथा भूयोऽपि मन्त्रयन्तौ एकस्थानस्थितौ न द्रक्ष्यसि। करटक आह, अहो! न युक्तं भवता विहितं यत्परस्परं तौ स्नेहार्द्रहृदयौ सुखाश्रयौ कोपसागरे प्रक्षिप्तौ। उक्तञ्च,

---

(ग) नीतिवीजनिर्वपणं नीतयः वीजानीव तेषां निर्वपणं सम्यक् वपनम्।

(घ) दैवेति। दैवेन विहितं कृतम् आयत्तम् अधीनम्। अतःपरं तत् दैवाधीनमिति भावः।

पराङ्मुखे इति। अत्र संसारे दैवे पराङ्मुखे प्रतिकूलेऽपि विपश्चिता विदुषा जनेन आत्मदोषविनाशाय स्वदोषक्षालनाय स्वस्य चित्तस्य मनसः स्तम्भनाय प्रबोधनाय च कृत्यं पुरुषकारः कार्य्यं यत्नः कर्त्तव्य इत्यर्थः॥ ३९१॥

उद्योगिनमिति। लक्ष्मीः उद्योगिनं पुरुषसिंहम् उपैति प्राप्नोति। कापुरुषाः दैवं दैवम् इति वदन्ति, अतः दैवं निहत्य अगणयित्वा आत्मशक्त्या स्वसामर्थ्येन पौरुषं पुरुषकारं कुरु, यत्ने कृते सति यदि न सिध्यति कार्य्यमिति शेषः तदा अत्र संसारे को दोषः? न कोऽपि इत्यर्थः। वसन्ततिलकं वृत्तम्॥ ३९२॥

(ङ) मिथ्याप्रजल्पनेन मृषावचनेन। भेदः मनोभङ्गः।

अविरुद्धं सुखस्थं यो दुःखमार्गे नियोजयेत्।
जन्मजन्मान्तरे दुःखी स नरः स्यादसंशयम् ॥३९३॥

अपरं त्वं यद्वेदमात्रेणापि तुष्टस्तदपि अयुक्तं यतः सर्वोऽपि जनो विरूपकरणे (च) समर्थो भवति नोपकर्त्तुम्। उक्तञ्च,

घातयितुमेव नीचः परकार्य्यं वेत्ति न प्रसाधयितुम्।
पातयितुमस्ति शक्तिर्वायोर्वृक्षं नचोन्नमयितुम् ॥३९४॥

दमनक आह, अनभिज्ञो भवान् नीतिशास्त्रस्य, तेन एतद् ब्रवीषि। उक्तञ्च यतः,

जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्।
महाबलोऽपि तेनैव वृद्धिं प्राप्य स हन्यते ॥ ३९५ ॥

तच्छत्रुभूतोऽयमस्माकं मन्त्रिपदापहरणात्। उक्तञ्च,

पितृपैतामहं स्थानं यो यस्यात्र जिगीषते।
स तस्य सहजः शत्रुरुच्छेद्योऽपि प्रिये स्थितः ॥३९६॥

---

अविरुद्धमिति। यः अविरुद्धम् अविरोधिनं सुखस्थं सुखिनं जनं दुःखमार्गे नियोजयेत् पातयेत्, स नरः जन्मजन्मान्तरे प्रतिजन्म इत्यर्थः असंशयं दुःखी स्यात् ॥ ३९३ ॥.

(च) विरूपकरणे विरुद्धाचरणे।

घातयितुमिति। नीचः जनः परकार्य्यं घातयितुं नाशयितुमेव वेत्ति जानाति, न प्रसाधयितुं सम्पादयितुम्। वृक्षं पातयितुं वायोः शक्तिरस्ति, उन्नमयितुम् उत्तोलयितुं न। आर्य्यावृत्तम् ॥ ३९४ ॥

जातमात्रमिति। यः जातमात्रं शत्रुं व्याधिञ्च न प्रशमं नयेत् न नाशयेद् इत्यर्थः स महाबलोऽपि तेनैव शत्रुणा व्याधिना वा वृद्धिं प्राप्य हन्यते विनाश्यते ॥ ३९५ ॥

पित्विति। अत्र संसारे यः यस्य पितृपैतामहं स्थानं पदं जिगीषते जेतुमिच्छति जिघृक्षति इत्यर्थः स तस्य सहजः स्वाभाविकः शत्रुः, अतः प्रिये प्रियकार्य्ये स्थितोऽपि स उच्छेद्यः ॥ ३९६ ॥

तत् मया स उदासीनतया समानीतोऽभयप्रदानेन यावत् तावदहमपि तेन साचिव्यात् प्रच्यावितः (छ)। अथवा साधु इदमुच्यते,

दद्यात्साधुर्यदि निजपदे दुर्जनाय प्रवेशं
तन्नाशाय प्रभवति ततो वाञ्छमानः स्वयं सः।
तस्माद्देयो विपुलमतिभिर्नावकाशोऽधमानां
जारोऽपि स्याद् गृहपतिरिति श्रूयते वाक्यतोऽत्र ॥२९७॥

तेन मया तस्योपरि वधोपाय एष विरच्यते। देशत्यागाय वा भविष्यति। तच्च त्वां मुक्त्वा अन्यो न ज्ञास्यति, तद् युक्तम् एतत् स्वार्थायानुष्ठितम्। उक्तञ्च यतः,

निस्त्रिंशं हृदयं कृत्वा वाणीं क्षुरसमोपमाम्।
विकल्पोऽत्र न कर्त्तव्यो हन्यात्तत्रापकारिणम् ॥२९८॥

अपरं मृतोऽपि अस्माकं भोज्यो भविष्यति, तदेकं तावद्वैरसाधनम्। अपरं साचिव्यञ्च भविष्यति तृप्तिश्चेति (ज)। तद्गुणत्रयेऽस्मिन् उपस्थिते कस्मान्मां दूषयसि त्वं जाड्यभावात् (झ)। उक्तञ्च,

---

(छ) साचिव्यात् मन्त्रिपदात् प्रच्यावितः प्रभ्रंशितः।

दद्यादिति। साधुर्जनः यदि दुर्जनाय निजपदे प्रवेशं दद्यात् ततस्तदा सः स्वयं तस्य साधोः नाशाय वाञ्छमानः भवति इच्छति इत्यर्थः। तस्मात् विपुलमतिभिः महामतिभिः अधमानां दुर्जनानाम् अवकाशो न देयः। अत्र संसारे जारोऽपि उपपतिरपि गृहपतिः स्यात् इति वाक्यतः श्रूयते। मन्दाक्रान्तावृत्तं, मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ गयुग्ममिति लक्षणात् ॥ २९७ ॥

निस्त्रिंशमिति। हृदयं निस्त्रिंशं वाणीं क्षुरसमोपमां क्षुरसदृशीं कृत्वा तत्र अपकारिणं हन्यात् अत्र विकल्पो न कर्त्तव्यः ॥ २९८ ॥

(ज) वैरसाधनं शत्रोः प्रतिहिंसनम्। साचिव्यं मन्त्रिपदम्। तृप्तिः आहारपरितोषः।

(झ) जाड्यभावात् मौर्ख्यात्।

परस्य पीड़नं कुर्वन् स्वार्थसिद्धिं च पण्डितः ।
मूढ़बुद्धिर्न भक्षेत वने चतुरको यथा ॥ ३९९ ॥

करटक आह, कथमेतत् ? स आह,

## कथा १६ ।

अस्ति कस्मिंश्चिद्वनोद्देशे वज्रदंष्ट्रो नाम सिंहः। तस्य चतुरकक्रव्यमुखनामानौ शृगालवृकौ (ञ) भृत्यभूतौ सदैवानुगतौ तत्रैव वने प्रतिवसतः। अथ अन्यदिने सिंहेन कदाचित् आसन्नप्रसवा प्रसववेदनया स्वयूथाद् भ्रष्टा उष्ट्री उपविष्टा कस्मिंश्चिद्वनगहने समासादिता। अथ तां व्यापाद्य यावदुदरं स्फोटयति, तावज्जीवल्लघुदासेरकशिशुर्निष्क्रान्तः (ट)। सिंहोऽपि दासेरक्याः पिशितेन (ठ) सपरिवारः परां तृप्तिमुपागतः परं स्नेहात् बालदासेरकं त्यक्तं (ड) गृहमानीय इदमुवाच, भद्र ! न तेऽस्ति मृत्योर्भयं मत्तो न अन्यस्मादपि। ततः स्वेच्छया अत्र वने भ्राम्यतामिति। यतस्ते शङ्कुसदृशौ (ढ) कर्णौ ततः शङ्कुकर्णो नाम भविष्यति। एवमनुष्ठिते चत्वारोऽपि ते एकस्थाने विहारिणः परस्परमनेकप्रकार-

---

परस्येति। पण्डितो जनः वने चतुरको यथा परस्य शत्रोः पीड़नं स्वार्थसिद्धिंच कुर्वन् भक्षेत भुञ्जीयात्, मूढ़बुद्धिर्न भक्षेत भक्षयितुं न शक्नुयादिति भावः ॥ ३९९ ॥

(ञ) शृगालवृकौ जम्बूकद्वीपिनौ।

(ट) स्फोटयति विदारयति। जीवदिति जीवन् लघुः क्षुद्रकायः दासेरकशिशुः उष्ट्रशावकः।

(ठ) दासेरक्याः उष्ट्र्याः। पिशितेन मांसेन।

(ड) त्यक्तम् अव्यवहारादिति शेषः।

(ढ) शङ्कुसदृशौ कीलोपमौ।

गोष्ठीसुखमनुभवन्तस्तिष्ठन्ति। शङ्कुकर्णोऽपि यौवनपदवीम् आरूढः क्षणमपि न तं सिंहं मुञ्चति। अथ कदाचित् वज्रदंष्ट्रस्य केनचिदन्येन मत्तगजेन सह युद्धम् अभवत्। तेन मदवीर्य्यात् स दन्तप्रहारैस्तथा क्षतशरीरो विहितो यथा प्रचलितुं न शक्नोति। तदा क्षुत्क्षामकण्ठः (ण) तान् प्रोवाच, भो! अन्विष्यतां किञ्चित्सत्त्वं येन अहमेवं स्थितोऽपि तं व्यापाद्य आत्मनो युष्माकञ्च क्षुत्प्रणाशं करोमि। तच्छ्रुत्वा ते त्रयोऽपि वने सन्ध्याकालं यावद्भ्रान्ताः परं न किञ्चित्सत्त्वमासादितम्। अथ चतुरकः चिन्तयामास, यदि शङ्कुकर्णोऽयं व्यापाद्यते ततः सर्वेषां कतिचिद्दिनानि तृप्तिर्भवति परं नैनं स्वामी मित्रत्वात् आश्रयसमाश्रितत्वात् (त) च विनाशयिष्यति। अथवा बुद्धिप्रभावेण स्वामिनं प्रतिबोध्य तथा करिष्ये यथा व्यापादयिष्यति। उक्तञ्च,

अबध्यं चाथवागम्यमकृत्यं नास्ति किञ्चन।
लोके बुद्धिमतां बुद्धेस्तस्मात्तां विनियोजयेत् ॥४००॥

एवं विचिन्त्य शङ्कुकर्णमिदमाह, भोः शङ्कुकर्ण! स्वामी तावत्पथ्यं विना क्षुधया परिपीड्यते। स्वाम्यभावात् अस्माकम् अपि ध्रुवं विनाश एव। ततो वाक्यं किञ्चित् स्वाम्यर्थे वदिष्यामि। तत् श्रूयताम्। शङ्कुकर्ण आह, भो! शीघ्रं निवेद्यतां येन ते वचनं शीघ्रं निर्विकल्पं (थ) करोमि। अपरं

---

(ण) क्षुत्क्षामकण्ठः क्षुधया क्षीणकण्ठस्वर इत्यर्थः।

(त) आश्रयसमाश्रितत्वात् गृहागतत्वात् शरणागतत्वाद्वा।

अबध्यमिति। लोके जगति किञ्चन वस्तु बुद्धिमतां बुद्धेः अबध्यम् अगम्यं वा अकृत्यं नास्ति, तस्मात् तां बुद्धिं विनियोजयेत् विशेषेण स्वव्यापारे नियुक्तां कुर्य्यादित्यर्थः॥ ४००॥

(थ) निर्विकल्पं निःसन्देहम्।

स्वामिनो हिते कृते मया सुकृतशतं (द) कृतं भविष्यति। अथ चतुरक आह, भो भद्र! आत्मशरीरं द्विगुणलाभेन स्वामिने प्रयच्छ, येन ते द्विगुणं शरीरं भवति, स्वामिनः पुनः प्राणयात्रा भवति। तदाकर्ण्य शङ्कुकर्णः प्राह, भद्र! यदि एवं तन्मदीयप्रयोजनमेतत् उच्यताम्। स्वाम्यर्थः क्रियतामिति, परमत्र धर्मः प्रतिभूः (ध) इति ते विचिन्त्य सर्वे सिंहसकाशम् आजग्मुः। ततः चतुरक आह, देव! न किञ्चित् सत्त्वं प्राप्तम्। भगवान् आदित्योऽपि अस्तङ्गतः। तद्यदि स्वामी द्विगुणं शरीरं प्रयच्छति ततः शङ्कुकर्णोऽयं द्विगुणवृद्ध्या स्वशरीरं प्रयच्छति धर्मप्रतिभुवा। सिंह आह, भो! यदि एवं तत् सुन्दरतरम्, व्यवहारस्य (न) अस्य धर्मः प्रतिभूः क्रियतामिति। अथ सिंहवचनानन्तरं वृकशृगालाभ्यां विदारितोभयकुक्षिः शङ्कुकर्णः पञ्चत्वमुपागतः। अथ वज्रदंष्ट्रः चतुरकम् आह, भोः चतुरक! यावदहं नदीं गत्वा स्नानं देवतार्चनविधिं कृत्वा आगच्छामि, तावत् त्वया अत्र अप्रमत्तेन (प) भाव्यमित्युक्त्वा नद्यां गतः। अथ तस्मिन् गते चतुरकः चिन्तयामास, कथं मम एकाकिनो भोज्योऽयमुष्ट्रो भविष्यतीति विचिन्त्य क्रव्यमुखमाह, भोः क्रव्यमुख! क्षुधालुर्भवान्, तत्यावदसौ स्वामी न आगच्छति तावत् त्वमस्य उष्ट्रस्य मांसं भक्षय। अहं त्वां स्वामिनो निर्दोषं प्रतिपादयिष्यामि। सोऽपि तच्छ्रुत्वा यावत् किञ्चिन्मांसम् आस्वादयति

---

(द) सुकृतशतं पुण्यशतम्।
(ध) प्रतिभूः प्रत्ययहेतुः।
(न) व्यवहारस्य कर्मणः।
(प) अप्रमत्तेन अवहितेन।

तावत् चतुरकेणोक्तम्, भोः क्रव्यमुख। समागच्छति स्वामी, तत् त्यक्त्वा एनं दूरे तिष्ठ येनास्य भक्षणं न विकल्पयति (प)। तथानुष्ठिते सिंहः समायातो यावदुष्ट्रं पश्यति तावत् रिक्तीकृतहृदयो (फ) दासेरकः। ततो भ्रूकुटिं कृत्वा परुषतरमाह, (ब) अहो! केनैष उष्ट्र उच्छिष्टतां नीतो येन तमपि व्यापादयामि। एवमभिहिते क्रव्यमुखः चतुरकमुखम् अवलोकयति, (भ) किल तद्वद किञ्चिद् येन मम शान्तिर्भवति। अथ चतुरको विहस्योवाच, भो! माम् अनादृत्य (म) पिशितं भक्षयित्वा अधुना मन्मुखमवलोकयसि। तत् आस्वादय अस्य दुर्णयतरोः फलमिति। तदाकर्ण्य क्रव्यमुखो जीवनाशभयाद् दूरदेशं गतः (य)। एतस्मिन् अन्तरे तेन मार्गेण दासेरकसार्थो भाराक्रान्तः (र) समायातः। तस्याग्रसरोष्ट्रस्य (ल) कण्ठे महती घण्टा बद्धा। तस्याः शब्दं दूरतोऽपि आकर्ण्य सिंहो जम्बूकमाह, भद्र! ज्ञायतां किमेष रौद्रः (व) शब्दः श्रूयतेऽश्रुतपूर्वः। तच्छ्रुत्वा चतुरकः किञ्चिद्वनान्तरं गत्वा

---

(प) विकल्पयति सन्दिह्यति स्वामीति शेषः त्वया अत्र स्थिते स्वामी सन्देहं करोतीति भावः।

(फ) रिक्तीकृतहृदयः शून्यीकृतोरःस्थलः द्वीपिनेति भावः।

(ब) परुषतरम् अतिनिष्ठुरम्।

(भ) क्रव्यमुखः तदाख्यः शार्दूलः। चतुरकस्य तदाख्यस्य शृगालस्य मुखम्।

(म) अनादृत्य अगणयित्वा।

(य) दूरदेशं गतः पलायित इत्यर्थः।

(र) दासेरकसार्थः उष्ट्रयूथं भाराक्रान्तः भारवहनेनातिश्रान्तः।

(ल) तस्य उष्ट्रसार्थस्य अग्रसरः अग्रवर्त्ती यः उष्ट्रः तस्य।

(व) रौद्रः भयङ्करः।

सत्वरमभ्युपेत्य प्रोवाच, स्वामिन्! गम्यतां गम्यतां यदि शक्नोषि गन्तुम्। सोऽब्रवीत्, भद्र! किमेवं मां व्याकुलयसि (श), तत् कथय किमेतदिति। चतुरक आह, स्वामिन्! एष धर्म्मराजः (ष) तवोपरि कुपितः, यदनेन अकाले दासेरकोऽयं मदीयो व्यापादितः (स) तत्सहस्रगुणमुष्ट्रमस्य सकाशाद् ग्रहीष्यामीति निश्चित्य बृहन्मानम् (ह) आदाय अग्रेसरस्य उष्ट्रस्य ग्रीवायां घण्टां बद्ध्वा वध्यदासेरकसक्तान् (च) अपि पितृपितामहान् आदाय वैरनिर्यातनार्थमायात एव। सिंहोऽपि तच्छ्रुत्वा सर्वतो दूरादेव अवलोक्य मृतमुष्ट्रं परित्यज्य प्राणभयात् प्रनष्टः। चतुरकोऽपि शनैः शनैः तस्य उष्ट्रस्य मांसं भक्षयामास। अतोऽहं ब्रवीमि, परस्य पीड़नं कुर्वन्निति।

अथ दमनके गते सञ्जीवकश्चिन्तयामास, अहो! किमेतन्मया कृतं, यत् शष्पादोऽपि मांसाशिनस्तस्यानुगः (क) संवृत्तः। अथवा साधु इदमुच्यते,

अगम्यान् यः पुमान् याति असेव्यांश्च निषेवते।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ ४०१॥

---

(श) व्याकुलयसि व्याकुलं करोषि सन्देहयसि इत्यर्थः।

(ष) धर्मराजः यमः धर्मदेवो वा।

(स) व्यापादितः निहतः।

(ह) बृहन्मानं महापरिमाणम्।

(च) वध्यदासेरकसक्तान् विनाशितोष्ट्रसम्बन्धिन इत्यर्थः।

(क) शष्पादः तृणभोजी। मांसाशिनः तस्य पिङ्गलकस्य अनुगः अनुचरः संवृत्तः अस्मीति शेषः।

अगम्यानिति। यः पुमान् अगम्यान् याति गच्छति असेव्यांश्च निषेवते भजते, अश्वतरी गर्भं यथा सः मृत्युम् उपगृह्णाति प्राप्नोति॥ ४०१॥

तत् किं करोमि क्व गच्छामि, कथं मे शान्तिर्भविष्यति, अथवा तमेव पिङ्गलकं गच्छामि, कदाचित् मां शरणागतं रक्षति प्राणैर्न वियोजयति। यत उक्तञ्च,

धर्म्मार्थं यततामपीह विपदो दैवाद् यदि स्युः क्वचित्
तत्तासामुपशान्तये सुमतिभिः कार्य्यो विशेषान्नयः।
लोके ख्यातिमुपागतात्र सकले लोकोक्तिरेषा यतो
दग्धानां किल वह्निना हितकरः सेकोऽपि तस्योद्भवः॥४०२

तथाच, लोकेऽथवा तनुभृतां निजकर्मपाकं
नित्यं समाश्रितवतां सुहितक्रियाणाम्।
भावार्जितं शुभमथाप्यशुभं निकामं
यद्भावि तद्भवति नात्र विचारहेतुः॥ ४०३॥

अपरं च अन्यत्र गतस्यापि मे कस्यचित् दुष्टसत्त्वस्य मांसाशिनः सकाशात् मृत्युर्भविष्यति, तद्वरं सिंहात्। उक्तञ्च,

---

धर्मार्थमिति। इह जगति धर्मार्थं यततां चेष्टमानानाम् अपि यदि क्वचित् दैवात् विपदः स्युः भवेयुः, तत् तदा तासां विपदामुपशान्तये सुमतिभिः सुबुद्धिभिः पुरुषैः विशेषात् नयः नीतिः उपाय इत्यर्थः कार्य्यः। यतः तत्र सकले सर्वस्मिन् लोके जगति एषा लोकोक्तिः लोकशब्दः ख्यातिमुपागता विख्याता इत्यर्थः वह्निना अग्निना दग्धानां वस्तूनां तस्य वह्नेः उद्भवः जातः सेकः हितकरः उपकारी इत्यर्थः यथा दग्धवस्तूनामुपरि अग्नितापो हितकरः, तथा मत्प्राणदण्डनोद्यतसमीपे मम शरणागतभावेनाश्रयणं श्रेयस्करमिति भावः॥ ४०२॥

लोके इति। अथवा लोके जगति निजकर्मपाकं स्वकर्मजनितां गतिमित्यर्थः समाश्रितवतां सुविहिता क्रिया स्वकर्त्तव्यं यैः तथोक्तानां यथायथं स्वं कर्त्तव्यमुपचरतामित्यर्थः भावार्जितं स्वकर्मोपार्जितं शुभम् अशुभं वा यत् निकामं नित्यं भावि अवश्यम्भावि इत्यर्थः तत् भवति, अत्र न विचारहेतुः अस्ति कश्चिदिति शेषः॥ ४०३॥

महद्भिः स्पर्द्धमानस्य विपदेव गरीयसी ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥४०४॥

तथाच, महतोऽपि चयं लब्ध्वा श्लाघ्यं नीचोऽपि गच्छति ।
दानार्थी मधुपो यद्वद्गजकर्णसमाहतः ॥ ४०५ ॥

एवं निश्चित्य स स्खलितगतिर्मन्दं मन्दं गत्वा सिंहाश्रयं पश्यन् अपठत्, अहो साधु इदमुच्यते,

अन्तर्लीनभुजङ्गमं गृहमिव व्यालाकुलं वा वनं
ग्राहाकीर्णमिवाभिरामकमलच्छायासनाथं सरः ।
नानादुष्टजनैरसत्यवचनासक्तैरनार्य्यैर्वृतं
दुःखेन प्रतिगम्यते प्रचकितैः राज्ञां गृहं वार्धिवत् ॥४०६॥

एवं पठन् दमनकोक्ताकारं पिङ्गलकं दृष्ट्वा प्रचकितः संवृतशरीरो दूरतरं प्रणामकृतिं (ख) विनापि उपविष्टः, पिङ्गलकोऽपि तथाविधं तं विलोक्य दमनकवाक्यं श्रद्दधानः

---

महद्भिरिति । महद्भिः जनैः स्पर्द्धमानस्य स्पर्द्धां कुर्वतः जनस्य विपत् गरीयसी श्रेयसी एव, गिरिविदारणे कृते इति शेषः नागानां हस्तिनां दन्तभङ्गः अपि श्लाघ्यः प्रशस्तः ॥ ४०४ ॥

महत इति । नीचोऽपि क्षुद्रोऽपि जनः, दानार्थी गजमदार्थी अतएव गजकर्णसमाहतः हस्तिकर्णतालताड़ितः मधुपो यद्वत् मधुकर इव महतः जनात् चयं लब्ध्वापि श्लाघ्यं श्लाघनीयत्वं, भावे यप्रत्ययः । गच्छति प्राप्नोति ॥ ४०५ ॥

अन्तरिति । अन्तर्लीनः अभ्यन्तरं गतः भुजङ्गमो यस्य तादृशं गृहमिव, व्यालैः हिंस्रैः श्वापदैः आकुलं व्याप्तं वनं वा वनमिव, ग्राहैः महाजलचरैः आकीर्णं व्याप्तम् अभिरामा, शोभना कमलानां या छाया कान्तिः, तत्सनाथं तद्युक्तं सर इव नानादुष्टजनैः विविधैर्दुर्जनैः असत्यवचनासक्तैः मृषावादरतैः अनार्य्यैः असाधुभिः वृतं पूर्णं राज्ञां गृहं वार्धिवत् वारिधिरिव प्रचकितैः प्रकर्षेण भीतैः सद्भिः जनैरिति शेषः दुःखेन प्रतिगम्यते । शार्दूलविक्रीड़ितं वृत्तम् ॥ ४०६ ॥

(ख) प्रणामकृतिं प्रणामक्रियाम् ।

कोपात् तस्योपरि पपात। अथ सञ्जीवकः खरनखरविकर्त्तितपृष्ठः (ग) शृङ्गाभ्यां तदुदरमुल्लिख्य (घ) कथमपि तस्मात् अपेतः (ङ) शृङ्गाभ्यां हन्तुमिच्छन् युद्धायावस्थितः। अथ द्वौ अपि तौ पुष्पितपलाशप्रतिमौ (च) परस्परवधकाङ्क्षिणौ दृष्ट्वा करटको दमनकमाह, भो मूढ़मते! अनयोर्विरोधं वितन्वता (छ) त्वया साधु न कृतम् न च त्वं नीतितत्त्वं (ज) वेत्सि। नीतिविद्भिरुक्तञ्च,

कार्य्याण्युत्तमदण्डसाहसफलान्यायाससाध्यानि ये
प्रीत्या संशमयन्ति नीतिकुशलाः साम्नैव ते मन्त्रिणः।
निःसाराल्पफलानि ये त्वविधिना वाञ्छन्ति दण्डोद्यमैः
तेषां दुर्णयचेष्टितैर्नरपतेरारोप्यते श्रीस्तुलाम् ॥४०७॥

तद्यदि स्वाम्यभिघातो भविष्यति तत् किं त्वदीयमन्त्र-

---

(ग) खरेति। खरैः तीक्ष्णैः नखरैः विकर्त्तितं विशेषेण छिन्नं पृष्ठं यस्य तथाभूतः।

(घ) तदुदरं तस्य सिंहस्य उदरम् उल्लिख्य उद्घृष्य।

(ङ) अपेतः अपसृतः।

(च) पुष्पितेति। विकसितपलाशतरुसदृशौ रुधिरस्रावादिति भावः।

(छ) वितन्वता विस्तारयता।

(ज) नीतितत्त्वं नीतिशास्त्रस्य तत्त्वं याथार्थ्यम्।

कार्य्याणीति। ये नीतिकुशलाः नीतिज्ञाः प्रीत्या साम्नैव आयाससाध्यानि कष्टसाध्यानि उत्तमदण्डः महासंग्राम एव साहसफलं येषां तानि कार्य्याणि संशमयन्ति सम्यक् शान्तिं नयन्ति ते मन्त्रिणः मन्त्रिपदाधिकारिण इत्यर्थः। ये तु अविधिना अन्यायेन दण्डोद्यमैः युद्धोद्योगैः निःसाराल्पफलानि निःसाराणि असाराणि अल्पफलानि वाञ्छन्ति, तेषां दुर्णयचेष्टितैः नरपतेः श्रीः राजलक्ष्मीः तुलां सन्देहम् आरोप्यते नीयते। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४०७ ॥

बुद्ध्या क्रियते। अथ सञ्जीवको न बध्यते तथापि अभव्यं (झ) यतः प्राणसन्देहात् तस्य च बधः, तन्मूढ़ ! कथं त्वं मन्त्रिपदम् अभिलषसि, सामसिद्धिं न वेत्सि, तद् वृथा मनरथोऽयं ते दण्डरुचेः (ञ)। उक्तञ्च,

सामादिदण्डपर्य्यन्तो नयः प्रोक्तः स्वयम्भुवा।
तेषां दण्डस्तु पापीयांस्तं पश्चाद्विनियोजयेत् ॥४०८॥

तथाच, साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ? ॥ ४०९ ॥

तथाच, आदौ साम प्रयोक्तव्यं पुरुषेण विजानता।
सामसाध्यानि कार्य्याणि विक्रियां यान्ति न क्वचित् ॥४१०॥

न चन्द्रेण न चौषध्या न सूर्य्येण न वह्निना।
साम्नैव विलयं याति विद्वेषिप्रभवं तमः ॥ ४११ ॥

---

(झ) अभव्यम् अशुभम्।

(ञ) सामसिद्धिं साम्ना सन्धिना सिद्धिः ताम्। दण्डरुचेः दण्डे रुचिः यस्य तथोक्तस्य युद्धप्रियस्य इत्यर्थः।

सामादीति। स्वयम्भुवा ब्रह्मणा सामादिदण्डपर्यन्तः सामदानभेददण्डविधिः नयः नीतिः प्रोक्तः कथितः। तेषां मध्ये दण्डः संग्रामः पापीयान् अतिनिकृष्ट इत्यर्थः, पश्चात् अन्योपायानाम् असम्भवे इत्यर्थः तं विनियोजयेत् प्रयुञ्ज्याद इत्यर्थः ॥ ४०८ ॥

साम्नैवेति। यत्र साम्ना सान्त्वेनैव सिद्धिर्भवेदिति शेषः बुधेन विदुषा तत्र दण्डः संग्रामो न विनियोज्यः न प्रयोज्यः। यदि शर्करया गुड़विकारविशेषेण पित्तं शाम्यति, तत्र पटोलेन कोऽर्थः ? किं प्रयोजनम् ? ॥ ४०९ ॥

आदाविति। विजानता विदुषा पुरुषेण आदौ प्रथमं साम प्रयोक्तव्यं यतः सामसाध्यानि कार्य्याणि क्वचित् कुत्रापि न विक्रियां यान्ति गच्छन्ति ॥ ४१० ॥

नेति। विद्वेषिप्रभवं शत्रुसमुत्थं तमः तिमिररूपक्रोध इत्यर्थः साम्ना सान्त्वेनैव विलयं नाशं याति, चन्द्रेण न, औषध्या तृणज्योतिर्लतया न, सूर्य्येण न, वह्निना च न विलयं यातीत्यनुषङ्गः ॥ ४११ ॥

तथा यत् त्वं मन्त्रित्वमभिलषसि तदपि अयुक्तं यतस्त्वं मन्त्रिगतिं (ट) न वेत्सि। यतः पञ्चविधो मन्त्रः स च कर्म्मणामारम्भोपायः, (ठ) पुरुषद्रव्यसम्पत्, देशकालविभागो, विनिपातप्रतीकारः (ड) कार्य्यसिद्धेति। सोऽयं स्वाम्यमात्ययोः (ढ) एकतमस्य किं वा द्वयोरपि विनिपातः समुत्पद्यते लग्नः (ण)। तद्यदि काचित् शक्तिरस्ति तद्विचिन्त्यतां विनिपातप्रतीकारः, भिन्नसन्धाने (त) हि मन्त्रिणां बुद्धिपरीक्षा, तन्मूर्ख! तत् कर्त्तुमसमर्थस्त्वं यतो विपरीतबुद्धिरसि। उक्तञ्च,

मन्त्रिणां भिन्नसन्धाने भिषजां सान्निपातिके।

कर्म्मणि व्यज्यते प्रज्ञा स्वस्थे को वा न पण्डितः? ॥४१२॥

अन्यच्च, घातयितुमेव नीचः परकार्य्यं वेत्ति न प्रसाधयितुम्।

---

(ट) मन्त्रिगतिं मन्त्रिणः स्वकर्त्तव्यम् इत्यर्थः।

(ठ) कर्मणां सन्ध्यादीनाम् आरम्भे उद्योगे उपायः कौशलम्।

(ड) पुरुषेति। पुरुषाणाम् उपयुक्तकर्मचारिणां द्रव्याणां धनानाञ्च सम्पद् समृद्धिः यथा प्रयोजनं सद्भाव इति भावः। देशेति। अस्मिन् देशे साम अस्मिन् देशे दानम् अस्मिन् देशे भेदः अस्मिन् देशे दण्डः प्रयोक्तव्यः, अस्मिन् काले साम, अस्मिन् काले दानम्, अस्मिन् काले भेदः, अस्मिन् काले दण्डः प्रयोक्तव्य इत्येवंरूपो विभागः व्यवस्थापनमित्यर्थः। विनिपातेति। विनिपातः अपायः तस्य प्रतीकारः यथा न अपाय आपतति तथा प्रतिविधानम्।

(ढ) कार्य्यसिद्धिः कार्य्याणां सन्ध्यादीनां सिद्धिः सम्यक् साधनम्। स्वाम्यमात्ययोः पिङ्गलकसञ्जीवकयोः।

(ण) विनिपातः विध्वंसः। लग्नः उपस्थितः।

(त) भिन्नसन्धाने भग्नसङ्घटने।

मन्त्रिणामिति। भिन्नसन्धाने अयोज्ययोजने अघटनीयघटनायामिति यावत्। मन्त्रिणाम् अमात्यानां तथा सान्निपातिके कर्मणि व्यापारे भिषजां चिकित्सकानां प्रज्ञा बुद्धिः व्यज्यते प्रकाश्यते, स्वस्थे प्रकृतिस्थे जने को वा जनः पण्डितो न? सर्व एव पाण्डित्यं दर्शयतीति भावः॥ ४१२॥

पातयितुमेव शक्तिर्नाखोरुद्धर्त्तुमन्नपिटम् ॥ ४१३ ॥

अथवा न ते दोषोऽयं स्वामिनो दोषो यस्ते वाक्यं श्रद्दधाति। उक्तञ्च,

नराधिपा नीजजनानुवर्त्तिनो बुधोपदिष्टेन पथा न यान्ति ये।
विशन्त्यतो दुर्गममार्गनिर्गमं समस्तसम्बाधमनर्थपञ्जरम् ॥४१४॥

तद्यदि त्वमस्य मन्त्री भविष्यसि तदा अन्योऽपि कश्चिन्नास्य समीपे साधुजनः समेष्यति। उक्तञ्च,

गुणालयोऽप्यसन्मन्त्री नृपतिर्नाधिगम्यते।
प्रसन्नस्वादुसलिलो दुष्टग्राहो यथा ह्रदः ॥ ४१५ ॥

तथा शिष्टजनरहितस्य स्वामिनोऽपि नाशो भविष्यति।
उक्तञ्च, चित्रास्वादकथैर्भृत्यैरनायासितकार्मुकैः।

---

घातयितुमिति। नीचः क्षुद्रो जनः परकार्य्यं घातयितुं नाशयितुमेव वेत्ति जानाति, प्रसाधयितुं सम्पादयितुं न वेत्तीत्यनुषङ्गः। आखोः मूषिकस्य अन्नपिटं भक्षणीयद्रव्याधारविशेषं पातयितुमेव शक्तिः सामर्थ्यम् अस्तीति शेषः उद्धर्त्तुम् उत्तोलयितुं न शक्तिरित्यनुषङ्गः ॥ ४१३ ॥

नराधिपा इति। ये नराधिपाः राजानः नीचजनानुवर्त्तिनः क्षुद्रजनमतानुसारिणः सन्तः बुधोपदिष्टेन विद्वत्प्रदर्शितेन पथा न यान्ति न चलन्ति, ते अमार्गनिर्गमं निर्गममार्गरहितं समस्तसम्बाधं सकलप्रतिबन्धं दुर्गं दुर्गमम् अनर्थपिञ्जरं व्यसनरूपं पिञ्जरं विशन्ति प्रविशन्ति विपद्यते इति भावः। वंशस्थविलं वृत्तम् ॥ ४१४ ॥

गुणालय इति। गुणाः दयादाक्षिण्यादयः तेषाम् आलयः आकरोऽपि नृपतिः असन्तः असाधवः मन्त्रिणो यस्य तथाभूतः दुर्मन्त्रिपरिवृत इत्यर्थः नृपतिः प्रसन्नं स्वच्छं स्वादु सुस्वादं सलिलं यस्य तादृशः दुष्टाः ग्राहाः जलजन्तुभेदाः यत्र तथाभूतः ह्रदः यथा जलाशय इव न अधिगम्यते न सेव्यते लोकैरिति शेषः ॥ ४१५ ॥

चित्रेति। ये नृपाः चित्राः मनोज्ञाः आस्वादाः यासां तादृश्यः कथाः वचनानि येषां तैः मधुरभाषिभिरित्यर्थः किन्तु अनायासितं कर्मणि अनियुक्तं

ये रमन्ते नृपास्तेषां रमन्ते रिपवः श्रिया ॥ ४१६ ॥

तत् किं मूर्खोपदेशेन, केवलं दोषो न गुणः। उक्तञ्च,

नानाम्यं नमते दारु नाश्मनि स्यात् क्षुरक्रिया।
सूचीमुखं विजानीहि नाशिष्यायोपदिश्यते ॥ ४१७ ॥

दमनक आह, कथमेतत्? सोऽब्रवीत्।

## कथा १७।

अस्ति कस्मिंश्चित् पर्वतैकदेशे वानरयूथम्। तच्च (थ) कदाचित् हेमन्तसमये अतिकठोरवातसंस्पर्शवेपमानकलेवरं (द) तुषारवर्षोद्धतप्रवर्षघनधारानिपातसमाहतं (ध) न कथञ्चित् शान्तिमगमत्। अथ केचित् वानरा वह्निकणसदृशानि गुञ्जाफलानि अवचित्य वह्निवाञ्छया फूत्कुर्वन्तः समन्तात् तस्थुः। अथ सूचीमुखी नाम पक्षी तेषां तं वृथायासम् अवलोक्य प्रोवाच, भोः! सर्वे मूर्खाः यूयं, नैते वह्निकणाः,

---

कार्मुकं धनुः यैः तथाभूतैः कार्य्याक्षमैरित्यर्थः भृत्यैः रमन्ते क्रीड़न्ति नतु राजकार्य्यं कुर्वन्तीति भावः, रिपवः शत्रवः तेषां नृपाणां श्रिया सम्पदा रमन्ते सम्पदो हरन्तीति भावः ॥ ४१६ ॥

नेति। अनाम्यम् अनमनीयं दारु काष्ठं न नमते न आनन्तुं शक्यमित्यर्थः अश्मनि क्षुरक्रिया चौरकर्म न स्यात्, अशिष्याय न उपदिश्यते अत्र दृष्टान्तं सूचीमुखं विजानीहि ॥ ४१७ ॥

(थ) तच्च वानरयूथम्।

(द) अतिकठोरेति। अतिकठोरेण अत्युत्कटेन वातसंस्पर्शेन वातयोगेन वेपमानं कम्पमानं कलेवरं शरीरं यस्य तथोक्तम्।

(ध) तुषारेति। तुषारवर्षवत् उद्धतेन उत्कटेन प्रवर्षघनधारानिपातेन समाहतं सम्यक् ताड़ितम्। शान्तिं स्वास्थ्यम्।

गुञ्जाफलानि एतानि, तत् किं वृथा श्रमेण, न एतस्मात् शीत-रक्षा भविष्यति। तत् अन्विष्यतां कश्चित् निर्वातो वनप्रदेशो गुहा वा गिरिकन्दरं वा। अद्यापि साटोपा (न) मेघा दृश्यन्ते। अथ तेषाम् एकतमो वृद्धवानरः तमुवाच, भो मूर्ख! किं तव अनेन व्यापारेण, तद्गम्यताम्। उक्तञ्च,

मुहुर्विघ्नितकर्माणं द्यूतकारं पराजितम्।
नालापयेद्विवेकज्ञो यदीच्छेत् सिद्धिमात्मनः ॥ ४१८ ॥

तथाच, आखेटकं वृथा क्लेशं मूर्खं व्यसनसंस्थितम्।
आलापयति यो मूढ़ः स गच्छति पराभवम् ॥ ४१९ ॥

सोऽपि तमनादृत्य भूयोऽपि वानरान् अनवरतमाह, भोः! किं वृथा क्लेशेन, अथ यावदसौ न कथञ्चित् प्रलपन् विरमति तावदेकेन वानरेण व्यर्थश्रमत्वात् कुपितेन पक्षाभ्यां गृहीत्वा शिलायामास्फालित उपरतश्च (प)। अतोऽहं ब्रवीमि, नानाम्यं नमते दार्वित्यादि।

तथाच, उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये।

---

(न) साटोपाः सवेगाः।

मुहुरिति। विवेकज्ञः प्राज्ञो जनः यदि आत्मनः स्वस्य सिद्धिम् इच्छेत् तदा मुहुः पुनः पुनः विघ्नितं व्याहतं कर्म येन तादृशं कार्य्यव्याघातकं द्यूतकारं तथा पराजितं जनं न आलापयेत् न तेन आलापं कुर्य्यादित्यर्थः। अयन्तु पक्षी विघ्नितकर्मेति भावः॥ ४१८ ॥

आखेटकमिति। यः मूढ़ः आखेटकं मृगयाशीलं वृथाक्लेशम् अनर्थकपरिश्रमिणं मूर्खं तथा व्यसनसंस्थितं कामजक्रोधजेषु अष्टादशसु द्यूतादिषु समासक्तं जनम् आलापयति सः पराभवं गच्छति ॥ ४१९ ॥

(प) आस्फालितः आक्षिप्तः। उपरतः मृतः।

उपदेश इति। मूर्खाणाम् उपदेशः प्रकोपाय हि प्रकृष्टकोपायेव,

पयःपानं भुजङ्गानां केवलं विषवर्द्धनम् ॥ ४२० ॥

अन्यच्च, उपदेशो न दातव्यो यादृशे तादृशे जने।

पश्य वानरमूर्खेण सुगृही निर्गृहीकृतः ॥ ४२१ ॥

दमनक आह कथमेतत्? सोऽब्रवीत्।

## कथा १८।

अस्ति कस्मिंश्चित् वनोद्देशे शमीवृक्षः। तस्य लम्बमानशिखायां कृतावासौ अरण्यचटकदम्पती वसतः स्म। अथ कदाचित् तयोः सुखसंस्थयोर्हेमन्तमेघो मन्दं मन्दं वर्षितुमारब्धः। अत्रान्तरे कश्चित् शाखामृगो वातासारसमाहतः (फ) प्रोद्धूषितशरीरो दण्डवीणां वादयन् वेपमानः (ब) तत् शमीमूलमासाद्य उपविष्टः। अथ तं तादृशमवलोक्य चटका प्राह, भो भद्र!

हस्तपादसमोपेता दृश्यसे पुरुषाकृतिः।

शीतेन भिद्यसे मूढ! कथं न कुरुषे गृहम् ॥४२२॥

एतच्छ्रुत्वा तां वानरः सकोपमाह, अधमे! कस्मात् न त्वं

---

शान्तये न प्रशमाय, तथाहि भुजङ्गानां पयःपानं दुग्धपानं केवलं विषवर्द्धनं विषमेव वर्द्धयति इत्यर्थः ॥ ४२० ॥

उपदेश इति। यादृशे तादृशे जने उपदेशः न दातव्यः। पश्य अवलोकय, वानरमूर्खेण सुगृही उत्तमः गृहस्थः निर्गृहीकृतः गृहशून्यीकृतः ॥ ४२१ ॥

(फ) वातासारसमाहतः वातसंवलितवृष्टिधाराताड़ितः।

(ब) प्रोद्धूषितशरीरः वृष्टिजलाक्तदेहः। दण्डवीणां दण्ड एव वीणा तां दण्डेन वीणां कुतश्चित् प्राप्तामिति वा। वेपमानः कम्पमानः।

हस्तेति। हे मूढ! हस्तपादैः समायुक्तः पुरुषाकृतिः नराकृतिः दृश्यसे, अथ च शीतेन भिद्यसे क्लिश्यसि, कथं गृहं न कुरुषे? ॥ ४२२ ॥

मौनव्रता भवसि। अहो! धार्ष्ट्यम् (भ) अस्याः अद्य मामुपहसति।

सूचीमुखी दुराचारा रण्डा पण्डितवादिनी।
नाशङ्कते प्रजल्पन्ती तत् किमेनां न हन्म्यहम्॥ ४२३॥

एवं प्रलप्य तामाह, मुग्धे! किं तव ममोपरि चिन्तया। उक्तञ्च,

वाच्यं श्रद्धासमेतस्य पृच्छतश्च विशेषतः।
प्रोक्तं श्रद्धाविहीनस्य अरण्यरुदितोपमम्॥ ४२४॥

तत् किं बहुना, तावत् कुलायस्थितया (म) तया अभिहितः स तावत् तां शमीमारुह्य तस्याः कुलायं शतधा खण्डशः अकरोत्। अतोऽहं ब्रवीमि उपदेशो न दातव्य इति।

तन्मूर्ख! शिक्षापितो(य)ऽपि न शिक्षितः त्वम्। अथवा न ते दोषोऽस्ति, यतः साधोः शिक्षा गुणाय सम्पद्यते न असाधोः। उक्तञ्च,

किं करोत्येव पाण्डित्यमस्थाने विनियोजितम्।
अन्धकारप्रतिच्छन्ने घटे दीप इवाहितः॥ ४२५॥

---

(भ) मौनव्रता भवसि तूष्णीं न तिष्ठसीत्यर्थः। धार्ष्ट्यं चापल्यं प्रागल्भ्यम् इत्यर्थः।

सूचीति। इयं सूचीमुखी सूचीव मुखं यस्याः सा दुराचारा दुष्टा रण्डा धूर्त्ता पण्डितमानिनी सती प्रजल्पन्ती वदन्ती मामिति शेषः न आशङ्कते, तत् तस्मात् एनां चटकां कथम् अहं न हन्मि न नाशयामि?॥ ४२३॥

वाच्यमिति। श्रद्धासमेतस्य श्रद्धान्वितस्य विशेषतः पृच्छतो जनस्य समीपे वाच्यं वक्तव्यं, श्रद्धाविहीनस्य अश्रद्धयतः जनस्य समीपे प्रोक्तं वचनम् अरण्यरुदितोपमम् अरण्यरोदनतुल्यम्॥ ४२४॥

(म) कुलायस्थितया नीड़वासिन्या।

(य) शिक्षापितः शिक्षां प्रापितः।

किमिति। अस्थाने विनियोजितं पाण्डित्यम् अन्धकारप्रतिच्छन्ने तिमिर-

तद् व्यर्थपाण्डित्यमाश्रित्य मम वचनमशृण्वन् न आत्मनः शान्तिमपि वेत्सि, तन्नूनम् अपजातः (२) त्वम्। उक्तञ्च,

जातः पुत्रोऽनुजातश्च अतिजातस्तथैव च।
अपजातश्च लोकेऽस्मिन् मन्तव्याः शास्त्रवेदिभिः ॥४२६॥
मातृतुल्यगुणो जातस्त्वनुजातः पितुः समः।
अतिजातोऽधिकस्तस्मादपजातोऽधमाधमः ॥ ४२७ ॥
अप्यात्मनो विनाशं गणयति न खलः परव्यसनहृष्टः।
प्रायो मस्तकनाशे समरमुखे नृत्यति कबन्धः ॥४२८॥

अहो! साधु इदमुच्यते,

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिता धूमेन घातितः॥ ४२९ ॥

दमनक आह, कथमेतत्? सोऽब्रवीत्,

---

पूर्णे घटे तदुपरीत्यर्थः आहितः अर्पितः दीप इव किं करोत्येव? न किमपि करोति इत्यर्थः। ४२५ ॥

(२) अपजातः विजातकः।

जात इति। अस्मिन् लोके शास्त्रवेदिभिः शास्त्रज्ञैः जातः, अनुजातः, अतिजातः तथा अपजातः इति चतुर्विधाः पुत्राः मन्तव्याः ॥ ४२६ ॥

मातृतुल्येति। मातुस्तुल्यः गुणो यस्य तथाविधः पुत्रः जातः, पितुः समः पुत्रः अनुजातः तस्मात् पितुरधिकः अधिकगुणः पुत्रः अतिजातः, अधमाधमः अत्यधमः पुत्रः अपजातः उच्यते इति शेषः ॥ ४२७ ॥

अपीति। खलः दुर्जनः परव्यसने परेषां विपदि हृष्टः सन् आत्मनः स्वस्य विनाशमपि न गणयति। कबन्धः छिन्नशिराः कायः मस्तकस्य नाशे सति समरमुखे रणशिरसि प्रायः बाहुल्येन नृत्यति। आर्य्यावृत्तम् ॥ ४२८ ॥

धर्मबुद्धिरिति। धर्मबुद्धिः कुबुद्धिश्च एतौ द्वौ मम विदितौ, पुत्रेण कुबुद्धिनेति भावः व्यर्थपाण्डित्यात् विफलचातुर्य्यात् पिता आत्मन इति शेषः धूमेन सधूमाग्निना इत्यर्थः घातितः विनाशितः॥ ४२९ ॥

## कथा १९।

कस्मिंश्चिदधिष्ठाने धर्मबुद्धिः पापबुद्धिश्च द्वे मित्रे प्रतिवसतः स्म। अथ कदाचित् पापबुद्धिना चिन्तितम्, अहं तावत् मूर्खो दारिद्र्योपेतश्च (ल)। तदेनं धर्म्मबुद्धिमादाय देशान्तरं गत्वा अस्य आश्रयेण अर्थोपार्जनं कृत्वा एनमपि वञ्चयित्वा सुखी भवामि। अथ अन्यस्मिन् अहनि पापबुद्धिः धर्म्मबुद्धिं प्राह, भो मित्र! वार्द्धकभावे किं तमात्मविचेष्टितं स्मरसि (व)। देशान्तरमदृष्ट्वा कां शिशुजनस्य वार्त्तां कथयिष्यसि। उक्तञ्च,

देशान्तरेषु बहुविधभाषावेशादि येन न ज्ञातम्।
भ्रमता धरणीपीठे तस्य फलं जन्मनो व्यर्थम् ॥४३०॥

तथाच, विद्यां वित्तं शिल्पं तावन्नाप्नोति मानवः सम्यक्।
यावद् व्रजति न भूमौ देशाद्देशान्तरं हृष्टः ॥ ४३१ ॥

अथ तस्य तद्वचनमाकर्ण्य प्रहृष्टमनाः तेनैव सह गुरुजनानुज्ञातः शुभे अहनि देशान्तरं प्रस्थितः। तत्र च धर्म्मबुद्धिप्रभावेण भ्रमता पापबुद्धिना प्रभूततरं वित्तम्

---

(ल) दारिद्र्योपेतः दारिद्र्ययुक्तः निर्धन इत्यर्थः।

(व) वार्द्धकभावे वृद्धावस्थायाम् आत्मनः विचेष्टितं कर्त्तव्यं किम्? तत् स्मरसि भावयसि इत्यर्थः।

देशान्तरेष्विति। येन जनेन देशान्तरेषु भ्रमता सता बहुविधभाषावेशादि न ज्ञातं तस्य धरणीपीठे जन्मनः फलं व्यर्थं वृथा जातोऽसाविति भावः। आर्य्यावृत्तम् ॥ ४३० ॥

विद्यामिति। भूमौ पृथिव्यां मानवः हृष्टः सन् यावत् देशात् देशान्तरं न व्रजति, तावत् सम्यक् विद्यां वित्तं धनं शिल्पं वैज्ञानिकं व्यापारमित्यर्थः न आप्नोति न लभते। आर्य्यावृत्तम् ॥ ४३१ ॥

आसादितम्। ततश्च द्वौ अपि तौ प्रभूतोपार्जितद्रव्यौ प्रहृष्टौ स्वगृहं प्रति औत्सुक्येन निवृत्तौ। उक्तञ्च,

प्राप्तविद्यार्थशिल्पानां देशान्तरनिवासिनाम्।
क्रोशमात्रोऽपि भूभागः शतयोजनवद्भवेत् ॥ ४३२ ॥

अथ स्वस्थानसमीपवर्त्तिना पापबुद्धिना धर्म्मबुद्धिरभिहितः, भद्र! न सर्वमेतद्धनं गृहं प्रति नेतुं युज्यते, यतः कुटुम्बिनो बान्धवाश्च (श) प्रार्थयिष्यन्ते। तदत्र एव वनगहने क्वापि भूमौ निक्षिप्य किञ्चिन्मात्रमादाय गृहं प्रविशावो भूयोऽपि प्रयोजने सञ्जाते तन्मात्रं (ष) समेत्य अस्मात् स्थानात् नेष्यावः। उक्तञ्च,

न वित्तं दर्शयेत् प्राज्ञः कस्यचित् स्वल्पमप्यहो!।
मुनेरपि यतस्तस्य दर्शनाच्चलते मनः ॥ ४३३ ॥

तथाच, यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥ ४३४ ॥

---

प्राप्तेति। प्राप्तानि विद्यार्थशिल्पानि यैः तथाभूतानां लब्धविद्यानां लब्धधनानां लब्धवैज्ञानिकव्यापाराणामित्यर्थः देशान्तरनिवासिनां क्रोशमात्रोऽपि भूभागः शतयोजनवत् अतिदूरवर्त्ती वा इत्यर्थः भवेत्। यदर्थं जना देशान्तरं गच्छन्ति यावत् तदधिगमो न स्यात् स्वदेशं प्रति निरुत्सुकाः तिष्ठन्ति, कृतकार्य्यास्तु स्वदेशं प्रति सातिशयसमुत्सुकतया स्वदेशं बहुदूरमिव मन्यन्ते इति भावः ॥ ४३२ ॥

(श) कुटुम्बिनः गृहजनाः। बान्धवाः ज्ञातयः सुहृदो वा।

(ष) तन्मात्रं प्रयोजनोपयुक्तम् इत्यर्थः।

नेति। प्राज्ञो जनः स्वल्पमपि वित्तं धनं कस्यचित् न दर्शयेत्, अहो आश्चर्य्यं यतः तस्य वित्तस्य दर्शनात् मुनेरपि मनः चलते सालसं भवतीति भावः॥ ४३३ ॥

यथेति। यथा मत्स्यैः जले, श्वापदैः भुवि, पक्षिभिश्च आकाशे आमिषं स्थितमिति शेषः भक्ष्यते, तथा सर्वत्र देशे वित्तवान् धनवान् लोकः भक्ष्यते जनैरिति शेषः सर्वं एव धनवतो धनं काङ्क्षतीति भावः ॥ ४३४ ॥

तत् आकर्ण्य धर्मबुद्धिः आह, भद्र! एवं क्रियताम्। तथा अनुष्ठिते द्वौ अपि तौ स्वगृहं गत्वा सुखेन संस्थितवन्तौ। अथ अन्यस्मिन् अहनि पापबुद्धिर्निशीथेऽटव्यां गत्वा तत् सर्वं वित्तं समादाय गर्त्तं पूरयित्वा स्वभवनं जगाम। अथ अन्येद्युः धर्मबुद्धिं समभ्येत्य प्रोवाच, सखे! बहुकुटुम्बा वयं वित्ताभावात् सीदामः (स)। तद्गत्वा तत्र स्थाने किञ्चित्-मात्रं धनमानयावः। सोऽब्रवीत्, भद्र! एवं क्रियताम्। अथ द्वौ अपि गत्वा तत् स्थानं यावत् खनतस्तावत् रिक्तं भाण्डं दृष्टवन्तौ। अत्रान्तरे पापबुद्धिः शिरस्ताड़यन् प्रोवाच, भो धर्मबुद्धे! त्वया हृतमेतद्धनं न अन्येन, यतो भूयोऽपि गर्त्तापूरणं कृतं, तत् प्रयच्छ मे तस्यार्द्धम्, अथवा अहं राज-कुले निवेदयिष्यामि। स आह, भो दुरात्मन्! मैवं वद, धर्मबुद्धिः खलु अहम्। न एतच्चौरकर्म करोमि।

उक्तञ्च, मातृवत्परदाराणि परद्रव्याणि लोष्टवत्।
आत्मवत् सर्वभूतानि वीक्षन्ते धर्मबुद्धयः॥ ४३५॥

एवं द्वौ अपि तौ विवदमानौ धर्माधिकरणं गतौ प्रोचतुश्च परस्परं दूषयन्तौ। अथ धर्माधिकरणाधिष्ठितपुरुषैः दिव्यार्थं (ह) यावत् नियोजितौ तावत् पापबुद्धिः आह, अहो! न सम्यग्दृष्टोऽयं न्यायः (च)। उक्तञ्च,

---

(स) सीदामः क्लेशं प्राप्नुमः।

मातृवदिति। धर्मबुद्धयो जनाः परदाराणि परकलत्राणि मातृवत् जननी-मिव, परद्रव्याणि लोष्टवत् भूपतितमृत्खण्डमिव तथा सर्वभूतानि सर्वाणि प्राणिनः आत्मवत् आत्मानमिव वीक्षन्ते पश्यन्ति॥ ४३५॥

(ह) दिव्यार्थं शपथकरणार्थम्।

(च) न्यायः विचारः। दृष्टः युष्माभिरिति शेषः।

विवादेऽन्विष्यते पत्रं तदभावेऽपि साक्षिणः।
साक्ष्यभावात्ततो दिव्यं प्रवदन्ति मनीषिणः॥ ४३६॥

तदत्र विषये मम वृक्षदेवताः साक्षीभूताः तिष्ठन्ति। ता अपि आवयोः एकतरं चौरं साधुं वा करिष्यन्ति। अथ तैः सर्वैः अभिहितम्, भोः युक्तमुक्तं भवता। उक्तञ्च,

अन्त्यजोऽपि यदा साक्षी विवादे सम्प्रजायते।
न तत्र विद्यते दिव्यं किं पुनर्यत्र देवताः॥ ४३७॥

तदस्माकमपि अत्र विषये महत्कौतूहलं वर्त्तते। प्रत्यूषसमये युवाभ्यामपि अस्माभिः सह तत्र वनोद्देशे गन्तव्यमिति। एतस्मिन्नन्तरे पापबुद्धिः स्वगृहं गत्वा स्वजनकमुवाच, तात! प्रभूतोऽयं मयार्थो धर्म्मबुद्धेश्चोरितः, स च तव वचनेन परिणतिं (क) गच्छति, अन्यथा अस्माकं प्राणैः सह यास्यति। स आह, वत्स! द्रुतं वद येन प्रोच्य तद्द्रव्यं स्थिरतां नयामि (ख)। पापबुद्धिः आह, तात! अस्ति तत्प्रदेशे महाशमी, तस्यां महत्कोटरमस्ति, तत्र त्वं साम्प्रतमेव

---

विवादे इति। विवादे प्रथमं पत्रं लेख्यमित्यर्थः अन्विष्यते प्रार्थ्यते धर्माधिकरणिकैरिति शेषः, तदभावे तस्य पत्रस्य अभावे साक्षिणः अन्विष्यन्ते इति शेषः। मनीषिणः विद्वांसः साक्षिणाम् अभावात् अभावे सति इत्यर्थः ततो दिव्यं प्रवदन्ति प्रमाणत्वेन कथयन्ति इत्यर्थः॥ ४३६॥

अन्त्यज इति। विवादे अन्त्यजोऽपि नीचजातिरपि यदा यदि इत्यर्थः साक्षी सम्प्रजायते लभ्यो भवतीत्यर्थः, तत्र दिव्यं प्रमाणमिति शेषः न विद्यते, यत्र पुनः देवताः साक्षिण्य इति शेषः तत्र किं वक्तव्यमिति भावः॥ ४३७।

(क) परिणतिं परिपाकम्।

(ख) प्रोच्य कथयित्वा साक्ष्यं दत्त्वेति भावः। स्थिरतां स्थायित्वं नयामि प्रापयामि यथा तद्धनम् अस्मद्गृहात् न वहिर्याति तथा करोमीति भावः।

प्रविश। ततः प्रभाते यदाहं सत्यश्रावणं करोमि, (ग) तदा त्वया वाच्यं यद् धर्म्मबुद्धिश्चौर इति। तथा अनुष्ठिते प्रत्यूषे स्नात्वा पापबुद्धिः धर्म्मबुद्धिपुरःसरो धर्माधिकरणिकैः सह तां शमीमभ्येत्य तारस्वरेण (घ) प्रोवाच,

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मो हि जानाति नरस्य वृत्तम्॥ ४३८॥

भगवति वनदेवते! आवयोर्मध्ये यः चौरः त्वं कथय। अथ पापबुद्धिपिता शमीकोटरस्थः प्रोवाच, भोः! शृणुत शृणुत धर्म्मबुद्धिना हृतमेतद्धनम्। तदाकर्ण्य सर्वे ते राजपुरुषा विस्मयोत्फुल्ललोचना यावद्धर्म्मबुद्धेः वित्तहरणोचितं निग्रहं शास्त्रदृष्ट्या अवलोकयन्ति तावद्धर्म्मबुद्धिना तच्छमीकोटरं वह्निभोज्यद्रव्यैः (ङ) परिवेष्ट्य वह्निना सन्दीपितम्। अथ ज्वलति तस्मिन् शमीकोटरेऽर्द्धदग्धशरीरः स्फुटितेक्षणः (च) करुणं परिदेवयन् (छ) पापबुद्धिपिता निश्चक्राम।

---

(ग) सत्यश्रावणं करोमि सत्यं श्रावयामि इत्यर्थः।

(घ) तारस्वरेण उच्चैःस्वरेण।

आदित्येति। आदित्यचन्द्रौ सूर्य्याचन्द्रमसौ, अनिलो वायुः, अनलः अग्निः, द्यौः अन्तरीक्षं भूमिः पृथिवी, आपः जलानि, हृदयं मनः, यमः अन्तकः, अहः दिनं, रात्रिश्च, उभे द्वे सन्ध्ये प्रातःसायंरूपे, तथा धर्मः नरस्य मानवस्य वृत्तं चरितं जानाति हि जानात्येव। उपजातिवृत्तम्॥ ४३८॥

(ङ) वह्निभोज्यद्रव्यैः तृणकाष्ठादिभिः।

(च) स्फुटितेक्षणः दग्धत्वात् गलितदृष्टिः।

(छ) करुणं दीनम्। परिदेवयन् विलपन्।

ततश्च तैः सर्वैः पृष्टः भोः! किमिदत्? इत्युक्ते स पापबुद्धि-विचेष्टितं सर्वमिदं निवेदयित्वा उपरतः। अथ ते राजपुरुषाः पापबुद्धिं शमीशाखायां प्रतिलम्ब्य धर्म्मबुद्धिं प्रशस्य इदमूचुः, अहो! साधु इदमुच्यते।

उपायं चिन्तयेत् प्राज्ञस्तथापायं च चिन्तयेत्।
पश्यतो वकमूर्खस्य नकुलेन हता वकाः॥ ४३९॥

धर्म्मबुद्धिः प्राह, कथमेतत्? ते प्रोचुः,

## कथा २०।

अस्ति कस्मिंश्चिद्वनोद्देशे बहुवकसनाथो वटपादपः। तस्य कोटरे कृष्णसर्पः प्रतिवसति स्म। स च वकबालकान् अजातपक्षान् अपि सदैव भक्षयन् कालं नयति। अथ एको वकस्तेन भक्षितानि अपत्यानि दृष्ट्वा शिशुवैराग्यात् सरस्तीर-मासाद्य वाष्पपूरपूरितनयनः (ज) अधोमुखस्तिष्ठति। तञ्च तादृक्चेष्टितमवलोक्य कुलीरकः प्रोवाच, माम! किमेवं रुद्यते भवता अद्य। स आह, भद्र! किं करोमि, मम मन्द-भाग्यस्य बालकाः कोटरनिवासिना सर्पेण भक्षिताः, तद्-दुःखदुःखितोऽहं रोदिमि। तत् कथय मे यदि अस्ति कश्चि-दुपायः तद्विनाशाय। तदाकर्ण्य कुलीरकः चिन्तयामास। अयं तावत् अस्मज्जातिसहजवैरी (झ) तथा उपदेशं प्रयच्छामि

---

उपायमिति। प्राज्ञः बुद्धिमान् जनः उपायं तथा अपायञ्च चिन्तयेत्। तथाहि पश्यतो वकमूर्खस्य अनादरे षष्ठी। पश्यन्तं मूर्खं वकमनादृत्येत्यर्थः नकुलेन वकाः हताः नाशिताः॥ ४३९॥

(ज) वाष्पपूरपूरितनयनः अश्रुप्रवाहपूर्णाक्षः।

(झ) अस्मज्जातिसहजवैरी अस्मज्जातीनां मत्स्यादीनां सहजवैरी स्वभावशत्रुः।

सत्यानृतं (ञ) यथान्येऽपि वकाः सर्वे संक्षयमायान्ति।
उक्तञ्च, नवनीतसमां वाणीं कृत्वा चित्तं तु निर्दयम्।
तथा प्रबोध्यते शत्रुः सान्वयो म्रियते यथा ॥ ४४० ॥

आह च, माम ! यदि एवं तत् मत्स्यमांसखण्डानि नकुलस्य बिलद्वारात् सर्पकोटरं यावत् प्रक्षिप यथा नकुलस्तन्मार्गेण गत्वा तं दुष्टसर्पं विनाशयति। अथ तथा अनुष्ठिते मत्स्यमांसानुसारिणा नकुलेन तं कृष्णसर्पं निहत्य तेऽपि तद्वृक्षाश्रयाः सर्वे वकाश्च शनैःशनैर्भक्षिताः। अतो वयं ब्रूमः उपायं चिन्तयेदिति।

तदनेन पापबुद्धिना उपायश्चिन्तितो नापायः। ततस्तत्फलं प्राप्तम्।

धर्मबुद्धिः कुबुद्धिश्च द्वावेतौ विदितौ मम।
पुत्रेण व्यर्थपाण्डित्यात् पिता धूमेन घातितः ॥४४१॥

एवं मूढ़ ! त्वयापि उपायश्चिन्तितो नापायः पापबुद्धिवत्। तत् न भवसि त्वं सज्जनः, केवलं पापबुद्धिः असि, ज्ञातो मया स्वामिनः प्राणसन्देहानयनात्। प्रकटीकृतं त्वया स्वयमेवात्मनो दुष्टत्वं कौटिल्यञ्च। अथवा साधु इदमुच्यते।

यत्नादपि कः पश्येच्छिखिनामाहारनिःसरणमार्गम्।
यदि जलदध्वनिमुदितास्त एव मूढ़ा न नृत्येयुः ॥४४२॥

---

(ञ) सत्यानृतं सत्यमनृतं मिथ्या च।

नवेति। वाणीं वाचं नवनीतसमाम् अतिकोमलामित्यर्थः, तु किन्तु चित्तं निर्दयं निष्ठुरं कृत्वा शत्रुः तथा प्रबोध्यते उपदिश्यते, यथा सान्वयः सवंशः म्रियते क्षयं गच्छति इत्यर्थः ॥ ४४० ॥

यत्नादिति। को जनः यत्नादपि यत्नमाश्रित्यापि शिखिनां मयूराणाम् आहारनिःसरणमार्गं पश्येत् ? न कोऽपीत्यर्थः, यदि ते एव मूढ़ाः जलदानां

यदि त्वं स्वामिन एनां दशां (ट) नयसि तदस्मद्विधस्य का गणना। तस्मात् मम आसन्नेन (ठ) भवता न भाव्यम्। उक्तञ्च,

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजन्! तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥४४३॥

दमनक आह, कथमेतत्? सोऽब्रवीत्,

## कथा २१।

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो (ड) नाम बणिक्पुत्रः। स च विभवक्षयात् (ढ) देशान्तरगमनमना व्यचिन्तयत्,

यत्र देशेऽथवा स्थाने भोगान् भुक्त्वा स्ववीर्य्यतः।
तस्मिन् विभवहीनो यो वसेत् स पुरुषाधमः ॥४४४॥

---

मेघानां ध्वनिना मुदिताः हृष्टाः सन्तः न नृत्येयुः। नृत्यकाले एव तेषाम् आहारनिःसरणमार्गो दृश्यते नान्यदा इति भावः ॥ ४४२ ॥

(ट) दशाम् अवस्थां दुरवस्थां मृत्युदशामिति भावः। अस्मद्विधानामिति अस्माकम् ईदृशी दशा त्वया घटयितव्येति नात्र सन्देह इति भावः।

(ठ) आसन्नेन समीपवर्त्तिना।

तुलामिति। यत्र मूषिकाः लोहसहस्रस्य तुलां तौलनयन्त्रं खादन्ति, हे राजन्! तत्र श्येनः पक्षिविशेषः बालकं हरेत् अत्र न संशयः, सन्देहो नास्ति इत्यर्थः। यदि मूषिकास्तादृशम् अतिकठिनं तौलयन्त्रं खादन्ति, तदा श्येनपक्षिणो बालकहरणं यथा न दुष्करं तथा त्वं स्वामिनं यदा एतादृशीमापदं नयसि, तदा अस्माकम् एतादृशावस्थायां त्वया पातनं नासम्भवमिति भावः ॥ ४४३ ॥

(ड) जीर्णधनः जीर्णं क्षीणं धनं यस्य तथोक्तः।

(ढ) विभवक्षयात् धनक्षयात्।

यत्रेति। यः यत्र देशे अथवा स्थाने स्ववीर्य्यतः निजवीर्य्यबलात् भोगान् सुखानि भुक्त्वा तस्मिन् पुनः विभवहीनः निर्धनः वसेत् सः पुरुषेषु मध्ये अधमः ॥ ४४४ ॥

तथाच, येनाहङ्कारयुक्तेन चिरं विलसितं पुरा ।
दीनं वदति तत्रैव यः परेषां स निन्दितः ॥ ४४५ ॥

तस्य च गृहे लोहभारघटिता (ण) पूर्वपुरुषोपार्जिता तुला आसीत् । ताञ्च कस्यचित् श्रेष्ठिनो गृहे निक्षेपभूतां (त) कृत्वा देशान्तरं प्रस्थितः । ततः सुचिरं कालं देशान्तरं यथेच्छया भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनम् उवाच, भोः श्रेष्ठिन् ! दीयतां मे सा निक्षेपतुला । स आह, भोः ! नास्ति सा त्वदीया तुला मूषिकैर्भक्षिता । जीर्णधन आह, भोः श्रेष्ठिन् ! नास्ति दोषस्ते यदि मूषिकैः भक्षितेति । ईदृक् एवायं संसारः । न किञ्चिदत्र शाश्वतमस्ति, (थ) परमहं नद्यां स्नानार्थं गमिष्यामि, तत् त्वमात्मीयं शिशुमिनं धनदेवनामानं मया सह स्नानोपकरणहस्तं (द) प्रेषय इति । सोऽपि चौर्य्यभयात्तस्य (ध) शङ्कितः स्वपुत्रमुवाच, वत्स ! पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति तद्गम्यतामनेन सार्द्धं स्नानोपकरणमादाय इति । अहो ! साधु इदमुच्यते,

न भक्त्या कस्यचित् कोऽपि प्रियं प्रकुरुते नरः ।

---

येनेति । येन अहङ्कारयुक्तेन अहमिकापूर्णेन पुरा पूर्वं चिरं दीर्घकालं विलसितं व्यवहृतं, यश्च पुनः तत्रैव देशे दीनं कातरं वदति दीनतां व्यनक्ति इत्यर्थः सः परेषां निन्दितः निन्दास्पदं भवति ॥ ४४५ ॥

(ण) तस्य जीर्णधनस्य । लोहभारघटिता प्रभूतलौहनिर्मिता इत्यर्थः ।

(त) निक्षेपभूतां बन्धकीभूताम् ।

(थ) अत्र संसारे । शाश्वतम् अक्षयम् ।

(द) स्नानेति । स्नानस्य उपकरणं तैलादिकं हस्ते यस्य तथाभूतम् ।

(ध) तस्य जीर्णधनस्य सम्बन्धविवक्षया अपादाने षष्ठी ।

नेति । कोऽपि नरः भयं प्रलोभं वा कार्य्यकारणं मुक्त्वा विहाय भक्त्या अनु-

मुक्ता भयं प्रलोभं वा कार्य्यकारणमेव वा ॥ ४४६ ॥

तथाच, अत्यादरो भवेत् यत्र कार्य्यकारणवर्जितः।
तत्र शङ्का प्रकर्त्तव्या परिणामेऽसुखावहा ॥ ४४७ ॥

अथ असौ वणिक्‌शिशुः स्नानोपकरणमादाय प्रहृष्टमनाः तेन अभ्यागतेन (न) सह प्रस्थितः। तथानुष्ठिते वणिक् स्नात्वा तं शिशुं नदीगुहायां प्रक्षिप्य तद्द्वारं (प) वृहच्छिलया आच्छाद्य सत्वरं गृहमागतः पृष्टश्च तेन वणिजा, भो अभ्यागत! कथ्यतां कुत्र मे शिशुर्यः त्वया सह नदीं गत इति। स आह, नदीतटात् स श्येनेन हृत इति। श्रेष्ठ्याह, मिथ्यावादिन्! किं क्वचित् श्येनो बालं हर्तुं शक्नोति? तत् समर्पय मे सुतमन्यथा राजकुले निवेदयिष्यामि इति। स आह, भोः सत्यवादिन्! यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति, तत् अर्पय मे तुलां, यदि दारकेण (फ) प्रयोजनम्। एवं तौ विवदमानौ द्वौ अपि राजकुलं गतौ। तत्र श्रेष्ठी तारस्वरेण प्रोवाच, भोः! अब्रह्मण्यमब्रह्मण्यम्!!! मम शिशुः अनेन चौरेण अपहृतः। अथ धर्माधिकारिणः तमूचुः, भोः! समर्प्यतां श्रेष्ठिसुतः। स

---

रागेण कस्यचित् प्रियं न कुरुते। प्रियकरणं लोकस्य भयलोभकार्य्यकारणाधीनं न तु भक्तिनिबन्धनमिति भावः ॥ ४४६ ॥

अत्यादर इति। यत्र कार्य्यकारणवर्जितः विना कार्य्यकारणमित्यर्थः अत्यादरः अतिभक्तिः भवेत् तत्र परिणामे असुखावहा विषमा इत्यर्थः शङ्का प्रकर्त्तव्या, यत्र आदरे कार्य्यकारणं नास्ति स आदरः परिणामदारुण इति भावः ॥ ४४७ ॥

(न) अभ्यागतेन आगन्तुकेन जीर्णधनेन इत्यर्थः।

(प) नदीगुहायां नदीगर्त्ते। तद्द्वारं गुहाद्वारम्।

(फ) दारकेण पुत्रेण।

आह, किं करोमि, पश्यतो मे नदीतटात् श्येनेन अपहृतः शिशुः। तच्छ्रुत्वा ते प्रोचुः, भोः! न सत्यमभिहितं भवता, किं श्येनः शिशुं हर्तुं समर्थो भवति? स आह, भो भोः! श्रूयतां मद्वचः,

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजन्! तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥४४८॥

ते प्रोचुः, कथमेतत्? ततः श्रेष्ठी सभ्यानाम् अग्रे आदितः सर्वं वृत्तान्तं निवेदयामास। ततः तैर्विहस्य द्वौ अपि तौ परस्परं संबोध्य तुलाशिशुप्रदानेन सन्तोषितौ। अतोऽहं ब्रवीमि, तुलां लोहसहस्रस्येति।

तन्मूर्ख! सञ्जीवकप्रसादम् (ब) असहमानेन त्वया एतत् कृतम्। अहो साधु इदमुच्यते,

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः।
वैरूप्योपहताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणञ्च पुरुषं निन्दन्ति मूर्खाः सदा ॥४४९॥

तथाच, मूर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः।

---

(ब) सञ्जीवकप्रसादं सञ्जीवके राजकृतानुग्रहम् इत्यर्थः।

प्रायेणेति। अत्र जगति कुकुलजाः नीचकुलोत्पन्नाः जनाः कुलान्वितं सत्कुलीनं जनं दुर्भगाः मन्दभाग्या नराः श्रीवल्लभं लक्ष्मीमन्तमित्यर्थः, कृपणाः दातारम्, अनृजवः कुटिला नराः ऋजून् सरलान्, नरान् निर्धनाः वित्ते स्थितं धनिनं, वैरूप्योपहताः कुरूपाः कान्तवपुषं रम्याकृतिं, पापिनः धर्माश्रयं धार्मिकं तथा मूर्खाः नानाशास्त्रेषु विचक्षणं विशेषाभिज्ञं पुरुषं सदा प्रायेण निन्दन्ति। शार्दूलविक्रीड़ितं वृत्तम् ॥ ४४९ ॥

मूर्खाणामिति। पण्डिताः विद्वांसः मूर्खाणां, महाधनाः निर्धनानां, व्रतिनः

व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ॥ ४५० ॥
तन्मूर्ख ! त्वया हितमपि अहितं कृतम्। उक्तञ्च,
पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ॥ ४५१ ॥
दमनक आह, कथमेतत् ? सोऽब्रवीत्,

## कथा २२।

कस्यचित् राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवको-(भ)ऽन्तःपुरेऽपि अप्रतिषिद्धप्रसरो(म)ऽतिविश्वासस्थानम् अभूत्। एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति (य) राज्ञो वक्षःस्थलोपरि मक्षिका उपविष्टा। व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनः पुनः तत्रैव उपविशति। ततः तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गमादाय तस्या उपरि प्रहारो विहितः। ततो मक्षिका उड्डीय गता तेन शितधारेण (र) असिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च। तस्मात् चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः। अपरम् एकस्मिन्नगरे कोऽपि

---

धर्मानुष्ठायिनः पापशीलानां तथा कुलस्त्रियः असतीनां कुलटानां द्वेष्याः निन्दनीयाः ॥ ४५० ॥

पण्डित इति। पण्डितः विद्वान् शत्रुरपि वरं मनाक् प्रियः, हितकारको मूर्खो न वरमिति शेषः। राजा वानरेण हतः, विप्राः चौरेण रक्षिताः ॥४५१॥

(भ) अङ्गसेवकः शरीरपरिचारकः।

(म) अप्रतिषिद्धप्रसरः अवारितगतिः।

(य) विदधति कुर्वति।

(र) शितधारेण तीक्ष्णधारेण।

विप्रो महाविद्वान् परं पूर्वजन्मयोगेन चौरो वर्त्तते। स तस्मिन् पुरेऽन्यदेशादागतान् चतुरो विप्रान् बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान्, अहो! केन उपायेन एषां धनं लभे। इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि च अतिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्त्तुमारब्धा। अथवा साधु इदमुच्यते,

असती भवति सलज्जा क्षारं नीरञ्च शीतलं भवति।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्त्तजनः॥ ४५२॥

अथ तस्मिन् सेवां कुर्वति तैः विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततः तानि जङ्घामध्ये तत्-समक्षं (ल) प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्त्तविप्रस्तान् विप्रान् गन्तुमुद्यतान् प्रेक्ष्य चिन्ताव्याकुलितमनाः सञ्जातः। अहो! धनमेतत् न किञ्चित् मम चटितम् (व)। अथ एभिः सह यामि, पथि क्वापि विषं दत्त्वा एतान्निहत्य सर्वरत्नानि गृह्णामि। इति विचिन्त्य तेषामग्रे सकरुणं विलप्य इदमाह, भोः! मित्राणि! यूयं माम् एकाकिनं मुक्त्वा गन्तुमुद्यताः। तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनाम्नेव आकुलं सञ्जातं यथा धृतिं (श) क्वापि न

असतीति। असती कुलटा सलज्जा भवति, क्षारं लवणाक्तं नीरञ्च शीतलं भवति, दम्भी अहङ्कारी जनः विवेकी भवति, धूर्त्तजनश्च प्रियवक्ता प्रियवादी भवति॥ ४५२॥

(ल) तत्समक्षं तस्य चौरस्य समक्षम्।

(व) चटितं दत्तम्।

(श) धृतिं सन्तोषम्।

धत्ते। यूयम् अनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्ताः तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथ अध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वाङ्क्षाः कथयितुम् आरब्धाः, रे रे किराताः! (घ) धावत धावत। सपादलक्षधनिनो (ङ) यान्ति। एतान् निहत्य धनं नयत। ततः किरातैः ध्वाङ्क्षवचनम् आकर्ण्य सत्वरं गत्वा ते विप्रा लगुड़प्रहारैः जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः, परं धनं किञ्चिन्न लब्धम्। तदा तैः किरातैः अभिहितम्। भोः पान्थाः! पुरा कदापि ध्वाङ्क्षवचनमनृतं (छ) न आसीत्। ततो भवतां सन्निधौ क्वापि धनं विद्यते। तदर्पयत। अन्यथा सर्वेषामपि बधं विधाय चर्म विदार्य्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः। तदा तेषाम् ईदृशं वचनम् आकर्ण्य चौरविप्रेण मनसि चिन्तितम्, यदा एषां विप्राणां बधं विधाय अङ्गं विलोक्य रत्नानि नेष्यन्ति तदा अपि मां बधिष्यन्ति। ततोऽहं पूर्वमेवात्मानम् अरत्नं समर्प्य एतान् मुञ्चामि (च)। उक्तञ्च,

मृत्योर्बिभेषि किं बाल! न स भीतं विमुञ्चति।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः॥ ४५३॥

---

(घ) व्रजतां गच्छताम्। ध्वाङ्क्षाः काकाः। किराताः व्याधाः।

(ङ) सपादलक्षधनिनः पञ्चविंशत्यधिकशतसहस्रधनवन्तः।

(छ) ध्वाङ्क्षवचनं काकवाक्यम्। अनृतम् अलीकम्।

(च) अरत्नं रत्नहीनम्। एतान् विप्रान्। मुञ्चामि किरातेभ्यो मोचयामि इत्यर्थः। मयि अरत्ने दृष्टे सर्वे एव रिक्ता इति विज्ञाय सर्वान् विप्रान् किराता मोचयिष्यन्तीति भावः।

मृत्योरिति। हे बाल! शिशो! किं कथं मृत्योः बिभेषि? स मृत्युः भीतं जनं न विमुञ्चति न त्यजति। अद्य वा अब्दशतान्ते वा वर्षशतान्ते वा प्राणिनां मृत्युः ध्रुवः निश्चितः न कोऽपि मृत्युहस्तात् आत्मानं मोचयितुमीष्टे इति फलितम्॥ ४५३॥

तथाच, गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः।
सूर्य्यस्य मण्डलं भित्वा स याति परमां गतिम् ॥४५४॥

इति निश्चित्य अभिहतम्, भोः किराताः! यदि एवं ततो मां पूर्वं निहत्य विलोकयत। ततः तैः तथानुष्ठिते तं धनरहितमवलोक्य अपरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि, पण्डितोऽपि वरं शत्रुरिति। अथ एवं संवदतोस्तयोः सञ्जीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य खरनखरप्रहाराभिहतो गतासुः वसुन्धरापीठे निपपात। अथ तं गतासुम् अवलोक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच, भो! अयुक्तं मया पापेन कृतं सञ्जीवकं व्यापादयता, यतो विश्वासघातादन्यत् नास्ति पापतरं कर्म। उक्तञ्च,

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ॥ ४५५ ॥

भूमिक्षये राजविनाश एव भृत्यस्य वा बुद्धिमतो विनाशे।
नो युक्तमुक्तं ह्यनयोः समत्वं नष्टापि भूमिः सुलभा न भृत्याः॥४५६

तथा मया सभामध्ये स सदैव प्रशंसितः। तत् किं कथयिष्यामि तेषामग्रतः। उक्तञ्च,

---

गवार्थे इति। यः गवार्थे गोरक्षणार्थे ब्राह्मणार्थे ब्राह्मणरक्षणार्थञ्च प्राणत्यागं करोति सः सूर्य्यस्य मण्डलं भित्वा अतिक्रम्येत्यर्थः परमां गतिं याति प्राप्नोति ॥ ४५४ ॥

मित्रद्रोहीति। यः मित्रद्रोही, यश्च कृतघ्नः उपकारिणो हन्ता यश्च विश्वासघातकः ते नराः चन्द्रदिवाकरौ यावत् तिष्ठत इति शेषः तावत्कालमित्यर्थः नरकं यान्ति ॥ ४५५ ॥

भूमीति। भूमिक्षये वा बुद्धिमतः भृत्यस्य विनाशे राजविनाश एव, किन्तु अनयोः भूमिक्षयभृत्यनाशयोः समत्वं यदुक्तं तत् नो युक्तं नोचितं, यतः भूमिः

उक्तो भवति यः पूर्वं गुणवानिति संसदि।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुणा॥ ४५७॥

एवंविधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह, देव! कातरतमस्तव एष न्यायो यद् द्रोहकारिणं शष्पभुजं (क) हत्वा इत्थं शोचसि। तन्न एतदुपपन्नं भूभुजाम् (ख) उक्तञ्च;

पिता वा यदि भ्राता पुत्रो भार्य्याथवा सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम्॥४५८॥

तथा च, राजा घृणी ब्राह्मणः सर्वभक्षी
स्त्री चात्रपा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति॥ ४५९॥

---

अष्टापि सुलभा अनायासेन लभ्या, भृत्यास्तु न सुलभा इति शेषः। तस्मात् भृत्यविनाशो भूमिक्षयादधिको राजहानिकर इति भावः। इन्द्रवज्रावृत्तम्॥ ४५६॥

उक्त इति। पूर्वं संसदि सभायां गुणवानिति उक्तः भवति, प्रतिज्ञाभङ्गभीरुणा पूर्ववाक्यालीकत्वभयाकुलेन तस्य जनस्य दोषो न वक्तव्यः। तथात्वे पूर्वापरविरोधे महत्वभङ्गः स्यादिति भावः॥ ४५७॥

(क) कातरतमः अतिदीनः। न्यायः व्यवहारः। द्रोहकारिणम् अनिष्टकारिणम्। शष्पभुजं तृणाशिनम्।

(ख) उपपन्नं युक्तम्। भूभुजां राज्ञाम्।

पितेति। पिता वा भ्राता यदि वा, पुत्रो वा, भार्य्या वा अथवा सुहृत्, यदा प्राणद्रोहं गच्छेत् प्राणान् हन्तुमिच्छेदित्यर्थः तदा हन्तव्यः बध्यः तत्र पातकं नास्ति॥ ४५८॥

राजेति। घृणी दयालुः राजा, सर्वभक्षी सर्वभोजी ब्राह्मणः, अत्रपा निर्लज्जा स्त्री, दुष्टमतिः सहायः सहचरः, प्रतीपः प्रतिकूलः प्रेष्यः भृत्यः, प्रमादी अनवधानवान् अधिकृतः कर्मचारी तथा यश्च कृतं कार्य्यं न वेत्ति न बुध्यते, सः, अमी त्याज्याः न आश्रयणीया इति भावः। इन्द्रवज्रावृत्तम्॥ ४५९॥

अपि च, सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ॥ ४६० ॥

अपि च, अकृतोपद्रवः कश्चिन्महानपि न पूज्यते।
पूजयन्ति नरा नागान्न तार्क्ष्यं नागघातिनम् ॥४६१॥

तथा च, अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥४६२॥

एवं तेन सम्बोधितः पिङ्गलकः सञ्जीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत् ॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रे मित्रभेदो नाम
प्रथमं तन्त्रं समाप्तम्।

---

सत्येति। नृपनीतिः राजनीतिः वेश्याङ्गनेव क्वचित् सत्या, कचिदनृता, परुषा निष्ठुरा प्रियवादिनी च हिंस्रा च दयालुरपि। अर्थपराः स्वार्थतत्परा वदान्या च पुरस्कर्त्री चेत्यर्थः। भूरिव्यया बहुव्ययकारिणी तथा प्रचुरवित्तसमागमा बहुधनसमन्विता च अतएव अनेकरूपा बहुप्रकारा बहुरूपविलासा च इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ ४६० ॥

अकृतोपद्रव इति। अकृतः उपद्रवः अत्याचारः परपीड़नमित्यर्थः येन तादृशो महानपि कश्चित् न पूज्यते नाद्रियते। तथाहि नराः नागान् सर्पान् अत्याचारिण इति भावः पूजयन्ति, नागघातिनं सर्पहन्तारं तार्क्ष्यं गरुड़ं न पूजयन्तीत्यनुषङ्गः ॥ ४६१ ॥

अशोच्यानिति। त्वम् अशोच्यान् शोकानर्हान् अन्वशोचः अनुशोचसीत्यर्थः प्रज्ञावादांश्च बुद्धियुक्तवचनानि च प्रभाषसे कथयसि। किन्तु पण्डिताः जनाः गतासून् मृतान् अगतासूंश्च अमृतांश्च न अनुशोचन्ति ॥ ४६२ ॥

# अथ मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रम् ।

अथ इदमारभ्यते मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं तस्य अयमाद्यः श्लोकः ।

असाधना अपि प्राज्ञा बुद्धिमन्तो बहुश्रुताः ।
साधयन्त्याशु कार्य्याणि काकाखुमृगकूर्मवत् ॥ १ ॥

तद्यथा अनुश्रूयते ।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम् । तस्य न अतिदूरस्थो महोच्छ्रायवान् नानाविहङ्गोपभुक्तफलः (ग) कीटैः आवृतकोटरः छायाश्वासितपथिकजनसमूहो न्यग्रोधपादपो (घ) महान् । अथवा युक्तम् ।

छायासुप्तमृगः शकुन्तनिवहैर्विष्वग् विलुप्तच्छदः
कीटैरावृतकोटरः कपिकुलैः स्कन्धे कृतप्रश्रयः ।
विश्रब्धं मधुपैर्निपीतकुसुमः श्लाघ्यः स एव द्रुमः
सर्वाङ्गैर्बहुसत्त्वसङ्गसुखदो भूभारभूतोऽपरः ॥ २ ॥

---

असाधना इति । असाधनाः निरुपाया अपि प्राज्ञाः विद्वांसः बुद्धिमन्तः बहुश्रुताः बहुशास्त्रदर्शिनः श्रुतसंसारवृत्तान्ता वा काकाखुमृगकूर्मवत् काकमूषिकमृगकच्छपा इव आशु शीघ्रं कार्य्याणि साधयन्ति ॥ १ ॥

(ग) महोच्छ्रायवान् महोन्नतः । नानेति । नानाविहङ्गैः बहुपक्षिभिः उपभुक्तानि फलानि यस्य तथाविधः ।

(घ) न्यग्रोधपादपः वटवृक्षः ।

छायेति । यः छायासु सुप्ता मृगा यस्य तथोक्तः, विष्वक् समन्तात् शकुन्तनिवहैः पक्षिसङ्घैः विलुप्ताः भक्षिताः छदाः पत्राणि यस्य तथाविधः, कीटैः क्षुद्रजीवविशेषैः आवृतानि व्याप्तानि कोटराणि यस्य तादृशः, कपिकुलैः वानरवृन्दैः

तत्र च लघुपतनको नाम वायसः प्रतिवसति स्म। स कदाचित् प्राणयात्रार्थं पुरम् (ङ) उद्दिश्य प्रचलितो यावत् पश्यति तावत् जालहस्तोऽतिकृष्णतनुः स्फुटितचरण ऊर्द्ध्वकेशो यमकिङ्कराकारो (च) नरः सम्मुखो बभूव। अथ तं दृष्ट्वा शङ्कितमना व्यचिन्तयत्। यदयं दुरात्मा अद्य मम आश्रय-वटपादपसम्मुखोऽभ्येति। तन्न ज्ञायते किम् अद्य वटवासिनां विहङ्गमानां सङ्क्षयो भविष्यति न वा। एवं बहुविधं विचिन्त्य तत्क्षणान्निवृत्य तमेव वटपादपं गत्वा सर्वान् विहङ्गमान् प्रोवाच, भो! अयं दुरात्मा लुब्धको जालतण्डुलहस्तः सम-भ्येति। तत् सर्वथा तस्य न विश्वसनीयम्। एष जालं प्रसार्य तण्डुलान् प्रक्षेप्स्यति। ते तण्डुला भवद्भिः सर्वैरपि कालकूटसदृशा द्रष्टव्याः। एवं वदतस्तस्य स लुब्धकस्तत्र वटतले आगत्य जालं प्रसार्य्य सिन्दुवारसदृशान् तण्डुलान् प्रक्षिप्य न अतिदूरं गत्वा निभृतः स्थितः। अथ ये पक्षिणः तत्र स्थितास्ते लघुपतनकवाक्यार्गलया (छ) निवारितास्तान् तण्डु-लान् हालाहलाङ्कुरान् इव वीक्षमाणा निभृताः (ज) तस्थुः।

---

स्कन्धे क्रान्तः प्रश्रयः प्रकर्षेणाश्रयो यस्य तादृशः, मधुपैः भ्रमरैः विश्रब्धं निःशङ्कं निर्जनत्वादिति भावः निपीतानि निःशेषेण पीतमधूनि कुसुमानि तस्य तथोक्तः तथा सर्वैः अङ्गैः शाखाप्रशाखादिभिः बहूनां सत्वानां प्राणिनां सङ्गे संसर्गे आश्रयणे इत्यर्थः सुखदः, स एव द्रुमः वृक्षः श्लाघ्यः प्रशस्यः, अपरः एतद्व्यतिरिक्तः भुवः पृथिव्या भारभूतः भारस्वरूपः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २ ॥

(ङ) पुरं नगरम्।

(च) स्फुटितचरणः क्षतचरणतलः। यमकिङ्कराकारः यमदूतसदृशः।

(छ) लघुपतनकेति। लघु क्षिप्रं पतनम् उड्डयनं यस्य तस्य तदाख्यस्य इत्यर्थः काकस्य वाक्यमेव अर्गला द्वारावरोधकदण्डविशेषः तया।

(ज) वीक्षमाणाः पश्यन्तः। निभृताः निस्तब्धाः।

अत्रान्तरे चित्रग्रीवो नाम कपोतराजः सहस्रपरिवारः प्राणयात्रार्थं परिभ्रमन् तान् तण्डुलान् दूरतोऽपि पश्यन् लघुपतनकेन निवार्य्यमाणोऽपि जिह्वालौल्यात् भक्षणार्थम् अपतत् सपरिवारो निबद्धश्च। साधु इदमुच्यते।

जिह्वालौल्यप्रसक्तानां जलमध्यनिवासिनाम्।
अचिन्तितो बधोऽज्ञानां मीनानामिव जायते॥ ३॥

अथवा दैवप्रतिकूलतया भवति एवं, न तस्य दोषोऽस्ति, उक्तञ्च,

पौलस्त्यः कथमन्यदारहरणे दोषं न विज्ञातवान्?
रामेणापि कथं न हेमहरिणस्यासम्भवो लक्षितः?
अक्षैश्चापि युधिष्ठिरेण सहसा प्राप्तो ह्यनर्थः कथं?
प्रत्यासन्नविपत्तिमूढ़मनसां प्रायो मतिः क्षीयते॥ ४॥

तथाच, कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि॥ ५॥

---

जिह्वेति। जिह्वाया लौल्यं चापल्यं तस्मिन् प्रसक्तानाम् आसक्तानाम् अतिलुब्धानाम् इत्यर्थः अज्ञानां जलमध्यनिवासिनां मीनानां मत्स्यानामिव अचिन्तितः अतर्कितः बधः जायते॥ ३॥

पौलस्त्य इति। पौलस्त्यः पुलस्तस्यापत्यं पुमान् पौलस्त्यः पुलस्त्यकुलोत्पन्न इति यावत् रावण इत्यर्थः कथम् अन्यदारहरणे परस्त्रीहरणे दोषं न विज्ञातवान्? अपि तु विज्ञातवान् इत्यर्थः। रामेणापि हेमहरिणस्य काञ्चनमृगस्य असम्भवः कथं न लक्षितः? अपि तु लक्षित एव इत्यर्थः। युधिष्ठिरेणापि अक्षैः द्यूतैः कथं सहसा अनर्थः प्राप्तः? अर्थान्तरेण पूर्वोक्तं द्रढ़यति। प्रत्यासन्नेति। प्रत्यासन्नया विपत्त्या मूढ़ं मनो येषां तादृशानां मतिः प्रायः क्षीयते विनश्यति। अर्थान्तरन्यासोऽलङ्कारः। शार्दूलविक्रीड़ितं वृत्तम्॥ ४॥

कृतान्तेति। कृतान्तस्य यमस्य पाशेन बद्धानां दैवेन उपहतं चेतः चित्तं येषां तादृशानां महतामपि बुद्धयः कुब्जगामिन्यः प्रतिकूला भवन्ति॥ ५॥

अत्रान्तरे लुब्धकस्तान् बद्धान् विज्ञाय प्रहृष्टमनाः प्रोद्यतयष्टिः (झ) तद्वधार्थं प्रधावितः। चित्रग्रीवोऽपि आत्मानं सपरिवारं बद्धं मत्वा लुब्धकमायान्तं दृष्ट्वा तान् कपोतान् ऊचे। अहो! न भेतव्यम्, उक्तञ्च,

व्यसनेष्वेव सर्वेषु यस्य बुद्धिर्न हीयते।
स तेषां पारमभ्येति तत् प्रभावादसंशयम्॥ ६॥

सम्पत्तौ च विपत्तौ च महतामेकरूपता।
उदये सविता रक्तो रक्तश्चास्तमये तथा॥ ७॥

तत्सर्वे वयं हेलया उड्डीय सपाशजालाः अस्य अदर्शनं गत्वा मुक्तिं प्राप्नुमः, नो चेत् भयविक्लवाः सन्तो हेलया समुत्पातं (ञ) न करिष्यथ ततो मृत्युमवाप्स्यथ। उक्तञ्च,

तन्तवोऽप्यायता नित्यं तन्तवो बहुलाः समाः।
बहून् बहुत्वादायासान् सहन्तीत्युपमा सताम्॥ ८॥

तथानुष्ठिते लुब्धको जालमादाय आकाशे गच्छतां तेषां

---

(झ) प्रोद्यतयष्टिः उत्क्षिप्तलगुडः।

व्यसनेष्विति। सर्वेषु व्यसनेषु विपत्सु यस्य बुद्धिः न हीयते न भ्रश्यति, सः तत्प्रभावात् तस्याः बुद्धेः प्रभावात् असंशयं निःसंशयं यथा तथा तेषां व्यसनानां पारम् अभ्येति प्राप्नोति विपद्भ्य उत्तीर्य्यते इति भावः॥ ६॥

सम्पत्ताविति। सम्पत्तौ च विपत्तौ च महताम् एकरूपता एकभावः न भावान्तरमिति भावः। तथाहि सविता सूर्य्यः उदये रक्तः, तथा अस्तमये च रक्तः न तु उदयास्तमययोर्वैरूप्यमिति भावः॥ ७॥

(ञ) मुक्तिं त्राणम्। हेलया अवज्ञया। समुत्पातम् उड्डयनम्॥

तन्तव इति। नित्यं सततम् आयताः विस्तीर्णाः दीर्घा वा तथा बहुलाः प्रभूताः समाः तुल्यरूपा तन्तवः सूत्राणि बहुत्वात् बहुसंख्यकत्वात् बहून् आयासान् सहन्ति इति सतां साधूनाम् उपमा निदर्शनम्। यथा सूत्राणि बहूनि मिलितानि कार्य्यं साधयन्ति तथा महान्तोऽपि मिलिताः स्वकार्य्यं साधयन्ति इति भावः॥ ८॥

पृष्ठतो भूमिष्ठोऽपि पर्य्यधावत्। तत ऊर्द्ध्वाननः श्लोकमिमम् अपठत्।

जालमादाय गच्छन्ति संहताः पक्षिणोऽप्यमी।
यावच्च विवदिष्यन्ते पतिष्यन्ति न संशयः॥ ९॥

लघुपतनकोऽपि प्राणयात्राक्रियां त्यक्त्वा किमत्र भविष्यतीति कुतूहलात् तत्पृष्ठलग्नोऽनुसरति। अथ दृष्टेः अगोचरतां गतान् विज्ञाय लुब्धको निराशः श्लोकमपठन् निवृत्तश्च।

न हि भवति यन्न भाव्यं भवति च भाव्यं यत्नेन।
करतलगतमपि नश्यति यस्य हि भवितव्यता नास्ति॥१०॥

तथा च, पराङ्मुखे विधौ चेत् स्यात् कथञ्चित् द्रविणोदयः।
तत्सोऽन्यदपि संगृह्य याति शङ्खनिधिर्यथा॥ ११॥

तदास्तां तावत् विहङ्गामिषलोभो यावत् कुटुम्बवर्त्तनोपायभूतं (ट) जालमपि मे नष्टम्। चित्रग्रीवोऽपि लुब्ध-

---

जालमिति। अमी पक्षिणः संहताः मिलिताः सन्तः जालमादाय गच्छन्ति, यावच्च विवदिष्यन्ते परस्परमिति शेषः तदा पतिष्यन्ति न संशयः सन्देहो नास्ति इत्यर्थः॥ ९॥

न हीति। यत् न हि भवति, तेन न भाव्यं नैव भवितव्यम् इत्यर्थः यच्च भवति, तेन यत्नतः भाव्यञ्च भवितव्यमेव च। यस्य भवितव्यता भाग्यम् इत्यर्थः नास्ति तस्य करतलगतमपि हस्तस्थमपि नश्यति। आर्य्यावृत्तम्॥ १०॥

पराङ्मुखे इति। विधौ दैवे पराङ्मुखे विमुखे सति चेत् यदि कथञ्चित् अतिकष्टेन द्रविणोदयः धनलाभः स्यात् तत् तदा सः द्रविणोदयः अन्यत् पूर्वसञ्चितमपि संगृह्य शङ्खनिधिर्यथा याति नश्यति। शङ्खनिधिलाभे हि पूर्वार्जितमपि नश्यतीति बोध्यम्॥ ११॥

(ट) विहङ्गामिषलोभः पक्षिमांसलोभः। कुटुम्बेति। कुटुम्बानां परिवाराणां वर्त्तनं जीविका तस्य उपायभूतम् उपायस्वरूपम्।

कम् अदर्शनीभूतं ज्ञात्वा तान् उवाच। भो! निवृत्तः स दुरात्मा लुब्धकः। तत्सर्वैरपि स्वस्थैर्गम्यतां महिलारोप्यस्य प्रागुत्तरदिग्भागे। तत्र मम सुहृत् हिरण्यको नाम मूषकः, सर्वेषां पाशच्छेदं (ठ) करिष्यति। उक्तञ्च,

सर्वेषामेव मर्त्यानां व्यसने समुपस्थिते।
वाङ्मात्रेणापि साहाय्यं मित्रादन्यो न सन्दधे॥ १२॥

एवं ते कपोताः चित्रग्रीवेण सम्बोधिता महिलारोप्ये नगरे हिरण्यकविलदुर्गं प्रापुः। हिरण्यकोऽपि सहस्रमुख-विलदुर्गं प्रविष्टः सन् अकुतोभयः सुखेन आस्ते, अथवा साधु इदमुच्यते।

अनागतं भयं दृष्ट्वा नीतिशास्त्रविशारदः।
अवसत् मूषकस्तत्र कृत्वा शतमुखं विलम्॥ १३॥
दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
सर्वेषां जायते वश्यो दुर्गहीनस्तथा नृपः॥ १४॥

तथा च, न गजानां सहस्रेण न च लक्षेण वाजिनाम्।
तत् कर्म सिध्यते राज्ञां दुर्गेणैकेन यत् रणे॥ १५॥

---

(ठ) पाशच्छेदं बन्धनकर्त्तनम्।

सर्वेषामिति। सर्वेषामेव मर्त्यानां व्यसने विपदि समुपस्थिते सति मित्रात् सुहृदः अन्यः अपरः वाङ्मात्रेण वचनमात्रेणापि साहाय्यं न सन्दधे न करोति इत्यर्थः अतीतप्रयोग आर्ष इति बोध्यम्॥ १२॥

अनागतमिति। नीतिविशारदः नीतिशास्त्रनिपुणः मूषकः अनागतम् आगामि इत्यर्थः भयं दृष्ट्वा विविच्य शतमुखं विलं कृत्वा तत्र अवसत्॥ १३॥

दंष्ट्रेति। यथा दंष्ट्राविरहितः दन्तहीनः सर्पः यथा च मदहीनो गजः सर्वेषां वश्यो भवति, तथा दुर्गहीनो नृपः सर्वेषां वश्यो भवतीत्यनुषङ्गः॥ १४॥

नेति। एकेन दुर्गेण रणे राज्ञां यत् कर्म सिध्यते निष्पाद्यते, गजानां सहस्रेण तत् कर्म न, वाजिनाम् अश्वानां लक्षेण च न सिध्यते इत्यनुषङ्गः॥ १५॥

शतमेकोऽपि सन्धत्ते प्राकारस्थो धनुर्धरः ।
तस्मात् दुर्गं प्रशंसन्ति नीतिशास्त्रविदो जनाः ॥१६॥

अथ चित्रग्रीवो बिलमासाद्य तारस्वरेण प्रोवाच, भो भो मित्र हिरण्यक ! सत्वरम् आगच्छ। महती मे व्यसनावस्था (ङ) वर्त्तते। तच्छ्रुत्वा हिरण्यकोऽपि बिलदुर्गान्तर्गतः सन् प्रोवाच, भोः ! को भवान् ? किमर्थमायातः ? किं कारणम् ? कीदृक् ते व्यसनावस्थानम् ? तत् कथ्यतामिति। तच्छ्रुत्वा चित्रग्रीव आह, भोः ! चित्रग्रीवो नाम कपोतराजोऽहं ते सुहृत्। तत् सत्वरम् आगच्छ, गुरुतरं प्रयोजनम् अस्ति। तत् आकर्ण्य पुलकिततनुः प्रहृष्टात्मा स्थिरमनाः त्वरमाणो निष्क्रान्तः। अथवा साधु इदमुच्यते।

सुहृदः स्नेहसम्पन्ना लोचनानन्ददायिनः ।
गृहे गृहवतां नित्यं नागच्छन्ति महात्मनाम् ॥१७॥

आदित्यस्योदयं तात ! ताम्बूलं भारती कथा ।
इष्टा भार्य्या सुमित्रं च अपूर्वाणि दिने दिने ॥१८॥

सुहृदो भवने यस्य समागच्छन्ति नित्यशः ।
चित्ते च तस्य सौख्यस्य न किञ्चित् प्रतिमं सुखम् ॥१९॥

---

शतमिति। एकोऽपि प्राकारस्थः दुर्गप्राचीरस्थः धनुर्धरः शतं योधं सन्धत्ते शोधयति इत्यर्थः तस्मात् नीतिशास्त्रविदो जनाः दुर्गं प्रशंसन्ति ॥ १६ ॥

(ङ) व्यसनावस्था विपदवस्था ।

सुहृद इति। स्नेहसम्पन्नाः स्निग्धाः लोचनानन्ददायिनः नेत्रानन्दप्रदाः सुहृदः महात्मनां गृहवतां गृहिणां गृहे नित्यं न आगच्छन्ति कदाचिदागच्छन्ति इत्यर्थः तस्मात् तेषां परिचर्य्या अवश्यं कर्त्तव्या इति भावः ॥ १७ ॥

आदित्यस्येति। हे तात ! आदित्यस्य उदयः सूर्य्योदयः, ताम्बूलं भारती कथा महाभारतकथा इत्यर्थः इष्टा प्रिया भार्य्या तथा सुमित्रम् एतानि दिने दिने अपूर्वाणि नवानि इव प्रीतिकराणि इति भावः ॥ १८ ॥

अथ चित्रग्रीवं सपरिवारं पाशबद्धमालोक्य हिरण्यकः सविषादम् इदमाह। भोः किमेतत् ? स आह, भो ! जानन्नपि किं पृच्छसि ? उक्तञ्च यतः,

यस्माच्च येन च यदा च यथा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तदा च तथा च तच्च
तावच्च तत्र च कृतान्तवशादुपैति ॥ २० ॥

तत् प्राप्तं मया एतद् बन्धनं जिह्वालौल्यात। साम्प्रतं त्वं सत्वरं पाशविमोक्षं कुरु। तत् आकर्ण्य हिरण्यकः प्राह,

अर्द्धार्द्धाद् योजनशतादामिषं वीक्षते खगः।
सोऽपि पार्श्वस्थितं दैवात् बन्धनं न च पश्यति ॥ २१ ॥

तथाच, रविनिशाकरयोर्ग्रहपीड़नं
गजभुजङ्गविहङ्गमबन्धनम्।

---

सुहृद इति। यस्य भवने सुहृदः नित्यशः सततं समागच्छन्ति, तस्य चित्ते मनसि जातस्येति शेषः सौख्यस्य सुखसन्तानस्य प्रतिमं तुल्यं सुखं किञ्चित् न अस्ति इति शेषः ॥ १९ ॥

यस्मादिति। कृतान्तवशात् दैववशात्, यस्मात् प्रदेशात् च येन कारणेन च यदा यस्मिन् काले च यथा च यादृशञ्च यावच्च यत्परिमितञ्च यत्र च यस्मिन् लोके च यच्च शुभाशुभम् आत्मकर्म जातमिति शेषः, तस्माच्च देशात् तेन च कारणेन च तदा च तस्मिन् काले च तथा च तादृशञ्च तत्परिमितञ्च तत्र च तस्मिन् लोके च तच्च शुभमशुभं वा आत्मकर्म उपैति उपगच्छति। वसन्ततिलकं वृत्तम् ॥ २० ॥

अर्द्धार्द्धादिति। खगः पक्षी अर्द्धार्द्धात् योजनशतात् आमिषं भोग्यं वस्तु वीक्षते पश्यति। किन्तु सोऽपि खगः दैवात् दौर्भाग्यात् पार्श्वस्थितं बन्धनं बन्धनहेतुम् इत्यर्थः नच पश्यति ॥ २१ ॥

रवीति। रविनिशाकरयोः सूर्याचन्द्रमसोः ग्रहेण राहुणा पीड़नं गजानां

मतिमतां च निरीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ २२ ॥

तथाच, व्योमैकान्तविचारिणोऽपि विहगाः सम्प्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलात् मीनाः समुद्रादपि ।
दुर्णीतं किमिहास्ति ? किं च सुकृतं ? कः स्थानलाभे गुणः ?
कालः सर्वजनान् प्रसारितकरो गृह्णाति दूरादपि ॥ २३ ॥

एवमुक्त्वा चित्रग्रीवस्य पाशं छेत्तुम् उद्यतं स तमाह । भद्र ! मा मैवं कुरु, प्रथमं मम भृत्यानां पाशच्छेदं कुरु तदनु ममापि च । तच्छ्रुत्वा कुपितो हिरण्यकः प्राह । भो ! न युक्तमुक्तं भवता यतः स्वामिनोऽनन्तरं भृत्याः । स आह, भद्र ! मा मैवं वद, मदाश्रयाः सर्वे एते वराकाः, (ढ) अपरं स्वकुटुम्बं परित्यज्य समागताः । तत् कथम् एतावन्मात्रमपि सम्मानं न करोमि । उक्तञ्च,

---

भुजङ्गानां विहङ्गमानाञ्च बन्धनं जालपतनं मतिमतां बुद्धिमताञ्च दरिद्रतां वीक्ष्य दृष्ट्वा विधिर्दैवम् इत्यर्थः । विधिर्विधाने दैवे च इत्यमरः । बलवान् इति मे मम मतिः बुद्धिः विद्यते इति शेषः । अहो आश्चर्य्यम् । द्रुतविलम्बितं वृत्तं द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥ २२ ॥

व्योमैकान्तेति । विहगाः पक्षिणः व्योमैकान्तविचारिणः आकाशैकदेशगामिनोऽपि आपदं सम्प्राप्नुवन्ति । निपुणैः जनैः अगाधसलिलात् समुद्रादपि मीनाः मत्स्याः बध्यन्ते ध्रियन्ते । इह जगति दुर्णीतं दुर्णयः किम् अस्ति ? नास्ति इत्यर्थः, सुकृतञ्च किमस्तीति शेषः न किमपि इत्यर्थः, स्थानलाभे उत्तमस्थानप्राप्तौ च कः गुणः ? उपकारः ? न कोऽपि इत्यर्थः । कालः प्रसारितकरः हस्तौ प्रसार्य्येत्यर्थः दूरादपि सर्वजनान् गृह्णाति आकर्षति समय एव बलावलं करोति नात्र पुरुषदोष इति भावः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २३ ॥

(ढ) मदाश्रयाः मन्नाथाः । एते कपोताः । वराकाः दीनाः ।

य: सम्मानं सदा धत्ते भृत्यानां क्षितिपोऽधिकम् ।
वित्ताभावेऽपि तं दृष्ट्वा ते त्यजन्ति न कर्हिचित् ॥२४॥

तथाच, विश्वासः सम्पदां मूलं तेन यूथपतिर्गजः ।
सिंहो मृगाधिपत्येऽपि न मृगैः परिवार्य्यते ॥२५॥

अपरं मम कदाचित् पाशच्छेदं कुर्वतस्ते दन्तभङ्गो भवति। अथवा दुरात्मा लुब्धकः समभ्येति। तत् नूनं मम नरकपात एव। उक्तञ्च,

सदाचारेषु भृत्येषु संसीदत्सु च यः प्रभुः ।
सुखी स्यात् नरकं याति परत्रेह च सीदति ॥ २६ ॥

तत् श्रुत्वा प्रहृष्टो हिरण्यकः प्राह। भो! वेद्मि अहं राजधर्म्मम्। परं मया तव परीक्षा कृता। तत् सर्वेषां पूर्वं पाशच्छेदं करिष्यामि। भवानपि अनेन विधिना बहुकपोत-परिवारो भविष्यति, उक्तञ्च,

कारुण्यं संविभागश्च यस्य भृत्येषु सर्वदा ।
सम्भवेत् स महीपालस्त्रैलोक्यस्यापि रक्षणे ॥२७॥

---

य इति। यः क्षितिपः राजा सदा भृत्यानाम् अधिकं सन्मानं धत्ते करोति इत्यर्थः ते भृत्याः वित्ताभावेऽपि धनाभावेऽपि तस्येति शेषः तं क्षितिपं दृष्ट्वा कर्हिचित् कदाचित् न त्यजन्ति। चिरमनुरक्तास्तिष्ठन्तीति भावः ॥ २४ ॥

विश्वास इति। विश्वासः अयमस्माकं राजेति प्रत्ययः सम्पदां मूलं कारणं तेन विश्वासेन गजः यूथपतिः तथा सिंहः मृगाधिपत्येऽपि स्थित इति शेषः मृगैः न परिवार्य्यते। परं गजानामयमस्माकं पतिरिति मृगाणाञ्च अयमस्माकं पतिरिति गजे सिंहे च प्रत्ययोऽस्ति तेन तयोरधिपतित्वमक्षतम् अन्यथा न किमपीति भावः ॥ २५ ॥

सदेति। यः प्रभुः सदाचारेषु अनुरक्तेष्वित्यर्थः भृत्येषु संसीदत्सु विपद्यमानेषु सुखी स्यात् स परत्र परलोके नरकं याति गच्छति इह च अस्मिन् लोके च सीदति कष्टं प्राप्नोति च ॥ २६ ॥

कारुण्यमिति। यस्य भृत्येषु सर्वदा कारुण्यं दया संविभागश्च सम्यक् विभज्य

एवमुक्त्वा सर्वेषां पाशच्छेदं कृत्वा हिरण्यकः चित्रग्रीवमाह । मित्र ! गम्यताम् अधुना स्वाश्रयं प्रति, भूयोऽपि व्यसने प्राप्ते समागन्तव्यम् । इति तान् संप्रेष्य पुनरपि दुर्गं प्रविष्टः । चित्रग्रीवोऽपि सपरिवारः स्वाश्रयम् अगमत् । अथवा साधु इदमुच्यते,

मित्रवान् साधयत्यर्थान् दुःसाध्यानपि वै यतः ।
तस्मान्मित्राणि कुर्वीत समानान्येव चात्मनः ॥२८॥

लघुपतनकोऽपि वायसः सर्वं तं चित्रग्रीवबन्धमोक्षम् अवलोक्य विस्मितमना व्यचिन्तयत् । अहो ! बुद्धिः अस्य हिरण्यकस्य शक्तिश्च दुर्गसामग्री (थ) च तत् ईदृगेव विधिः विहङ्गानां बन्धनमोक्षात्मकः । अहं च न कस्यचित् विश्वसिमि चलप्रकृतिश्च (त) । तथापि एनं मित्रं करोमि । उक्तञ्च, अपि सम्पूर्णतायुक्तैः कर्त्तव्याः सुहृदो बुधैः ।
नदीशः परिपूर्णोऽपि चन्द्रोदयमपेक्षते ॥ २९ ॥

एवं सम्प्रधार्य्य पादपादवतीर्य्य बिलद्वारम् आश्रित्य चित्रग्रीववच्छब्देन हिरण्यकं समाहूतवान् । एहि एहि भो

---

व्यवस्थापनञ्च स्यादिति शेषः स महीपालः त्रैलोक्यस्यापि रक्षणे सम्भवेत् समर्थो भवेद् इत्यर्थः ॥ २७ ॥

मित्रवानिति । यतः यस्मात् हेतोः मित्रवान् जनः दुःसाध्यानपि अशक्यानपि अर्थान् साधयति सम्पादयति, तस्मात् आत्मनः समानानि एव मित्राणि कुर्वीत ॥ २८ ॥

(थ) दुर्गसामग्री दुःखतारणोपायनिचयः ।

(त) चलप्रकृतिः चञ्चलस्वभावः ।

अपीति । सम्पूर्णतायुक्तैः सर्वसम्पत्परिपूर्णैरपि बुधैः विद्वद्भिः सुहृदः मित्राणि कर्त्तव्याः । नदीशः समुद्रः परिपूर्णोऽपि चन्द्रोदयम् अपेक्षते आकाङ्क्षति समधिकपूर्णताश्रयादिति भावः ॥ २९ ॥

हिरण्यक ! एहि। तच्छब्दं श्रुत्वा हिरण्यको व्यचिन्तयत्। किमन्योऽपि कश्चित् कपोतो बन्धनशेषः (थ) तिष्ठति येन मां व्याहरति। आह च, भोः को भवान् ? स आह, अहं लघुपतनको नाम वायसः। तत् श्रुत्वा विशेषादन्तर्लीनो हिरण्यक आह, भो ! द्रुतं गम्यतां अस्मात् स्थानात्, वायस आह, तव पार्श्वं गुरुकार्य्येण समागतः, तत् किं न क्रियते मया सह दर्शनम्, हिरण्यक आह, न मेऽस्ति त्वया सह सङ्गमेन प्रयोजनमिति। स आह, भोः ! चित्रग्रीवस्य मया तव सकाशात् पाशमोचणं दृष्टम् तेन मम महती प्रीतिः सञ्जाता। तत् कदाचित् ममापि बन्धने जाते तव पार्श्वात् मुक्तिर्भविष्यति। तत् क्रियतां मया सह मैत्री। हिरण्यक आह, अहो ! त्वं भोक्ता। अहं ते भोज्यभूतः। तत् का त्वया सह मम मैत्री ? तत् गम्यतां, मैत्री विरोधभावात् कथम् ? (द)। उक्तञ्च,

ययोरेव समं वित्तं ययोरेव समं कुलम् ।
तयोर्मैत्री विवाहश्च न तु पुष्टविपुष्टयोः ॥ ३० ॥

तथाच, यो मित्रं कुरुते मूढ़ आत्मनोऽसदृशं कुधीः ।
हीनं वाप्यधिकं वापि हास्यतां यात्यसौ जनः ॥३१॥

---

(थ) बन्धनशेषः बद्धावशिष्टः ।

(द) मैत्री सौहृद्यं विरोधभावात् कथं सम्भवतीति शेषः। न सम्भवति इत्यर्थः ।

ययोरिति। ययोरेव वित्तं धनं समं ययोरेव कुलं वंशः समं, तयोरेव मैत्री विवाहश्च परस्परं सङ्गच्छते इति शेषः पुष्टविपुष्टयोः विरुद्धयोर्न सङ्गच्छते इत्यनुषङ्गः ॥ ३० ॥

य इति। यः कुधीः दुर्बुद्धिः मूढ़ो जनः आत्मनः असदृशं हीनं वा अधिकं वापि मित्रं कुरुते, असौ हास्यतां याति ॥ ३१ ॥

तत् गम्यतामिति। वायस आह, भो हिरण्यक ! एषोऽहं तव दुर्गद्वारे उपविष्टः। यदि त्वं मैत्रीं न करोषि ततोऽहं प्राणमोचणं तवाग्रे करिष्यामि। अथवा प्रायोपवेशनं मे स्यात् इति। हिरण्यक आह, भोः! त्वया वैरिणा सह कथं मैत्रीं करोमि ? उक्तञ्च,

वैरिणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ ३२ ॥

वायस आह, भोः! त्वया सह दर्शनमपि नास्ति कुतो वैरम् ? तत् किमनुचितं वदसि, हिरण्यक आह, द्विविधं वैरं भवति सहजं कृत्रिमञ्च। तत् सहजवैरी (ध) त्वम् अस्माकम् उक्तञ्च,

कृत्रिमं नाशमभ्येति वैरं द्राक् कृत्रिमैर्गुणैः।
प्राणदानं विना वैरं सहजं याति न चयम् ॥ ३३ ॥

वायस आह, भो! द्विविधस्य वैरस्य लचणं श्रोतुमिच्छामि। तत् कथ्यताम्। हिरण्यक आह, भोः! कारणेन निर्वृत्तं कृत्रिमम्। तत्तदर्होपकारकरणाद्गच्छति। स्वाभाविकं पुनः कथमपि न गच्छति। तद्यथा नकुलसर्पाणां, शष्पभुङ्नखायुधानां, जलवह्न्योः, देवदैत्यानां, सारमेयमार्जा-

---

वैरिणेति। सुश्लिष्टेनापि सुघटितेनापि सन्धिना नियमेन वैरिणा शत्रुणा सह न हि सन्दध्यात् नैव सन्धिं कुर्य्यात्। सुतप्तमपि पानीयं जलं पावकम् अग्निं शमयत्येव ॥ ३२ ॥

(ध) सहजवैरी स्वभावशत्रुः।

कृत्रिममिति। कृत्रिमं कार्य्यजातं वैरं कृत्रिमैः कार्य्यभूतैः गुणैः उपकारादिभिरित्यर्थः द्राक् झटिति नाशम् अभ्येति प्राप्नोति। सहजं स्वाभाविकं वैरं प्राणदानं विना आजीवनमिति भावः चयं न याति ॥ ३३ ॥

राणाम्, ईश्वरदरिद्राणां, सपत्नीनां, लुब्धकहरिणानां श्रोत्रिय-भ्रष्टक्रियाणां, (न) मूर्खपण्डितानां, पतिव्रताकुलटानां, सज्जनदुर्जनानाम्। न कश्चित् केनापि व्यापादितः, तथापि प्राणान् सन्तापयन्ति (प)।

वायस आह, कारणान्मित्रतां याति कारणादेति शत्रुताम्।
तस्मान्मित्रत्वमेवात्र योज्यं वैरं न धीमता ॥ ३४ ॥

तस्मात् कुरु मया सह समागमं मित्रधर्मार्थम्। हिरण्यक आह, भोः! श्रूयतां नीतिसर्वस्वम् (फ)।

सकृद्दुष्टमपीष्टं यः पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३५ ॥

अथवा गुणवान् अहं न मे कश्चित् वैरयातनां (ब) करिष्यति एतदपि न सम्भाव्यम्। उक्तञ्च,

सिंहो व्याकरणस्य कर्त्तुरहरत्प्राणान् प्रियान् पाणिनेः
मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्।

---

(न) शष्पभुङ्नखायुधानां तृणभोजिश्वापदानाम्। सारमेयमार्जाराणां कुक्कुरविड़ालानाम्। ईश्वरदरिद्राणां धनिदुर्गतानाम्। लुब्धकहरिणानां व्याधमृगाणाम्। श्रोत्रियभ्रष्टक्रियाणां सदाचारासदाचाराणाम्।

(प) नेति। एतेषां मध्ये केनापि कश्चित् व्यापादितः विनाशितः न यद्यपि, तथापि एते परस्परं प्राणान् सन्तापयन्ति।

कारणादिति। जनः कारणात् मित्रतां याति गच्छति, कारणात् शत्रुताञ्च एति गच्छति, तस्मात् अत्र संसारे धीमता बुद्धिमता जनेन मित्रत्वमेव योज्यं कर्त्तव्यं न वैरम् ॥ ३४ ॥

(फ) नीतिसर्वस्वं नीतिसारः।

सकृदिति। यः दुष्टमपि प्रियजनमपि सकृद्दुष्टं पुनः सन्धातुं सम्मेलयितुम् इच्छति सः अश्वतरी गर्भं यथा मृत्युम् उपगृह्णाति आश्रयति ॥ ३५ ॥

(ब) वैरयातनां वैरेण पीड़नम्।

छन्दोज्ञाननिधिं जघान मकरो वेलातटे पिङ्गलम्
अज्ञानावृतचेतसामतिरुषां कोऽर्थस्तिरश्चां गुणैः ? ॥२६॥
वायस आह, अस्त्येतत् तथापि श्रूयताम्,
उपकाराच्च लोकानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां मैत्री स्याद्दर्शनात्सताम् ॥३७॥
मृद्घट इव सुखभेद्यो दुःसन्धानश्च दुर्जनो भवति।
सुजनस्तु कनकघट इव दुर्भेदः सुकरसन्धिश्च ॥ ३८ ॥
इक्षोरग्रात् क्रमशः पर्वणि यथा रसविशेषः।
तद्वत् सज्जनमैत्री विपरीतानान्तु विपरीतता ॥३९॥
तथाच, आरम्भगुर्वी क्षयिणी क्रमेण
लघ्वी पुरा वृद्धिमती च पश्चात्।

---

सिंह इति। सिंहः व्याकरणस्य कर्त्तुः निरपराधस्यति भावः पाणिनेः मुनेः प्रियान् प्राणान अहरत। हस्ती मीमांसाकृतं मीमांसादर्शनकारिणं जैमिनिं मुनिं सहसा उन्ममाथ। मकरः जलजन्तुविशेषः वेलातटे जलान्तिके छन्दसां ज्ञाननिधिं छन्दः शास्त्रप्रणेतारम इत्यर्थः पिङ्गलं मुनिं जघान। अज्ञानावृतचेतसां मोहान्धचित्तानाम् अतिरुषाम् अतिकोपनानां तिरश्चां पशुपक्षिणां गुणैः कोऽर्थः ? न कोऽप्युपकार इत्यर्थः। दुर्जना अपराधानपराधौ न गणयन्तीति भावः ॥ ३६ ॥

उपकारादिति। लोकानां नराणाम उपकारात् परस्परोपकारकरणात् इत्यर्थः, मृगपक्षिणां निमित्तात् कुतश्चित् कारणात्. मूर्खाणां भयात् लोभाच्च तथा सतां साधूनां दर्शनात् परस्परावलोकनात मैत्री स्यात ॥ ३७ ॥

मृद्घट इति। दुर्जनः मृद्घट इव मृत्कलस इव सुखेन भेद्यः दुःसन्धानश्च अमेलनीयश्च भवति सुजनस्तु कनकघट इव काञ्चनकलस इव दुर्भेदः भेत्तुमशक्यः सुकरसन्धिश्च अक्लेशं सन्धेयश्च ॥ ३८ ॥

इक्षोरिति। इक्षोः अग्रात् अग्रमारभ्य पर्वणि पर्वणि यथा रसविशेषः रसस्य उत्कर्ष इत्यर्थः सज्जनमैत्री साधुसौहृद्यं तद्वत् क्रमशः सुरसमिति भावः विपरीतानान्तु दुर्जनानान्तु विपरीतता विपर्य्ययः प्रथमतः सौहृद्यं पश्चात् अतुलमिति भावः ॥ ३९ ॥

दिनस्य पूर्वार्द्धपरार्द्धभिन्ना
छायेव मैत्री खलसज्जनानाम् ॥ ४० ॥

तत् साधुरहम् अपरं त्वां शपथादिभिः निर्भयं करिष्यामि। स आह, न मे अस्ति ते शपथैः प्रत्ययः। उक्तञ्च,

शपथैः सन्धितस्यापि न विश्वासं व्रजेद्रिपोः।
श्रूयते शपथं कृत्वा वृत्रः शक्रेण सूदितः ॥ ४१ ॥
न विश्वासं विना शत्रुर्देवानामपि सिद्ध्यति।
विश्वासात्त्रिदशेन्द्रेण दितेर्गर्भो विदारितः ॥ ४२ ॥

अन्यच्च, बृहस्पतेरपि प्राज्ञस्तस्मान्नैवात्र विश्वसेत्।
य इच्छेदात्मनो वृद्धिमायुष्यञ्च सुखानि च ॥ ४३ ॥

---

आरम्भेति। खलानां सज्जनानाञ्च मैत्री दिनस्य पूर्वार्द्धपरार्द्धभिन्ना छायेव आरम्भगुर्वी क्रमेण क्षयिणी पुरा लघ्वी पश्चात् वृद्धिमती वर्द्धमाना च। यथा दिनपूर्वार्द्धच्छाया प्रथमं महती पश्चात् क्षयवती तथा खलस्य मैत्री। यथा दिनपरार्द्धच्छाया प्रथमं लघ्वी पश्चात् महती तथा सज्जनस्य मैत्रीति भावः ॥ ४० ॥

शपथैरिति। शपथैः दिव्यैः सन्धा प्रतिज्ञा जाता अस्येति सन्धितस्य कृतप्रतिज्ञस्य इत्यर्थः अस्य जाते इति इतप्रत्ययः। अपि रिपोः शत्रोः विश्वासं न व्रजेत् न गच्छेत् जन इति शेषः। शक्रेण इन्द्रेण शपथं कृत्वा नाहं ते द्रोहमाचरिष्यामीति प्रतिज्ञां कृत्वा वृत्रः सूदितः नाशितः श्रूयते। शत्रुप्रतारणार्थं देवा अपि शपथं कुर्वन्ति किमुत अपरे इति भावः ॥ ४१ ॥

नेति। विश्वासं विना देवानामपि शत्रुः न सिद्ध्यति न वश्यो भवति इत्यर्थः। विश्वासात् विश्वासमाश्रित्य त्रिदशेन्द्रेण देवराजेन दितेः विमातुः गर्भः स्वनिहन्तेति भावः विदारितः खण्डितः पुरा हिरण्यकशिपुशोकेन आर्त्ता दितिः स्वपुत्राणां रिपुमिन्द्रं हन्तुं तद्घातकं गर्भं धृतवती। देवराजोऽपि तदनुसन्धाय विमातुः परिचर्य्याच्छलेन सततं रन्ध्रान्वेषी एकदा दिवा शयानां दितिमवलोक्य तद्गर्भे प्रविष्टः गर्भस्थं जीवं खण्डयामास। खण्डितश्च स ऊनपञ्चाशद्विभक्तः पवनदेवत्वमगादिति पौराणिकी गाथा अत्र अनुसन्धेया ॥ ४२ ॥

तथाच, सुसूक्ष्मेणापि रन्ध्रेण प्रविश्याभ्यन्तरं रिपुः।
नाशयेच्च शनैः पश्चात् प्लवं सलिलपूरवत् ॥ ४४ ॥
न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ४५ ॥
न बध्यते ह्यविश्वस्तो दुर्बलोऽपि बलोत्कटैः।
विश्वस्तास्त्वाशु बध्यन्ते बलवन्तोऽपि दुर्बलैः ॥ ४६ ॥
सुकृत्यं विष्णुगुप्तस्य मित्राप्तिर्भार्गवस्य च।
बृहस्पतेरविश्वासो नीतिसन्धिस्त्रिधा स्थितः ॥४७॥
तथाच, महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्य्यासु सुविरक्तासु तदन्तं तस्य जीवितम् ॥ ४८ ॥

---

बृहस्पतेरपि इति। तस्मात् हेतोः यः आत्मनः वृद्धिम् आयुष्यं दीर्घजीवनं सुखानि च इच्छेत् सः प्रार्थयेत् अत्र संसारे बृहस्पतेरपि न विश्वसेत् ॥ ४३ ॥

सुसूक्ष्मेणेति। रिपुः शत्रुः सुसूक्ष्मेण अतिसूक्ष्मेण रन्ध्रेण शनैः क्रमेण अभ्यन्तरं प्रविश्य पश्चात् प्लवं नौकां सलिलपूरवत् जलप्रवाह इव नाशयेच्च। यथा अल्पेनापि छिद्रेण सलिलप्रवाहः नौकां क्रमेण प्रविश्य निमज्जयति तद्वत् शत्रुरपि केनचित् छलेन प्रविश्य नाशयतीति भावः॥ ४४ ॥

नेति। अविश्वस्ते जने न विश्वसेत्, विश्वस्तेऽपि न विश्वसेत्। विश्वासात् उत्पन्नं भयं मूलानि अपि निकृन्तति नाशयति ॥ ४५ ॥

नेति। दुर्बलोऽपि जनः अविश्वस्तः अकृतविश्वासः बलोत्कटैः प्रबलैः न बध्यते न हन्यते। बलवन्तोऽपि विश्वस्ताः कृतविश्वासाः सन्तः दुर्बलैः आशु शीघ्रं बध्यन्ते ॥ ४६ ॥

सुकृत्यमिति। त्रिधा त्रिप्रकारी नीतिसन्धिः नयसंयोगः भवतीति शेषः। विष्णुगुप्तस्य चाणक्यस्य इत्यर्थः सुकृत्यं सुष्ठु कार्य्यं कर्त्तव्यानुष्ठानम् इत्यर्थः, भार्गवस्य भृगुनन्दनस्य परशुरामस्य मित्राप्तिः मित्रलाभः बृहस्पतेः अविश्वासः विश्वासाकरणम्। चाणक्यमते सुनियमेन कार्य्यानुष्ठानं भार्गवमते मित्रलाभः बृहस्पतिमते कस्मिन्नपि अविश्वास एव नीतिरिति भावः ॥ ४७ ॥

महतेति। यः महतापि अर्थसारेण अर्थोत्कर्षेण अधिकधनलाभेनेति भावः

तच्छ्रुत्वा लघुपतनकोऽपि निरुत्तरः चिन्तयामास, अहो ! बुद्धिप्रागल्भ्यमस्य नीतिविषये । अथवा त एव अस्योपरि मैत्रीपक्षपातः । स आह, भो हिरण्यक !

सतां साप्तपदं मैत्रमित्याहुर्विबुधा जनाः ।
तस्मात्त्वं मित्रतां प्राप्तो वचनं मम तत् शृणु ॥४९॥

दुर्गस्थेनापि त्वया मया सह नित्यमेव आलापो गुणदोषसुभाषितगोष्ठीकथाः (भ) सर्वदा कर्त्तव्या यद्येवं न विश्वसिषि । तत् श्रुत्वा हिरण्यकोऽपि व्यचिन्तयत्, (म) विदग्धवचनोऽयं दृश्यते लघुपतनकः सत्यवाक्यश्च, तद्युक्तम् अनेन मैत्रीकरणम् । परं कदाचित् मम दुर्गे चरणपातोऽपि न कार्य्यः । उक्तञ्च,

भीतभीतः पुरा शत्रुर्मन्दं मन्दं विसर्पति ।
भूमौ प्रहेलया पश्चाज्जारहस्तोऽङ्गनास्विव ॥ ५० ॥

---

शत्रुषु तथा सुविरक्तासु भार्य्यासु विश्वसिति तस्य जीवितं तदन्तं तत्पर्य्यन्तं तेन विश्वासेनैव स विनश्यतीति भावः ॥ ४८ ॥

सतामिति । विबुधाः विद्वांसो जनाः सतां साधूनां साप्तपदं सप्तपदोच्चारणसाध्यं मैत्रम् इति आहुः कथयन्ति सप्तपदान्युपलक्षणानि बहुविध आलाप एव मैत्रलक्षणं तत् येन सह संवृत्तं स एव मित्रमिति भावः । तस्मात् त्वं मित्रतां प्राप्तः विविधालापवशादिति भावः । त्वं तस्मात् मम वचनं शृणु ॥ ४९ ॥

(भ) दुर्गस्थेन विलस्थेन । गुणेति । गुणाश्च दोषाश्च तेषां सुभाषितेन शोभनालापेन गोष्ठीकथाः सम्मिलनालापाः ।

(म) विदग्धवचनः विदग्धस्य पण्डितस्येव वचनं यस्य तथाभूतः सुवक्ता इत्यर्थः ।

भीतेति । शत्रुः पुरा पूर्वं भीतभीतः अतिभीतः सन् भूमौ मन्दं पश्चात् प्रहेलया प्रकृष्टेन विलासेन अङ्गनासु स्त्रीषु जारहस्त इव उपपतेः कर इव विसर्पति चलति । यथा जारः शनैः शनैः अभिलषणीयाम् अङ्गनां गात्रेषु स्पृशति पश्चात् प्रणये जाते स्वच्छन्दं हस्तं प्रसारयति तद्वत् शत्रुरपि प्रथमं मन्दं मन्दं प्रविश्य सर्वाङ्गं व्याप्नोतीति भावः ॥ ५० ॥

तच्छ्रुत्वा वायस आह, भद्र! एवं भवतु। ततः प्रभृति द्वौ तौ अपि सुभाषितगोष्ठीसुखमनुभवन्तौ तिष्ठतः। परस्परं कृतोपकारौ कालं नयतः। लघुपतनकोऽपि मांसशकलानि मेध्यानि बलिशेषाणि (य) अन्यानि वात्सल्याहृतानि (र) पक्वान्नविशेषाणि हिरण्यकार्थमानयति। हिरण्यकोऽपि तण्डुलान् अन्यांश्च भक्ष्यविशेषान् लघुपतनकार्थं रात्रौ आहृत्य तत्कालायातस्य अर्पयति। अथवा युज्यते द्वयोरपि एतत्। उक्तञ्च, ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।

भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥५१॥
नोपकारं विना प्रीतिः कथञ्चित् कस्यचिद्भवेत्।
उपयाचितदानेन यतो देवा अभीष्टदाः ॥ ५२ ॥
तावत् प्रीतिर्भवेल्लोके यावद्दानं प्रदीयते।
वत्सः क्षीरक्षयं दृष्ट्वा परित्यजति मातरम् ॥ ५३ ॥

---

(य) मांसशकलानि पिशितखण्डानि। मेध्यानि विशुद्धानि। बलिशेषाणि पूजावशिष्टानि।

(र) वात्सल्याहृतानि प्रेम्णा सञ्चितानि।

ददातीति। ददाति, प्रतिगृह्णाति, गुह्यं रहस्यम् आख्याति कथयति, पृच्छति, भुङ्क्ते भोजयते च एवं षड्विधं दानप्रतिग्रहगुह्यभाषणप्रश्नभोजनभोजनदानात्मकमिति भावः प्रीतिः प्रणयस्य लक्षणं चिह्नम् ॥ ५१ ॥

नोपकारमिति। उपकारं विना कस्यचित् कथञ्चित् प्रीतिः न भवेत्। यतः देवाः अपि अवाध्याहार्य्यः उपयाचितदानेन यदि मम पुत्रम् अस्मात् रोगात् मुक्तं करिष्यसि तदा तुभ्यमिदमभीष्टं दास्यामि इत्येवं देवतामुद्दिश्य सङ्कल्पितम् उपयाचितं तस्य दानेन अभीष्टदाः भवन्ति कामं ददति इत्यर्थः ॥ ५२ ॥

तावदिति। लोके तावत् प्रीतिः भवेत्, यावत् दानं प्रदीयते। तथाहि वत्सः गोशिशुः क्षीरक्षयं दुग्धह्रासं दृष्ट्वा क्षीरमप्राप्य इत्यर्थः मातरं जननीं परित्यजति ॥ ५३ ॥

पश्य दानस्य माहात्म्यं सद्यः प्रत्ययकारकम्।
यत् प्रभावादपि द्वेषी मित्रतां याति तत्क्षणात् ॥५४॥

पुत्रादपि प्रियतरं खलु तेन दानं
मन्ये पशोरपि विवेकविवर्जितस्य।
दत्ते खले नु निखिलं खलु येन दुग्धं
नित्यं ददाति महिषी ससुतापि पश्य ॥५५॥

किं बहुना, प्रीतिं निरन्तरां कृत्वा दुर्भेद्यां नखमांसवत्।
मूषको वायसश्चैव गतौ कृत्रिममित्रताम् ॥ ५६ ॥

एवं स मूषकस्तदुपकाररञ्जितः तथा विश्वस्तो यथा तस्य पक्षमध्ये प्रविष्टः तेन सह सर्वदैव गोष्ठीं (ख) करोति। अथ अन्यस्मिन्नहनि वायसोऽश्रुपूर्णनयनः समभ्येत्य सगद्गदं तमुवाच, भद्र हिरण्यक! विरक्तिः सञ्जाता मे साम्प्रतं देशस्य अस्य उपरि, तदन्यत्र यास्यामि। हिरण्यक आह, भद्र! किं

---

पश्येति। दानस्य माहात्म्यं सद्यः तत्क्षणात् प्रत्ययकारकं विश्वासजननं पश्य। यत् प्रभावात् यस्य दानस्य प्रभावात् बलात् द्वेषी शत्रुरपि तत्क्षणात् दानमात्रत एव इत्यर्थः मित्रतां याति गच्छति ॥ ५४ ॥

पुत्रादिति। तेन हेतुना शत्रुवशीकरणरूपेणेति भावः। विवेकविवर्जितस्य अज्ञानस्य पशोरपि दानं पुत्रादपि प्रियतरम् अतिशयेन प्रियं मन्ये, येन कारणेन ससुता सवत्सापि महिषी खले तिलकल्के दत्ते सति खलु निश्चितं नु निखिलं समस्तं दुग्धं ददाति इति उदाहरणं पश्य। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

प्रीतिमिति। नखमांसवत् नखमांसाविव निरन्तराम् अविच्छिन्नां दुर्भेद्यां दुरपनेयां प्रीतिं प्रणयं दानादिनेति शेषः कृत्वा मूषकः हिरण्यकः वायसः लघुपतनकश्च कृत्रिममित्रतां गतौ प्राप्तौ ॥ ५६ ॥

(ख) गोष्ठीम् अन्योन्यसम्मेलनरूपां समितिम्।

विरक्तेः कारणम् ? स आह, भद्र! श्रूयताम्। अत्र देशे महत्या अनावृष्ट्या दुर्भिक्षं सञ्जातम्। दुर्भिक्षत्वात् जनो बुभुक्षापीड़ितः कोऽपि बलिमात्रमपि (व) न प्रयच्छति। अपरं गृहे गृहे बुभुक्षितजनैः विहङ्गानां बन्धनाय पाशाः प्रगुणीकृताः (श) सन्ति। अहमपि आयुःशेषतया पाशेन बद्ध (ष) उद्धरितोऽस्मि—एतद्विरक्तेः कारणम्। तेनाहं विदेशं चलित इति वाष्पमोक्षं करोमि। हिरण्यक आह, अथ भवान् क्व प्रस्थितः ? स आह, अस्ति दक्षिणापथे वनगहनमध्ये महासरः। तत्र त्वत्तोऽधिकः परमसुहृत् कूर्म्मो मन्थरको नाम। स च मे मत्स्यमांसखण्डानि दास्यति, तद्भक्षणात् तेन सह सुभाषितगोष्ठीसुखमनुभवन् सुखेन कालं नेष्यामि। न अहमत्र विहङ्गानां पाशबन्धनेन क्षयं द्रष्टुमिच्छामि। उक्तञ्च,

अनावृष्टिहते देशे शस्ये च प्रलयं गते।
धन्यास्तात! न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ५७ ॥
कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ? ।
को विदेशः सविद्यानां ? कः परः प्रियवादिनाम् ॥५८॥

---

(व) बलिमात्रं वायसेभ्यो देयं यत्किञ्चिदन्नमिति भावः।

(श) विहङ्गानां पक्षिणाम्। प्रगुणीकृताः प्रकर्षेण प्रक्षिप्ताः।

(ष) उद्धरितः विमुक्तः।

अनावृष्टिहते इति। हे तात! देशे अनावृष्टिहते अनावृष्ट्या विनाशं गते, शस्ये च प्रलयं प्रणाशं गते सति धन्याः पुण्यवन्तः जनाः देशभङ्गं कुलक्षयञ्च न पश्यन्ति ॥ ५७ ॥

क इति। समर्थानां शक्तानाम् अतिभारः महत्कार्य्यमित्यर्थः, कः, न कोऽपि इत्यर्थः, व्यवसायिनां वणिजां दूरं किम्? न किमपि दूरमस्तीत्यर्थः,

विद्वत्त्वञ्च नृपत्वञ्च नैव तुल्यं कदाचन
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ५९ ॥

हिरण्यक आह, यदि एवं तदहमपि त्वया सह गमिष्यामि। ममापि महद्दुःखं वर्त्तते। वायस आह, भोः ! तव किं दुःखम् ? तत्कथय। हिरण्यक आह, भो! बहु वक्तव्यमस्ति अत्र विषये। तत्र एव गत्वा सर्वं सविस्तरं कथयिष्यामि। वायस आह, अहं तावत् आकाशगतिः तत्कथं भवतो मया सह गमनम्। स आह, यदि मे प्राणान् रक्षसि तदा स्वपृष्ठमारोप्य मां तत्र प्रापयिष्यसि। न अन्यथा मम गतिः अस्ति। तत् श्रुत्वा सानन्दं वायस आह, यदि एवं तद्धन्योऽहं यद्भवतापि सह तत्र कालं नयामि। अहं सम्पातादिकान् (स) अष्टौ उड्डीनगतिविशेषान् वेद्मि। तत्समारोह मम पृष्ठं, येन सुखेन त्वां तत्सरः प्रापयामि। हिरण्यक आह, उड्डीनानां नामानि श्रोतुमिच्छामि, स आह,

सम्पातं विप्रपातञ्च महापातं निपातनम्।
वक्रं तिर्य्यक् तथा चोर्ध्वमष्टमं लघुसंज्ञकम् ॥ ६० ॥

तच्छ्रुत्वा हिरण्यकः तत्क्षणादेव तदुपरि समारूढः।

---

सविद्यानां विदुषां विदेशः कः ? स्वयं देशः स्वयं विदेश इति गणना नास्ति इत्यर्थः। प्रियवादिनां परः कः ? न कोऽपि इत्यर्थः ॥ ५८ ॥

विद्वत्वमिति। विद्वत्वञ्च विद्यावत्त्वञ्च नृपत्वं राजत्वं च कदाचन नैव तुल्यं भवति, यतः राजा स्वदेशे पूज्यते, विद्वान् जनः सर्वत्र पूज्यते ॥ ५९ ॥

(स) सम्पातादिकान् सम्पातप्रभृतीन् वक्ष्यमाणान्।

सम्पातमिति। सम्पातं सम्पतनं विप्रपातं विशेषेण प्रकर्षेण पतनं महापातम् अत्यन्तपतनं निपातनम्। वक्रं तिर्य्यक् तिरश्चीनम् ऊर्द्ध्वम् ऊर्द्ध्वोत्पतनम् अष्टमं लघु अतिशयेन द्रुतम् एतदष्टप्रकारमुड्डीनम् इत्यर्थः ॥ ६० ॥

सोऽपि शनैः शनैः तमादाय सम्पातोड्डीनप्रस्थितक्रमेण (ङ) तत्सरः प्राप्तः। ततो लघुपतनकं मूषकाधिष्ठितं विलोक्य दूरतोऽपि देशकालवित् (च) असामान्यकाकोऽयमिति ज्ञात्वा सत्वरं मन्थरको जले प्रविष्टः। लघुपतनकोऽपि तीरस्थतरु-कोटरे हिरण्यकं मुक्त्वा शाखाग्रमारुह्य तारस्वरेण प्रोवाच, भो मन्थरक ! आगच्छ आगच्छ, तव मित्रम् अहं लघुपतनको नाम वायसः चिरात् सोत्कण्ठः समायातः। तदागत्य आलि-ङ्गय माम्। उक्तञ्च,

किं चन्दनैः सकर्पूरैः ? तुहिनैः किञ्च शीतलैः ?।
सर्वे ते मित्रगात्रस्य कलां नार्हन्ति षोड़शीम् ॥ ६१ ॥

तथाच, केनामृतमिदं सृष्टं मित्रमित्यक्षरद्वयम्।
आपदाञ्च परित्राणं शोकसन्तापभेषजम्।

तच्छ्रुत्वा निपुणतरं परिज्ञाय सत्वरं सलिलान्निष्क्रम्य पुलकिततनुः आनन्दाश्रुपूरिततनयनो मन्थरकः प्रोवाच, एहि एहि मित्र ! आलिङ्गय माम्, चिरकालात् मया त्वं न सम्यक् परिज्ञातः, तेन अहं सलिलान्तः प्रविष्टः।

---

(ङ) सम्पातेति। सम्पातरूपं यत् उड्डीनं तेन प्रस्थितं प्रस्थानं तस्य क्रमेण।

(च) देशकालवित् अस्मिन् देशे इदं करणीयम् अस्मिन् काले इदं कर-णीयमिति वेत्तीति तथोक्तः विचक्षण इत्यर्थः।

किमिति। सकर्पूरैः कर्पूरसहितैः चन्दनैः किम् ? शीतलैः तुहिनैः तुषा-रैश्च किम् ? न किमपि प्रयोजनम् इत्यर्थः यतः ते सर्वे सकर्पूरचन्दनादयः मित्र-गात्रस्य बन्धुशरीरस्य षोड़शीं कलां न अर्हन्ति। बन्धुगात्रं तादृशचन्दनादिभ्योऽपि प्रीतिकरमिति भावः ॥ ६१ ॥

केनेति। केन जनेन आपदां परित्राणं शोकसन्तापभेषजञ्च मित्रमिति अमृतम् अमृततुल्यम् इत्यर्थः इदम् अक्षरद्वयं सृष्टं प्रणीतम् ? ॥ ६२ ॥

उक्तञ्च, यस्य न ज्ञायते वीर्य्यं न कुलं न विचेष्टितम्।

न तेन सङ्गतिं कुर्य्यादित्युवाच बृहस्पतिः ॥६३॥

एवमुक्ते लघुपतनको वृक्षात् अवतीर्य्य तमालिङ्गितवान्। अथवा साधु इदमुच्यते।

अमृतस्य प्रवाहैः किं कायक्षालनसम्भवैः।

चिरान्मित्रपरिष्वङ्गो योऽसौ मूल्यविवर्जितः ॥ ६४ ॥

एवं द्वौ अपि तौ विहितालिङ्गनौ परस्परं पुलकितशरीरौ वृक्षादधः समुपविष्टौ प्रोचतुः आत्मचरित्रवृत्तान्तम्। हिरण्यकोऽपि मन्थरकस्य प्रणामं कृत्वा वायसाभ्यासे समुपविष्टः। अथ तं समालोक्य मन्थरको लघुपतनकमाह, भोः! कोऽयं मूषकः? कस्मात् त्वया भक्ष्यभूतोऽपि पृष्ठमारोप्य आनीतः? तन्न अत्र स्वल्पकारणेन भाव्यम्। तत् श्रुत्वा लघुपतनक आह, भो! हिरण्यको नाम मूषकोऽयम्, मम सुहृत् द्वितीयमिव जीवितम्। तत् किं बहुना,

पर्ज्जन्यस्य यथा धारा यथा च दिवि तारकाः।

सिकता रेणवो यद्वत्संख्यया परिवर्ज्जिताः ॥ ६५ ॥

---

यस्येति। यस्य वीर्य्यं न, कुलं न, विचेष्टितञ्च न ज्ञायते, तेन सह सङ्गतिं न कुर्य्यादिति बृहस्पतिः उवाच ॥ ६३ ॥

अमृतस्येति। कायस्य देहस्य क्षालनाय सम्भवो येषां तथाभूतैः शरीरक्षालनमात्रसाधनैरिति यावत् अमृतस्य प्रवाहैः किम्? न किमपि प्रयोजनम् इत्यर्थः, यः चिरात् दीर्घकालादनन्तरं मित्रपरिष्वङ्गः सुहृदालिङ्गनम्, असौ मूल्यविवर्जितः अमूल्य इत्यर्थः ॥ ६४ ॥

पर्जन्यस्येति। यथा पर्जन्यस्य मेघस्य धाराः, यथा च दिवि अन्तरीक्षे तारकाः, यद्वत् यथा सिकता रेणवः संख्यया गणनया परिवर्जिताः परित्यक्ताः

गुणसंख्या परित्यक्ता तद्वदस्य महात्मनः।
परं निर्वेदमापन्नः सम्प्राप्तोऽयं तवान्तिकम् ॥६६॥

मन्थरक आह, किमस्य वैराग्यकारणम्? वायस आह, पृष्टो मया। परमनेन अभिहितम्, यद्बहु वक्तव्यमस्ति तत् तत्र एव गतः कथयिष्यामि। ममापि न निवेदितम्। तत् भद्र हिरण्यक! इदानीं निवेद्यताम् उभयोः अपि आवयोः तदात्मनो वैराग्यकारणम्। सोऽब्रवीत्।

## कथा १।

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य न अतिदूरे मठायतनं (क) भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूड़ो नाम परिव्राजकः प्रतिवसति स्म। स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषञ्च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्ते (ख) अवलम्ब्य पश्चात् रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्मकराणां (ग) दत्त्वा सम्यक् तत्रैव देवतायतने सम्मार्जनोपलेपमण्डनादिकं(घ) समाज्ञापयति। अन्यस्मिन् अहनि मम बान्धवैः निवेदितम्,

---

असंख्या इत्यर्थः तद्वत् अस्य महात्मनः मूषकस्य गुणाः सङ्ख्या परित्यक्ताः असङ्ख्या इत्यर्थः, सोऽयं मूषकः परं निर्वेदम् आपन्नः सन् तव अन्तिकं समीपं सम्प्राप्तं ॥ ६५ ॥ ६६ ॥

(क) मठायतनम् आश्रमः मन्दिरम् इत्यर्थः।

(ख) नागदन्ते गृहभित्तौ प्रोते दण्डविशेषे।

(ग) कर्मकराणां भृत्यानाम्।

(घ) सम्मार्जनादिभिः परिष्कारार्थमिति भावः।

स्वामिन् ! मठायतने सिद्धमन्नं मूषकभयात् तत्रैव भिक्षा-पात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदा एव, तद् वयं भक्षयितुं न शक्नुमः। स्वामिनः पुनरगम्यं किमपि नास्ति। तत् किं वृथाटनेन (ङ) अन्यत्र ? अद्य तत्र गत्वा यथेच्छं भुञ्जामहे तव प्रसादात् तदाकर्ण्य अहं सकलयूथपरिवृतः तत्क्षणादेव तत्र गतः। उत्पत्य च तस्मिन् भिक्षापात्रे समारूढ़ः। तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात् स्वयमेव भक्षयामि, सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि। एवं नित्यमेव तदन्नं भक्षयामि। परिव्राजकोऽपि यथाशक्ति रक्षति। परं यदा एव निद्रान्तरितो भवति, तदा अहं तत्र आरुह्य आत्मकृत्यं करोमि। अथ कदाचित् तेन मम रक्षणार्थं महान् यत्नः कृतः। जर्जरवंशः समानीतः। तेन सुप्तोऽपि मम भयात् भिक्षापात्रं ताड़यति। अहमपि अभक्षितेऽपि अन्ने प्रहार-भयात् अपसर्पामि। एवं तेन सह सकलां रात्रिं विग्रहपरस्य (च) कालो व्रजति। अथ अन्यस्मिन्नहनि तस्य मठे वृहत्-स्फिङ्नामा परिव्राजकः तस्य सुहृत् तीर्थयात्राप्रसङ्गेन पान्थः प्राघुणिकः (छ) समायातः, तं दृष्ट्वा प्रत्युत्थानविधिना सम्भाव्य प्रतिपत्तिपूर्वकम् अभ्यागतक्रियया (ज) नियोजितः। ततश्च रात्रौ एकत्र कुशसंस्तरे (झ) द्वौ अपि प्रसुप्तौ धर्मकथां कथ-

---

(ङ) वृथाटनेन वृथाभ्रमणेन।

(च) विग्रहपरस्य युध्यमानस्य।

(छ) प्राघुणिकः अतिथिः।

(ज) सम्भाव्य सत्कृत्य। प्रतिपत्तिपूर्वकं सम्मानपूर्वकम्।

(झ) अभ्यागतक्रियया अतिथिपरिचर्य्यया। कुशसंस्तरे दर्भशय्यायाम्।

यितुम् आरब्धौ । अथ बृहत्स्फिक्कथागोष्ठीषु स ताम्रचूड़ो मूषकत्रासार्थं व्याक्षिप्तमना (ञ) जर्जरवंशेन भिक्षापात्रं ताड़यन् तस्य शून्यं प्रतिवचनं प्रयच्छति। तन्मयः न किञ्चित् उदाहरति (ट)। अथ असौ अभ्यागतः परं कोपमुपागतः तमुवाच, भोः ताम्रचूड़ ! परिज्ञातः त्वं सम्यक् न सुहृत्, तेन मया सह साह्लादं न जल्पसि। तत् रात्रौ अपि त्वदीयं मठं त्यक्त्वा अन्यत्र मठे यास्यामि । उक्तञ्च,

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिराद्दृश्यसे ?
का वार्त्ता ? अतिदुर्बलोऽसि ? कुशलं ? प्रीतोऽस्मि ते दर्शनात् ।
एवं ये समुपागतान् प्रणयिनः प्रह्लादयन्त्यादरात्
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ॥ ६७ ॥

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः ।
तत्र ये सदने यान्ति ते शृङ्गरहिता वृषाः ॥ ६८ ॥

---

(ञ) व्याक्षिप्तमनाः आकृष्टचित्तः ।

(ट) तन्मयः मूषिकध्यानेन तत्रैव निविष्टमना इत्यर्थः । उदाहरति कथयति ।

एह्रीति । एहि आगच्छ, इदम् आसनं समाश्रय गृहाण, कस्मात् किमर्थं चिरात् दीर्घकालात् परमिति शेषः दृश्यसे ? का वार्त्ता ? कः समाचारः ? अतिदुर्बलोऽसि, अत्यन्तं कृशोऽसि कुशलं मङ्गलम् ? ते तव दर्शनात् प्रीतोऽस्मि, ये जनाः समुपागतान् उपस्थितान् प्रणयिनः बान्धवान् एवम् उक्तप्रकारेण आदरात् प्रह्लादयन्ति, अशङ्कितेन मनसा तेषां हर्म्याणि गृहाणि इत्यर्थः सदा गन्तुं युक्तम उचितं साधूनामिति शेषः ॥ ३७ ॥

गृहीति । गृही गृहस्थः यत्र गृहे आगतम् अभ्यागतम् अतिथिम् इत्यर्थः दृष्ट्वा दिशः वा अधः वीक्षते, इतस्ततो दृष्टिं निक्षिपति अधोमुखो वा भवति इत्यर्थः तत्र सदने ये यान्ति, ते शृङ्गरहिताः शृङ्गहीनाः वृषाः नितान्तमसारा अनन्यगतय इति भावः ॥ ६८ ॥

नाभ्युत्थानक्रिया यत्र नालापा मधुराक्षराः ।
गुणदोषकथा नैव तत्र हर्म्ये न गम्यते ॥ ६९ ॥

तदेकमठप्राप्त्या (ठ) अपि त्वं गर्वितः, त्यक्तः सुहृत्स्नेहः । न एतत् वेत्सि यत् त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम् । उक्तञ्च,

नरकाय मतिस्ते चेत् पौरोहित्यं समाचर ।
वर्षं यावत् किमन्येन मठचिन्तां दिनत्रयम् ॥ ७० ॥

तन्मूर्ख ! शोचितव्यः त्वं गर्वं गतः । तदहं त्वदीयं मठं परित्यज्य यास्यामि । अथ तत् श्रुत्वा भयत्रस्तमनाः ताम्रचूड़ः तमुवाच, भो भगवन् ! मा एवं वद, न त्वत्समोऽन्यो मम सुहृत् कश्चिदस्ति, पर तत् श्रूयतां गोष्ठीशैथिल्य कारणम् । (ड) एष दुरात्मा मूषकः प्रोन्नतस्थाने धृतमपि भिक्षापात्रम् उत्प्लुत्य आरोहति भिक्षाशेषञ्च तत्रस्थं भक्षयति । तद्भावात् एव मठे मार्जनक्रिया (ढ) अपि न भवति । तन्मूषक-

---

नेति । यत्र अभ्युत्थानक्रिया प्रत्युद्गमनं न, मधुराणि अक्षराणि येषु तादृशाः आलापाः वचनानि न, तथा गुणदोषकथा नैव अन्योऽन्यमस्तीति शेषः तत्र हर्म्ये न गम्यते गमनं नोचितमिति भावः ॥ ६९ ॥

(ठ) एकमठप्राप्त्या एकस्य मठस्य देवमन्दिरस्य प्राप्त्या आधिपत्यलाभेनेति भावः ।

नरकायेति । चेत् यदि ते तव नरकाय नरकं गन्तुं मतिः वर्त्तते इति शेषः तदा वर्षं यावत् एकवर्षं व्याप्य इत्यर्थः पौरोहित्यं देवमन्दिरस्य पुरोहितकार्य्यं लोकप्रतारणात्मकमिति भावः समाचर अनुतिष्ठ, अन्येन किम् दिनत्रयं व्याप्य मठचिन्तां कृत्वापि नरके वासी भवति ॥ ७० ॥

(ड) गोष्ठीति । गोष्ठ्याम् अन्योऽन्यस्य सदालापरूपायां यत् शैथिल्यम् अनभिनिवेशः तस्य कारणम् ।

(ढ) तद्भावात् तस्य मूषिकस्य भावात् अत्र विद्यमानत्वाद इत्यर्थः । मार्जनक्रिया सम्मार्जनव्यापारः ।

त्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुः ताड़यामि। न अन्यत् कारणमिति। अपरमेतत् कुतूहलं पश्य अस्य दुरात्मनो यन्मार्जारमर्कटादयोऽपि (ण) तिरस्कृता अस्य उत्पतनेन। बृहत्स्फिक् (त) आह, अथ ज्ञायते तस्य विलं कस्मिंश्चित् प्रदेशे? ताम्रचूड़ आह, भगवन्! न वेद्मि सम्यक्। स आह, नूनं निधानस्य (थ) उपरि तस्य विलम्। निधानोष्मणा प्रकूर्दते (द)।

उक्तञ्च, ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम्।
किं पुनस्तस्य सम्भोगस्त्यागकर्मसमन्वितः॥ ७१॥

तथाच, नाकस्माच्छाण्डिली मातर्विक्रीणाति तिलैस्तिलान्।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति॥ ७२॥

ताम्रचूड़ आह, कथमेतत्? स आह,

---

(ण) कुतूहलम् आश्चर्य्यम्। मार्जारेति। मार्जाराः विड़ालाः मर्कटाः वानराः तत्प्रभृतयोऽपि ये अस्य अवुपचास्तेऽपीति भावः।

(त) अस्य मूषिकस्य। बृहत्स्फिक् बृहन्तौ स्फिचौ नितम्बौ यस्य तथाभूतः तदाख्य इत्यर्थः।

(थ) निधानस्य रत्नविशेषस्य।

(द) निधानोष्मणा निधिप्रभावजनिततेजसा इत्यर्थः। प्रकूर्दते प्रकर्षेण उल्लम्फति इत्यर्थः।

ऊष्मेति। वित्तजः धनजातः ऊष्मा उष्णत्वम् इत्यर्थः अपि देहिनां प्राणिनां तेजः वृद्धिं नयति प्रापयति। त्यागकर्मणा दानव्यापारेण समन्वितः युक्तः तस्य वित्तस्य सम्भोगः किं पुनः,? वित्तस्य दाने भोगे च गर्वो भवत्येव, वित्तसंसर्गेऽपि ऊष्मा जायते इति भावः॥ ७१॥

नेति। हे मातः! शाण्डिली तदाख्या काचित् ब्राह्मणी इतरैः अलुञ्चितैः इति शेषः तिलैः लुञ्चितान् कुटितान् तिलान् अकस्मात् विना हेतुम् इत्यर्थः न विक्रीणाति येन हेतुना अत्र विक्रये हेतुः कारणं किञ्चिदिति भावः भविष्यति॥ ७२॥

## कथा २।

यदा अहं कस्मिंश्चित् स्थाने प्रावृट्काले व्रतग्रहणनिमित्तं (ध) कञ्चित् ब्राह्मणं वासार्थं प्रार्थितवान्। ततश्च तद्वचनात् तेनापि (न) शुश्रूषितः (प) सुखेन देवार्चनपरः तिष्ठामि। अथ अन्यस्मिन्नहनि प्रत्यूषे प्रबुद्धोऽहं ब्राह्मणब्राह्मणीसंवादे दत्तावधानः (फ) शृणोमि। तत्र ब्राह्मण आह, ब्राह्मणि! प्रभाते दक्षिणायनसंक्रान्तिः अनन्तदानफलदा भविष्यति। तदहं प्रतिग्रहार्थं ग्रामान्तरं यास्यामि। त्वया ब्राह्मणस्य एकस्य भगवतः सूर्यस्य उद्देशेन (ब) किञ्चिद्भोजनं दातव्यम्। अथ तच्छ्रुत्वा ब्राह्मणी परुषतरवचनैः तं भर्त्सयमाना प्राह, कुतः ते दारिद्र्योपहतस्य (भ) भोजनप्राप्तिः? तत् किं न लज्जसे एवं ब्रुवाणः। अपि च न मया तव हस्तलग्नया (म) क्वचिदपि लब्धं सुखं, न मिष्टान्नस्य आस्वादनं, न च हस्तपादकण्ठादिभूषणम्। तत् श्रुत्वा भयत्रस्तोऽपि विप्रो मन्दं मन्दं प्राह, ब्राह्मणि! न एतद्युज्यते वक्तुम्। उक्तञ्च,

---

(ध) प्रावृट्काले वर्षाकाले? व्रतग्रहणनिमित्तं कस्यचित् नियमस्य पालनार्थम्।

(न) तद्वचनात् तस्मात् वचनात् मत्प्रार्थनावचनात् इत्यर्थः। तेन प्रार्थितब्राह्मणेन।

(प) शुश्रूषितः सेवितः।

(फ) ब्राह्मणब्राह्मणीसंवादे ब्राह्मणस्य ब्राह्मण्या सह परस्परकथोपकथने। दत्तावधानः अभिनिविष्टचित्तः।

(ब) सूर्यस्य उद्देशेन सूर्यदेवप्रीत्यर्थम् इत्यर्थः।

(भ) दारिद्र्योपहतस्य निर्धनस्य इत्यर्थः।

(म) हस्तलग्नया हस्तपतितया।

ग्रासादपि तदर्द्धञ्च कस्मान्नो दीयतेऽर्थिषु।
इच्छानुरूपो विभवः कदा कस्य भविष्यति॥ ७२॥
ईश्वरा भूरिदानेन यल्लभन्ते फलं किल।
दरिद्रस्तच्च काकिण्या प्राप्नुयादिति नः श्रुतिः॥७४॥
दाता लघुरपि सेव्यो भवति न कृपणो महानपि समृद्धया।
कूपोऽन्तः स्वादुजलः प्रीत्यै लोकस्य न समुद्रः॥ ७५॥
तथाच, अकृतत्यागमहिम्ना मिथ्या किं राजराजशब्देन।
गोप्तारं न निधीनां कथयन्ति महेश्वरं विबुधाः॥७६॥
अपिच, सदा दानपरिक्षीणः शस्त एव करीश्वरः।

---

ग्रासादिति। ग्रासादपि एककवलपरिमितादपि अन्नादित्यर्थः तदर्द्धं ग्रासार्द्धं कस्मात् अर्थिषु भिक्षुकेषु न दीयते? अपितु दीयत एव तद्दानमुचितमेवेति भावः। कदा कस्य जनस्य इच्छानुरूपी विभवः सम्पद् भविष्यति? नैव कदाचिदपि भविष्यति इत्यर्थः॥ ७२॥

ईश्वरा इति। ईश्वरा धनिनः भूरिदानेन बहुदानेन यत् फलं किल लभन्ते, दरिद्रो जनः काकिण्या वराटकानां विंशत्या इत्यर्थः वराटकानां दशकद्वयं यत् सा काकिणीति लीलावती। काकिणीदानेन इत्यर्थः तत्फलं प्राप्नुयात् इति नः अस्माकं श्रुतिः श्रुतम् इत्यर्थः॥ ७४॥

दातेति। दाता लघुरपि निर्धनोऽपीत्यर्थः सेव्यः भवति लोकैरिति शेषः, कृपणः समृद्धया सम्पदा महानपि न सेव्यः इत्यनुषङ्गः। अन्तर्गतानि स्वादूनि जलानि यस्य तादृशः कूपः लोकस्य जनस्य प्रीत्यै भवतीति शेषः, समुद्रो न, समुद्रजलेन न कोऽपि तृप्यतीति भावः विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः। आर्य्यावृत्तम्॥ ७५॥

अकृतेति। अकृतः त्यागस्य दानस्य महिमा येन तादृशेन दानवर्जितेनेति भावः राजराजशब्देन किम्? न किमपि प्रयोजनमित्यर्थः। बुधाः पण्डिताः निधीनां गोप्तारं रक्षितारं कुवेरमित्यर्थः महेश्वरं न कथयन्ति। धनवत्त्वमेव महेश्वरशब्दप्रतिपाद्यं न, त्यागशीलत्वमेव महेश्वरशब्दप्रतिपाद्यमिति भावः। आर्य्यावृत्तम्॥ ७६॥

सदेति। सदा सततं दानेन मदवर्षणेन धनवितरणेनेति ध्वनिः परिक्षीणः

अदानः पीनगात्रोऽपि निन्द्य एव हि गर्दभः ॥७७॥

सुशीलोऽपि सुवृत्तोऽपि यात्यदानादधो घटः।

पुनः कुब्जापि काणापि दानादुपरि कर्कटी ॥ ७८ ॥

यच्छञ्जलमपि जलदो वल्लभतामेति सकललोकस्य।

नित्यं प्रसारितकरो मित्रोऽपि न वीक्षितुं शक्यः ॥७९॥

एवं ज्ञात्वा दारिद्र्याभिभूतैः अपि स्वल्पात् स्वल्पतरं काले पात्रे च देयम्। उक्तञ्च,

सत्पात्रं महती श्रद्धा देशे काले यथोचिते।

यद्दीयते विवेकज्ञैस्तदनन्ताय कल्पते ॥ ८० ॥

तथाच, अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत्।

अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ८१ ॥

---

दैन्यमापन्नः करीश्वरः गजराज एव शस्तः प्रशंसान्वितः, अदानः अमदस्रावी अदातेति ध्वनिः पीनगात्रः स्थूलकायः धनवानिति ध्वनिः गर्दभः निन्द्य एव। ७७ ॥

सुशील इति। सुशीलोऽपि सुस्वभावोऽपि सुवृत्तोऽपि सुवर्तुलोऽपि सुचरितोऽपीति ध्वनिः घटः कलसः अदानात् जलस्य अवितरणादित्यर्थः अधो याति, लोकास्तम् अधःकृत्य तस्मात् जलानि हरन्तीति भावः। पुनः किन्तु कुब्जापि काणाऽपि कर्कटी दानात् उपरि याति ॥ ७८ ॥

यच्छन्निति। जलदः मेघः जलं यच्छन् ददत् सकललोकस्य वल्लभतां प्रियताम् एति प्राप्नोति अपिरत्रैवार्थः। नित्यं सततं प्रसारितकरः विस्तारितकिरणः ग्रहणार्थं हस्तं प्रसारयन्निति ध्वनिः मित्रोऽपि सूर्य्योऽपि बन्धुरपीति ध्वनिः वीक्षितुं द्रष्टुं न शक्यः तेजोऽतिरेकेण दृष्टिप्रतिघातादिति भावः प्रार्थनाकारी बन्धुरपि अवज्ञया लोकैर्न दृश्यते इति ध्वनिः। आर्य्यावृत्तम् ॥ ७९ ॥

सत्पात्रमिति। सत्पात्रम् उत्कृष्टं दानपात्रं महती समधिका श्रद्धा अस्ति चेदिति शेषः तदा विवेकज्ञैः सुविवेचकैः यथोचिते देशे काश्यादौ काले पौर्णमास्यादौ यत् दीयते श्रद्धातिशयेन सत्पात्रायेति शेषः तत् अनन्ताय अक्षयफलाय कल्पते प्रभवति अक्षयफलं भवति इत्यर्थः ॥ ८० ॥

अतितृष्णेति। अतितृष्णा अतिलोभः न कर्त्तव्या, तृष्णां लोभं नैव परि-

ब्राह्मणी आह, कथमेतत्? स आह,

## कथा ३।

अस्ति कस्मिंश्चित् वनोद्देशे कश्चित् पुलिन्दः स च पापर्द्धिं (य) कर्त्तुं वनं प्रति प्रस्थितः। अथ तेन प्रसर्पता (र) महान् अञ्जनपर्वतशिखराकारः क्रोड़ः समासादितः। तं दृष्ट्वा कर्णान्ताकृष्टनिशितसायकेन (ल) समाहतः, (व) तेनापि कोपाविष्टेन चेतसा बालेन्दुद्युतिना दंष्ट्राग्रेण पाटितोदरः (श) पुलिन्दो गतासुः भूतलेऽपतत्। अथ लुब्धकं व्यापाद्य शूकरोऽपि शरप्रहारवेदनया पञ्चत्वं गतः। एतस्मिन्नन्तरे कश्चित् आसन्नमृत्युः शृगाल इतस्ततो निराहारतया पीड़ितः परिभ्रमन् तं प्रदेशम् आजगाम। यावत् वराहपुलिन्दौ द्वौ अपि पश्यति तावत् प्रहृष्टो व्यचिन्तयत्, भोः! सानुकूलो (ष) मे विधिः। तेन एतदपि अचिन्तितं भोजनमुपस्थितम्। अथवा साधु इदमुच्यते,

अकृतेऽप्युद्यमे पुंसामन्यजन्मकृतं फलम्।

---

त्यजेत्, अतितृष्णया अभिभूतस्य जनस्य शिखा मस्तके शिरोमध्ये भवति उत्तिष्ठति ॥ ८१ ॥

(य) पुलिन्दः म्लेच्छजातिविशेषः। पापर्द्धिं पापवृद्धिं पापेन सम्पदं वा।

(र) प्रसर्पता विचरता।

(ल) क्रोड़ः वराहः। कर्णान्तेति। कर्णान्तम् आकर्णम् इत्यर्थः आकृष्टः निशितः तीक्ष्णः सायकः शरो येन तथोक्तेन।

(व) समाहतः ताड़ितः।

(श) बालेन्दुद्युतिना नवोदितचन्द्रकान्तिना। पाटितोदरः विदारितकुक्षिः।

(ष) सानुकूलः सदयः।

अकृते इति। उद्यमे यत्ने अकृतेऽपि विधिना दैवेन सन्नियोजितं सम्यक्

शुभाशुभं समभ्येति विधिना सन्नियोजितम् ॥ ८२ ॥

तथाच, यस्मिन् देशे च काले च वयसा यादृशेन च ।

कृतं शुभाशुभं कर्म तत्तथा तेन भुज्यते ॥ ८३ ॥

तदहं तथा भक्षयामि यथा बहूनि अहानि मे प्राणयात्रा भवति। तत् तावदेवं स्नायुपाशं धनुष्कोटिगतं (स) भक्षयामि। उक्तञ्च,

शनैः शनैश्च भोक्तव्यं स्वयं वित्तमुपार्जितम् ।

रसायनमिव प्राज्ञैर्हेलया न कदाचन ॥ ८४ ॥

इत्येवं मनसा निश्चित्य चापचटितकोटिं मुखमध्ये प्रक्षिप्य स्नायुं भक्षितुं प्रवृत्तः। ततश्च त्रुटिते पाशे तालुदेशं विदार्य्य चापकोटिर्मस्तकमध्येन निष्क्रान्ता। सोऽपि तद्वेदनया तत्क्षणात् मृतः। अतोऽहं ब्रवीमि,

अतितृष्णा न कर्त्तव्या तृष्णां नैव परित्यजेत् ।

अतितृष्णाभिभूतस्य शिखा भवति मस्तके ॥ ८५ ॥

स पुनरपि आह, ब्राह्मणि ! न श्रुतं भवत्या ।

आयुः कर्म च वित्तञ्च विद्या निधनमेव च ।

पञ्चैतानि हि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ८६ ॥

---

दत्तहस्तावलम्बमिति भावः अन्यजन्मकृतं जन्मान्तरीणं शुभाशुभं फलं समभ्येति उपतिष्ठते ॥ ८२ ॥

यस्मिन्निति। यस्मिन् देशे काले च यादृशेन वयसा यत् शुभाशुभं कर्म कृतं स्यात् येनेति शेषः तत् सर्वं तथा तादृशमेव तेन पुंसा भुज्यते ॥ ८३ ॥

(स) स्नायुपाशम् अन्त्ररूपं रज्जुम्। धनुष्कोटिगतं धनुरग्रभागलग्नम्।

शनैरिति। प्राज्ञैः बुद्धिमद्भिः जनैः स्वयमुपार्जितं वित्तं धनं रसायनमिव औषधमिव शनैः शनैः अल्पमल्पं क्रमेण भोक्तव्यं कदाचन हेलया अवज्ञया अपचयेनेति भावः न भोक्तव्यमिति अनुषङ्गः ॥ ८४ ॥

आयुरिति आयुः जीवनकालः कर्म कार्य्यं वित्तं धनं विद्या तथा निधनं

अथ एवं सा तेन प्रबोधिता ब्राह्मणी आह, यदि एवं तदस्ति मे गृहे स्तोकतिलराशिः। ततः तिलान् लुञ्चित्वा (ह) तिलचूर्णेन ब्राह्मणं भोजयिष्यामीति। ततः तद्वचनं श्रुत्वा ब्राह्मणो ग्रामं गतः। सापि तिलान् उष्णोदकेन संमर्द्य कुटित्वा सूर्य्यातपे दत्तवती। अत्रान्तरे तस्या गृहकर्मव्यग्रायाः तिलानां मध्ये कश्चित् सारमेयो मूत्रोत्सर्गं चकार। तं दृष्ट्वा सा चिन्तितवती, अहो! नैपुण्यं पश्य पराङ्मुखीभूतस्य विधेः (च) यदेते तिला अभोज्याः कृताः। तदलम् एतान् समादाय कस्यचित् गृहं गत्वा लुञ्चितैः अलुञ्चितान् आनयामि। सर्वोऽपि जनोऽनेन विधिना प्रदास्यतीति। अथ यस्मिन् गृहेऽहं भिक्षार्थं प्रविष्टः तत्र गृहे सापि तिलान् आदाय प्रविष्टा विक्रयं कर्त्तुम्। आह च, गृह्णातु कश्चित् अलुञ्चितैः लुञ्चितान् तिलान्। अथ तद्गृहगृहिणी गृहं प्रविष्टा यावत् अलुञ्चितैः लुञ्चितान् गृह्णाति तावत् अस्याः पुत्रेण कामन्दकीशास्त्रं (क) दृष्ट्वा व्याहृतम्, मातः! अग्राह्याः खलु इमे तिलाः। न अस्या अलुञ्चितैः लुञ्चिता ग्राह्याः। कारणं किञ्चित् भविष्यति, तेन एषा अलुञ्चितैः लुञ्चितान् प्रयच्छति। तत् श्रुत्वा तया परित्यक्तास्ते तिलाः। अतोऽहं ब्रवीमि।

नाकस्माच्छाण्डिली मातः! विक्रीणाति तिलैस्तिलान्।
लुञ्चितानितरैर्येन हेतुरत्र भविष्यति॥ ८७॥

---

मृत्युः एतानि पञ्च गर्भस्थस्य उदरस्थितस्यैव देहिनः सृज्यन्ते विधात्रा इति शेषः॥ ८६॥

(ह) स्तोकतिलराशिः अल्पतिलराशिः। लुञ्चित्वा कुटित्वा।

(च) पराङ्मुखीभूतस्य प्रतिकूलस्य इत्यर्थः। विधेः दैवस्य।

(क) कामन्दकीशास्त्रं नीतिशास्त्रम्।

एतदुक्त्वा स भूयोऽपि प्राह, अथ ज्ञायते तस्य क्रमणमार्गः (ख)। ताम्रचूड़ आह, भगवन्! ज्ञायते यत एकाकी न समागच्छति। किन्तु असंख्ययूथपरिवृतः पश्यतो मे परिभ्रमन् इतस्ततः सर्वजनेन सह आगच्छति याति च। अभ्यागत आह, अस्ति किञ्चित् खनित्रकम् स आह, वाढ़म् अस्ति, एषा सर्वलोहमयी स्वहस्तिका (ग)। अभ्यागत आह, तर्हि प्रत्यूषे त्वया मया सह स्थातव्यं येन द्वौ अपि जनचरणामलिनायां (घ) भूमौ तत्पदानुसारेण (ङ) गच्छावः। मया अपि तद्वचनमाकर्ण्य चिन्तितम्। अहो! विनष्टोऽस्मि यतोऽस्य साभिप्रायवचांसि (च) श्रूयन्ते। नूनं यथा निधानं ज्ञातं तथा दुर्गमपि (छ) अस्माकं ज्ञास्यति एतदभिप्रायादेव ज्ञायते। उक्तञ्च,

सकृदपि दृष्ट्वा पुरुषं विबुधा जानन्ति सारतां तस्य।
हस्ततुलयापि निपुणाः पलप्रमाणं विजानन्ति ॥ ८८ ॥

वाञ्छैव सूचयति पूर्वतरं भविष्यं
पुंसां यदन्यतनुजं त्वशुभं शुभं वा।

---

(ख) तस्य मूषिकस्य। क्रमणमार्गः विचरणस्य पन्थाः।

(ग) स्वहस्तिका खनित्रम्।

(घ) जनेति। जनचरणैः लोकानां पदविक्षेपैः अमलिनायाम् अक्षुण्णायामिति भावः।

(ङ) तदिति। तस्य मूषिकस्य पदानुसारेण पदचिह्नानुसारेण।

(च) साभिप्रायवचांसि अभिप्राययुक्तानि वचनानि।

(छ) निधानं निधिः। ज्ञातम् अनुमितम्। दुर्गं विवरम्।

सकृदिति। विशेषेण बुध्यन्ते इति विबुधाः विद्वांसः देवा वा पुरुषं सकृदपि एकवारमपि दृष्ट्वा तस्य पुरुषस्य सारतां जानन्ति बुध्यन्ते। निपुणाः कुशलाः नराः हस्ततुलया हस्तेन तोलनेनापि पलप्रमाणं विजानन्ति। आर्य्यावृत्तम् ॥ ८८ ॥

विद्रायते शिशुरजातकलापचिह्नः
प्रत्युद्गतैरपसरन् सरसः कलापी ॥ ८९ ॥

ततोऽहं भयत्रस्तमनाः सपरिवारो दुर्गमार्गं परित्यज्य अन्यमार्गेण गन्तुं प्रवृत्तः। सपरिजनो यावदग्रतो गच्छामि तावत् सम्मुखो बृहत्कायो मार्जारः समायाति। स च मूषकवृन्दम् अवलोक्य तन्मध्ये सहसा उत्पपात। अथ ते मूषका मां कुमार्गगामिनम् अवलोक्य गर्हयन्त हतशेषा रुधिरप्लावितवसुन्धराः तमेव दुर्गं प्रविष्टाः। अथवा साधु इदमुच्यते।

छित्त्वा पाशमपास्य कूटरचनां भङ्क्त्वा बलाद्वागुरां
पर्य्यन्ताग्निशिखाकलापजटिलान्निर्गत्य दूरं वनात्।
व्याधानां शरगोचरादपि जवेनोत्पत्य धावन् मृगः
कूपान्तः पतितः करोतु विधुरे किंवा विधौ पौरुषम् ॥९०॥

अथ अहमेकोऽन्यत्र गतः शेषा मूढतया तत्रैव दुर्गं प्रविष्टाः। अत्रान्तरे स दुष्टपरिव्राजको रुधिरबिन्दुचर्चितां भूमिमवलोक्य तेनैव दुर्गमार्गेण आगत्य उपस्थितः। ततश्च खहस्तिकया खनितुम् आरब्धः। अथ तेन खनता प्राप्तं

---

वाञ्छेति। वाञ्छैव आकाङ्क्षा एव आशय एव इत्यर्थः पुंसां पूर्वतरम् अतीतं भविष्यच्च यत् अन्यतनुजं जन्मान्तरभवम् अशुभं शुभं वा तत् सूचयति प्रकटयति। तथाहि अजातम् अनुत्पन्नं कलापस्य बर्हस्य चिह्नं यस्य तादृशः शिशुः कलापी मयूरः प्रत्युद्गतैः सरसः अपसरन् विद्रायते। वसन्ततिलकं वृत्तम् ॥ ८९ ॥

छित्त्वेति। मृगः पाशं जालं छित्त्वा कूटरचनां कपटरचनाम् अपास्य निरस्य, बलात् बलमाश्रित्य वागुरां बन्धनवृतिं भङ्क्त्वा खण्डयित्वा पर्य्यन्तेषु प्रान्तेषु अग्निशिखाकलापैः जटिलात् युक्तात् वनात् दूरं निर्गत्य तथा व्याधानां शरगोचरात् शरवर्षणस्थानात् जवेन वेगेन उत्पत्य उल्लम्फ्य धावन् विधुरे प्रतिकूले विधौ दैवे कूपान्तःपतितः कूपमध्यनिमग्नः सन् किं वा पौरुषं करोतु ? न किमपि कर्त्तुं शक्नोति इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ ९० ॥

तन्निधानं यस्य उपरि सदा एवाहं कृतवसतिः यस्य उष्मणा(ज) महादुर्गमपि गच्छामि। ततो हृष्टमनाः ताम्रचूड़मिदमूचेऽभ्यागतः। भो भगवन्! इदानीं स्वपिहि निःशङ्कः। अस्य उष्मणा मूषकस्ते जागरणं सम्पादयति। एवमुक्त्वा निधानम् आदाय मठाभिमुखं प्रस्थितौ द्वौ अपि। अहमपि यावत् निधानरहितं स्थानम् आगच्छामि तावत् अरमणीयम् उद्वेगकारकं तत् स्थानं वीक्षितुमपि न शक्नोमि अचिन्तयञ्च। किं करोमि? क्व गच्छामि? कथं मे स्यात् मनसः प्रशान्तिः? एवं चिन्तयतो महाकष्टेन स दिवसो व्यतिक्रान्तः। अथ अस्तमितेऽर्के सोद्वेगो निरुत्साहस्तस्मिन् मठे सपरिवारः प्रविष्टः। अथ अस्मत् परिग्रहशब्दम् (झ) आकर्ण्य ताम्रचूड़ोऽपि भूयो भिक्षापात्रं जर्जरवंशेन ताड़यितुं प्रवृत्तः। अथ असौ अभ्यागतः प्राह। सखे! किम् अद्यापि निःशङ्को न निद्रां गच्छसि। स आह, भगवन्! भूयोऽपि समायातः सपरिवारः स दुष्टात्मा मूषकः। तद्भयात् जर्जरवंशेन भिक्षापात्रं ताड़यामि। ततो विहस्य अभ्यागतः प्राह। सखे! मा भैषीः। वित्तेन सह गतोऽस्य कूर्दनोत्साहः। सर्वेषामपि जन्तूनाम् इयमेव स्थितिः (ञ)। उक्तञ्च,

यदुत्साही सदा मर्त्यः पराभवति यज्जनान्।
यदुद्धतं वदेद्वाक्यं तत्सर्वं वित्तजं बलम्॥ ८१॥

---

(ज) उष्मणा उत्तापेन प्रभावेणेति भावः।

(झ) परिग्रहशब्दः प्रवेशशब्दम्।

(ञ) कूर्दनोत्साहः विक्रमोद्योग इत्यर्थः। स्थितिः मर्य्यादा नियम इत्यर्थः। यदिति। मर्त्यः मानवः यत् सदा उत्साही भवतीति शेषः, यत् जनान्

अथ अहं तत् श्रुत्वा कोपाविष्टो भिक्षापात्रमुद्दिश्य विशेषादुत्कूर्दितोऽप्राप्त एव भूमौ निपतितः । तत् श्रुत्वा असौ मे शत्रुर्विहस्य ताम्रचूड़म् उवाच । भोः ! पश्य पश्य कौतूहलम् । आह च,

अर्थेन बलवान् सर्वो अर्थयुक्तः स पण्डितः ।
पश्यैनं मूषकं व्यर्थं स्वजातेः समतां गतम् ॥ ९२ ॥

तत स्वपिहि त्वं गतशङ्कः । यदस्य उत्पतनकारणं तत् आवयोर्हस्तगतं जातम् । अथवा साधु इदमुच्यते ।

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः ।
तथार्थेन विहीनोऽत्र पुरुषो नामधारकः ॥ ९३ ॥

तत् श्रुत्वा अहं मनसा विचिन्तितवान् । यतोऽङ्गलिमात्रमपि कूर्दनशक्तिर्नास्ति तत् धिक् अर्थहीनस्य पुरुषस्य जीवितम् । उक्तञ्च,

अर्थेन च विहीनस्य पुरुषस्याल्पमेधसः ।
उच्छिद्यन्ते क्रियाः सर्वा ग्रीष्मे कुसरितो यथा ॥ ९४ ॥

---

परिभवति पराजयते. यच्च उद्धतं दारुणं वाक्यं वदेत् तत्सर्वं वित्तजं धनजातं बलं धनमत्ता एव तादृशा भवन्तीति भावः ॥ ९१ ॥

अर्थेनेति । सर्वो जनः अर्थेन धनेन बलवान भवति, अर्थयुक्तः सः जनः पण्डितो भवति । एवं व्यर्थम् अर्थहीनं मूषकं स्वजातेः समतां गतं दुर्बलमित्यर्थः पश्य ॥ ९२ ॥

दंष्ट्रेति । दंष्ट्राविरहितः अदन्तः सर्पो यथा, मदहीनो गजो यथा, तथा अत्र संसारे अर्थेन विहीनः पुरुषः नामधारकः पुरुष इति नाममात्रं धरति न तु किञ्चिदपि पौरुषमिति भावः ॥ ९३ ॥

अर्थेनेति । अर्थेन विहीनस्य अतएव अल्पमेधसः दुर्बलमतेः अर्थबलेनैव मतेः स्फुरणादिति भावः पुरुषस्य सर्वाः क्रियाः कर्माणि ग्रीष्मे निदाघे कुसरितः अल्पसरितः यथा उच्छिद्यन्ते नश्यन्ति ॥ ९४ ॥

यथा काकयवा: प्रोक्ता यथारण्यभवास्तिला: ।
नाममात्रा न सिद्धौ हि धनहीनास्तथा नरा: ॥ ९५ ॥
सन्तोऽपि न हि राजन्ते दरिद्रस्येतरे गुणा: ।
आदित्य इव भूतानां श्रीर्गुणानां प्रकाशिनी ॥ ९६ ॥
न तथा बाध्यते लोके प्रकृत्या निर्धनो जन: ।
यथा द्रव्याणि संप्राप्य तैर्विहीन: सुखे स्थित: ॥९७॥
शुष्कस्य कीटखातस्य वह्निदग्धस्य सर्वत: ।
तरोरप्यूषरस्थस्य वरं जन्म न चार्थिन: ॥ ९८ ॥
शङ्कनीया हि सर्वत्र निष्प्रतापा दरिद्रता ।
उपकर्त्तुमपि प्राप्तं नि:स्वं सन्त्यज्य गच्छति ॥ ९९ ॥

---

यथेति । यथा काकयवा: तदाख्यशस्यविशेषा:, यथा अरण्यभवा वन्यास्तिला: नाममात्रा: यवतिलनामधारिण एव प्रोक्ता: न सिद्धौ, न क्वचिदपि कार्य्ये लगन्तीति भाव: तथा धनहीना: नरा: न किमपि कार्य्यं साधयन्तीति शेष: ॥ ९५ ॥

सन्त इति । सन्तोऽपि विद्यमाना अपि दरिद्रस्य निर्धनस्य इतरे गुणा: दयादाक्षिण्यादय: न हि राजन्ते नैव शोभन्ते । आदित्य: सूर्य्य: भूतानां क्षित्यादीनां पदार्थानामिव श्री: लक्ष्मी: गुणानां प्रकाशिनी यथा सूर्य्योदये सर्वे पदार्था: प्रकाशन्ते तथा सम्पदि सर्वे गुणा इति भाव: ॥ ९६ ॥

नेति । लोके जगति प्रकृत्या स्वभावेन निर्धन: जन: तथा न बाध्यते न क्लिश्यति, यथा द्रव्याणि धनानि सम्प्राप्य सुखे स्थित: पश्चात् तै: द्रव्यै: विहीन: बाध्यते इत्यनुषङ्ग: ॥ ९७ ॥

शुष्कस्येति । शुष्कस्य कीटखातस्य कीटै: भक्षितसारस्येति भाव: सर्वत: समन्तात् वह्निना दग्धस्य ऊषरस्थस्य क्षारभूमिस्थितस्य तरोरपि जन्म वरं मनाक् प्रियम्, अर्थिन: भिक्षो: न च ॥ ९८ ॥

शङ्कनीयेति । निष्प्रतापा प्रभावशून्या दरिद्रता निर्धनता सर्वत्र सर्वस्मिन् विषये शङ्कनीया शङ्कास्थानमित्यर्थ: । उपकर्त्तुं प्राप्तमपि उपस्थितमपि वस्तु इति शेष: । नि:स्वं निर्धनं जनं सन्त्यज्य विहाय गच्छति ॥ ९९ ॥

उन्नम्योन्नम्य तत्रैव निर्धनानां मनोरथाः ।
हृदयेष्वेव लीयन्ते विधवास्त्रीस्तनाविव ॥ १०० ॥
व्यक्तेऽपि वासरे नित्यं दौर्गत्यतमसावृतः ।
अग्रतोऽपि स्थितो यत्नान्न केनापीह दृश्यते ॥१०१॥

एवं विलप्य अहं भग्नोत्साहः तन्निधानं गण्डोपधानीकृतं (ट) दृष्ट्वा स्वं दुर्गं प्रभाते गतः । ततश्च मद्भृत्याः प्रभाते गच्छन्तो मिथो जल्पन्ति । अहो ! असमर्थोऽयमुदरपूरणेऽस्माकम् । केवलमस्य पृष्ठलग्नानां (ठ) विड़ालादिविपत्तयः । तत् किमनेन आराधितेन । उक्तञ्च,

यत् सकाशान्न लाभः स्यात् केवलाः स्युर्विपत्तयः ।
स स्वामी दूरतस्त्याज्यो विशेषादनुजीविभिः ॥ १०२ ॥

एवं तेषां वचांसि श्रुत्वा स्वदुर्गं प्रविष्टोऽहम् । यावन्न कश्चित् मम सम्मुखे अभ्येति तावत् मया चिन्तितम् । धिक् इयं दरिद्रता । अथवा साधु इदमुच्यते ।

---

उन्नम्येति । निर्धनानां दरिद्राणां मनोरथाः अभिलाषाः उन्नम्य उन्नम्य उत्थाय उत्थाय विधवायाः स्त्रियाः स्तनाविव तत्रैव हृदयेषु लीयन्ते लयं गच्छन्ति ॥ १०० ॥

व्यक्ते इति । व्यक्ते सुप्रकाशेऽपि वासरे दिवसे दौर्गत्यं दारिद्र्यमेव तमः तिमिरं तेन आवृतः आच्छादितो जनः अग्रतः स्थितोऽपि नित्यं सततं केनापि जनेन यत्नात् इह संसारे न दृश्यते ॥ १०१ ॥

(ट) गण्डेति । गण्डस्य कपोलस्य उपधानीकृतम् आधारीकृतं तेन परिव्राजकेनेति शेषः ।

(ठ) पृष्ठलग्नानां पृष्ठानुयायिनाम् अस्माकम् इत्यर्थः ।

यदिति । यत् सकाशात् यस्य आश्रयात् लाभः न स्यात् केवला विपत्तयः विपदः स्युः सः स्वामी अनुजीविभिः विशेषात् विशेषेण दूरतः त्याज्यः ॥ १०२ ॥

मृतो दरिद्रः पुरुषो मृतं मैथुनमप्रजम् ।
मृतमश्रोत्रियं श्राद्धं मृतो यज्ञस्त्वदक्षिणः ॥ १०३ ॥

एवं मे चिन्तयतः ते भृत्या मम शत्रूणां सेवका जाताः । ते च माम् एकाकिनं दृष्ट्वा विडम्बनां कुर्वन्ति (ड) । अथ मया एकाकिना योगनिद्रां (ढ) गतेन भूयो विचिन्तितम् । यत् तस्य कुतपस्विनः समाश्रयं गत्वा तद्गण्डोपधानवर्त्तिकृतां वित्तपेटां (ण) शनैः शनैः विदार्य्य तस्य निद्रावशं गतस्य स्वदुर्गे तद्वित्तं आनयामि येन भूयोऽपि मे वित्तप्रभावेण आधिपत्यं पूर्ववत् भविष्यति । उक्तञ्च,

व्यथयन्ति परं चेतो मनोरथशतैर्जनाः ।
नानुष्ठानैर्धनैर्हीनाः कुलजा विधवा इव ॥१०४॥

दौर्गत्यं देहिनां दुःखमपमानकरं परम् ।
येन स्वैरपि मन्यन्ते जीवन्तोऽपि मृता इव ॥१०५॥

---

मृत इति । दरिद्रः पुरुषः मृतः, अप्रजम् अपुत्रं मैथुनं स्त्रीसङ्गमः मृतम् अश्रोत्रियं वेदपारगब्राह्मणवर्जितं श्राद्धं मृतम्, अदक्षिणः दक्षिणाशून्यः यज्ञः मृतः ॥ १०३ ॥

(ड) विडम्बनां कुर्वन्ति उपहसन्ति प्रतारयन्ति वा ।

(ढ) योगनिद्रां कपटनिद्राम् ।

(ण) समाश्रयम् आश्रमम् । वित्तपेटाम् अर्थपेटिकाम् ।

व्यथयन्तीति । धनैः हीनाः दरिद्रा इत्यर्थः जनाः कुलजा विधवा इव मनोरथशतैः चेतः चित्तं परं केवलं व्यथयन्ति क्लेशयन्ति न अनुष्ठानैः कुकार्य्यैः व्यथयन्तीति अनुषज्यते ॥ १०४ ॥

दौर्गत्यमिति । दौर्गत्यं दारिद्र्यं देहिनां प्राणिनाम् अपमानकरं परम् अत्यन्तं दुःखं येन दौर्गत्येन हेतुना स्वैरपि स्वजनैरपि जीवन्तोऽपि दरिद्रा इति शेषः मृता इव मन्यन्ते बुध्यन्ते ॥ १०५ ॥

दैन्यस्य पात्रतामेति पराभूतेः परं पदम् ।
विपदामाश्रयः शश्वद्दौर्गत्यकलुषीकृतः ॥ १०६ ॥
लज्जन्ते बान्धवास्तेन सम्बन्धं गोपयन्ति च ।
मित्राण्यमित्रतां यान्ति यस्य न स्युः कपर्दकाः ॥१०७॥
मूर्त्तं लाघवमेवैतदपायानामिदं गृहम् ।
पर्य्यायो मरणस्यायं निर्धनत्वं शरीरिणाम् ॥१०८॥
अजाधूलिरिव त्रस्तैर्मार्जनीरेणुवज्जनैः ।
दीपखद्योतछायेव त्यज्यते निर्धनो जनैः ॥ १०९ ॥
शौचावशिष्टयाप्यस्ति किञ्चित् कार्य्यं क्वचित् मृदा ।
निर्धनेन जनेनैव न तु किञ्चित् प्रयोजनम् ॥ ११० ॥
अधनो दातुकामोऽपि संप्राप्तो धनिनां गृहम् ।

---

दैन्यस्येति । दौर्गत्यं दारिद्र्यं तेन कलुषीकृतः मलिनीकृतः पुरुषः शश्वत् निरन्तरं दैन्यस्य दीनतायाः पात्रताम् एति प्राप्नोति, पराभूतेः पराभवस्य परं पदम् तथा विपदाम् आश्रयः भवतीति शेषः ॥ १०६ ॥

लज्जन्ते इति । यस्य जनस्य कपर्दकाः धनानि इत्यर्थः न स्युः बान्धवाः तस्येति शेषः लज्जन्ते. तेन सह सम्बन्धं गोपयन्ति च मित्राणि च अमित्रतां शत्रुतां यान्ति प्राप्नुवन्ति च ॥ १०७ ॥

मूर्त्तमिति । एतत् निर्धनत्वं दारिद्र्यं शरीरिणां प्राणिनां मूर्त्तं मूर्त्तिमत् लाघवम् । इदं निर्धनत्वं अपायानां विपदां गृहम्, अयं निर्धनभावः मरणस्य पर्य्यायः नामान्तरम् इत्यर्थः ॥ १०८ ॥

अजेति । निर्धनो जनः त्रस्तैः त्रासं गतैर्जनैः अजाधूलिरिव छागरज इव, जनैः मार्जनीरेणुवत् तथा जनैः दीपखद्योतछायेव दीपस्य खद्योतस्य च छायेव त्यजते ॥ १०९ ॥

शौचेति । शौचावशिष्टया शौचकार्य्यादुद्धृतयापि मृदा मृत्तिकया क्वचित् किञ्चित् कार्य्यं अस्ति, निर्धनेन जनेन तु किञ्चिदपि प्रयोजनं नास्ति ॥ ११० ॥

अधन इति । अधनः दरिद्रः जनः दातुकामः दानार्थी नतु भिक्षार्थीति

मन्यते याचकोऽयं धिग्धारिद्र्यं खलु देहिनाम् ॥१११॥

अतो वित्तापहारं विदधतो ( त ) यदि मे मृत्युः स्यात् तथापि शोभनम्। उक्तञ्च,

स्ववित्तहरणं दृष्ट्वा यो हि रक्षत्यसून्नरः।

पितरोऽपि न गृह्णन्ति तद्दत्तं सलिलाञ्जलिम् ॥११२॥

तथा च, गवार्थे ब्राह्मणार्थे च स्त्रीवित्तहरणे तथा।

प्राणांस्त्यजति यो युद्धे तस्य लोकाः सनातनाः ॥११३॥

एवं निश्चित्य रात्रौ तत्र गत्वा निद्रावशम् उपागतस्य पेटायां मया छिद्रं कृतं यावत् तावत् प्रबुद्धो दुष्टतापसः ततश्च जर्जरवंशप्रहारेण शिरसि ताड़ितः कथञ्चित् आयुःशेषतया निर्गतोऽहं न मृतश्च। उक्तञ्च,

प्राप्तव्यमर्थं लभते मनुष्यो, देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे, यदस्मदीयं न हि तत्परेषाम्११४

---

भावः सन् धनिनां गृहं सम्प्राप्तोऽपि अयं याचक इति मन्यते लोकैरिति शेषः तस्मात् देहिनां दारिद्र्यं खलु निश्चितं धिक् निन्दामि इत्यर्थः धिक् निर्भर्त्सननिन्दयोः इत्यमरः ॥ १११ ॥

(त) वित्तापहारं चौर्य्यम्। विदधतः कुर्वतः।

स्ववित्तेति। यो नरः स्ववित्तहरणं स्वस्य धनहरणं दृष्ट्वा असून् प्राणान् रक्षति पितरोऽपि तद्दत्तं तेन दत्तं सलिलाञ्जलिं तर्पणजलं न गृह्णन्ति ॥ ११२ ॥

गवार्थे इति। यः गवार्थे ब्राह्मणार्थे तथा स्त्रीवित्तहरणे गोब्राह्मणस्त्रीधनरक्षार्थमित्यर्थः युद्धे प्राणान् त्यजति तस्य सनातनाः अक्षयाः लोकाः भवन्तीति शेषः ॥ ११३ ॥

प्राप्तव्यमिति। मनुष्यः प्राप्तव्यम् अर्थं लभते देवोऽपि तं प्राप्तव्यमर्थं लङ्घयितुं न शक्तः तस्मात् नाहं शोचामि अर्थार्थमिति भावः, मे मम विस्मयः कथं मम अर्थो नष्टः कथं वा न प्राप्त इत्यादि विषय इति भावः न भवतीति शेषः। हि यतः यत् अस्मदीयं धनमिति शेषः तत् परेषां न। उपजातिवृत्तम् ॥ ११४ ॥

काककूर्मौ पृच्छतः, कथमेतत् ? हिरण्यक आह,

## कथा ४ ।

अस्ति अस्मिंश्चित् नगरे सागरदत्तो नाम वणिक्, तत्-सूनुना रूपकशतेन (थ) विक्रीयमाणः पुस्तको गृहीतः। तस्मिंश्च लिखितमस्ति।

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम्॥११५

तद् दृष्ट्वा सागरदत्तेन तनुजः (द) पृष्टः, पुत्र ! कियता मूल्येन एष पुस्तको गृहीतः ? सोऽब्रवीत्, रूपकशतेन। तत् श्रुत्वा सागरदत्तोऽब्रवीत्, धिक् मूर्ख ! त्वं लिखितैक-श्लोकं रूपकशतेन यद् गृह्णासि एतया बुद्ध्या कथं द्रव्यो-पार्जनं करिष्यसि ? तत् अद्य प्रभृति त्वया मे गृहे न प्रवेष्टव्यम्। एवं निर्भर्त्स्य गृहात् निःसारितः। स च तेन निर्वेदेन विप्रकृष्टं (ध) देशान्तरं गत्वा किमपि नगरमासाद्य अवस्थितः। अथ कतिपयदिवसैः तन्नगरनिवासिना केन-चित् असौ पृष्टः, कुतो भवान् आगतः ? किं नामधेयो वेति ? असौ अब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। अथ अन्येनापि पृष्टेन अनेन तथा एव उत्तरं दत्तम्। एवं च नगरस्य मध्ये प्राप्तव्यमर्थ इति तस्य प्रसिद्धं नाम जातम्। अथ राजकन्या चन्द्रवती नाम अभिनवरूपयौवनसम्पन्ना सखीद्वितीया एक-

---

(थ) रूपकशतेन शतसंख्यकरौप्यमुद्रया।

(द) तनूजः पुत्रः।

(ध) निर्वेदेन खावमानेन। विप्रकृष्टं दूरम्।

स्मिन् महोत्सवदिवसे नगरं निरीक्षमाणा अस्ति। तत्र एव च कश्चित् राजपुत्रोऽतीवरूपसम्पन्नो मनोरमश्च कथमपि तस्या दृष्टिगोचरे गतः। तद्दर्शनसमकालमेव कुसुमवाणाहतया तया निजसखी अभिहिता, सखि! यथा किल अनेन सह समागमो भवति, तथा अद्य त्वया यतितव्यम्। एवञ्च श्रुत्वा सा सखी तत्सकाशं गत्वा शीघ्रमब्रवीत्, यदहं चन्द्रवत्या तवान्तिकं प्रेषिता, भणितञ्च त्वां प्रति तया, यन्मम त्वद्दर्शनात् मनोभवेन पश्चिमावस्था (न) कृता। तद्-यदि शीघ्रमेव मदन्तिके न समेष्यसि तदा मे मरणं शरणम्। इति श्रुत्वा तेन अभिहितम्, यदि अवश्यं मया तत्र आगन्तव्यं तत्कथय केन उपायेन प्रवेष्टव्यम्? अथ सख्याभिहितम्, रात्रौ सौधावलम्बितया (प) दृढ़वरत्रया त्वया तत्रारोढ़व्यम् (फ)। सोऽब्रवीत्, यदि एवं निश्चयो भवत्याः तदहमेवं करिष्यामि इति निश्चित्य सखी चन्द्रवतीसकाशं गता। अथ आगतायां रजन्यां स राजपुत्रः स्वचेतसा व्यचिन्तयत्, अहो! महदकृत्यमेतत् (ब)। उक्तञ्च,

गुरोः सुतां मित्रभार्य्यां स्वामिसेवकगेहिनीम्।
यो गच्छति पुमांल्लोके तमाहुर्ब्रह्मघातिनम् ॥ ११६ ॥

---

(न) पश्चिमावस्था अन्त्यावस्था मृत्युदशा इत्यर्थः।

(प) सौधावलम्बितया सौधात् अट्टात् अवलम्बितया लम्बमानया। दृढ़या कठिनया दुश्छेद्यया इति भावः वरत्रया रज्जुविशेषेण इत्यर्थः।

(फ) तत्र कुमारीहर्म्ये इत्यर्थः।

(ब) अकृत्यं अकार्य्यम्।

गुरोरिति। यः पुमान् गुरोः सुतां मित्रभार्य्यां स्वामिसेवकगेहिनीं प्रभुभार्य्यां भृत्यभार्य्यांञ्च गच्छति लोके जगति तं जनं ब्रह्मघातिनम्, आहुः कथयन्ति बुधा इति शेषः ॥ ११६ ॥

अपरञ्च, अयशः प्राप्यते येन येन चापगतिर्भवेत् ।
स्वर्गाच्च भ्रश्यते येन तत्कर्म्म न समाचरेत् ॥ ११७ ॥

इति सम्यग्विचार्य्य तत्सकाशं न जगाम । अथ प्राप्तव्यमर्थः (भ) पर्य्यटन् धवलगृहपार्श्वे (म) रात्रौ अवलम्बितवरत्रां दृष्ट्वा कौतुकाविष्टहृदयः ताम् आलम्ब्य अधिरूढः । तया च राजपुत्र्या स एव अयमिति आश्वस्तचित्तया स्नानखादन-पानाच्छादनादिना सम्मान्य तेन सह शयनतलमाश्रितया तदङ्गसंस्पर्शसञ्जातहर्षरोमाञ्चितगात्रया उक्तम्, युष्मद्दर्शनमात्रा-नुरक्तया मया आत्मा प्रदत्तोऽयम् । त्वद्वर्जं (य) अन्यो भर्त्ता मनसि अपि मे न भविष्यतीति । तत् कस्मात् मया सह न ब्रवीषि (र) । सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः । इत्युक्ते तयाऽन्योऽयमिति मत्वा धवलगृहात् उत्तार्य्य मुक्तः । स तु खण्डदेवकुले (ल) गत्वा सुप्तः । अथ तत्र कयाचित् स्वैरिण्या दत्तसङ्केतको यावत् दण्डपाशकः (व) प्राप्तस्तावत् असौ पूर्व-सुप्तः (श) तेन दृष्टो रहस्यसंरक्षणार्थमभिहितश्च को भवान् ?

---

अयश इति । येन कर्म्मणा अयशः अकीर्त्तिः प्राप्यते लभ्यते, येन च कर्म्मणा अपगतिः दुर्गतिः भवेत्, येन च कर्म्मणा स्वर्गात् भ्रश्यते, तत् कर्म्म न समाचरेत् न कुर्य्यात् ॥ ११७ ॥

(भ) प्राप्तव्यमर्थः सागरदत्तसुत इति भावः ।

(म) धवलगृहपार्श्वे सौधपार्श्वे ।

(य) त्वद्वर्जं त्वां वर्जयित्वा इत्यर्थः ।

(र) ब्रवीषि आलपसि ।

(ल) उत्तार्य्य निष्काश्य । मुक्तः त्यक्तः । खण्डदेवकुले भग्नदेवमन्दिरे ।

(व) स्वैरिण्या कुलटया । दण्डपाशकः तदाख्यः पुरुषः नगररक्षको वा ।

(श) पूर्वसुप्तः पूर्वं निद्रितः वणिक्सुतः इत्यर्थः ।

सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः। इति श्रुत्वा दण्डपाशकेन अभिहितम्, यच्छून्यं, देवगृहमिदम्। तदत्र मदीयस्थाने गत्वा स्वपिहि। तथा प्रतिपद्य (ष) स मतिविपर्य्यासात् (स) अन्यशयने सुप्तः। अथ तस्य रक्षकस्य कन्या नियमवती नाम रूपयौवनसम्पन्ना कस्यापि पुरुषस्य अनुरक्ता सङ्केतं दत्त्वा तत्र शयने सुप्तासीत्। अथ सा तम् आयातं दृष्ट्वा स एव अयमस्मद्वल्लभ इति रात्रौ घनतरान्धकारव्यामोहिता (ह) उत्थाय भोजनाच्छादनादिक्रियां कारयित्वा गान्धर्वविवाहेन आत्मानं विवाहयित्वा तेन समं शयने स्थिता विकसितवदनकमला तमाह, किमद्य अपि मया सह विस्रब्धं भवान् न ब्रवीति। सोऽब्रवीत्, प्राप्तव्यमर्थं लभते मनुष्यः इति श्रुत्वा तया चिन्तितम्, यत्कार्य्यम् असमीक्षितं (च) क्रियते तस्य ईदृक्फलविपाको भवतीति। एवं विमृश्य सविषादया तया निःसारितोऽसौ। स च यावद्वीथीमार्गेण (क) गच्छति तावत् अन्यविषयवासी (ख) वरकीर्त्तिर्नाम वरो महता वाद्यशब्देन आगच्छति। प्राप्तव्यमर्थोऽपि तैः समं गन्तुमारब्धः। अथ यावत्प्रत्यासन्ने लग्नसमये राजमार्गासन्नश्रेष्ठिगृहद्वारे रचितमण्डपवेदिकायां कृतकौतुकमङ्गलवेशा (ग)

---

(ष) प्रतिपद्य सम्मत्य।

(स) मतिविपर्य्यासात् बुद्धिवैपरीत्यात्।

(ह) घनेति। घनतरेण अतिमात्रेण अन्धकारेण व्यामोहिता। विप्रलब्धा।

(च) असमीक्षितम् अपरीक्षितम्।

(क) वीथीमार्गेण आलिमार्गेण।

(ख) अन्यविषयवासी अन्यदेशवासी।

(ग) कृतेति। कृतं कौतुकार्थं विवाहार्थं मङ्गलवेशो यया तादृशी।

वणिक्सुता अस्ति तावत् मदमत्तो हस्ती आरोहकं हत्वा प्रणश्यज्जनकोलाहलेन (घ) लोकमाकुलयन् तमेव उद्देशं प्राप्तः। तं च दृष्ट्वा सर्वे वरानुयायिनो (ङ) वरेण सह प्रणश्य (च) दिशो जग्मुः। अथ अस्मिन् अवसरे भयतरल-लोचनाम् एकाकिनीं कन्याम् अवलोक्य मा भैषीरहं परित्रा-तेति सुधीरं स्थिरीकृत्य (ज) दक्षिणपाणौ संगृह्य महासाह-सिकतया प्राप्तव्यमर्थः परुषवाक्यैः हस्तिनं निर्भर्त्सितवान् ततः कथमपि दैवयोगादपयाते हस्तिनि ससुहृद्बान्धवेन अतिक्रान्तलग्नसमये वरकीर्त्तिना आगत्य तावत् तां कन्याम् अन्यहस्तगतां दृष्ट्वा अभिहितम्, (झ) भोः श्वशुर ! विरुद्धमिदं त्वया अनुष्ठितं यन्मह्यं प्रदाय कन्याम् अन्यस्मै प्रदत्तेति। सोऽब्रवीत्, भो ! अहमपि हस्तिभयपलायितो भवद्भिः सह आयातो न जाने किमिदं वृत्तम्। इति अभिधाय दुहितरं प्रष्टुमारब्धः, वत्से ! न त्वया सुन्दरं कृतम्। तत्कथ्यतां कोऽयं वृत्तान्तः ? सोऽब्रवीत्, यदहमनेन प्राणसंशयात् रक्षिता तदा एनं मुक्त्वा मम जीवन्त्या नान्यः पाणिं ग्रहीष्यतीति। अनेन

---

(घ) आरोहकं हस्तिपालम्। प्रणश्यदिति। प्रणश्यतां पलायमानानां जनानां कोलाहलेन सहार्थे तृतीया।

(ङ) वरानुयायिनः वरयात्रिकाः।

(च) प्रणश्य पलाय्य।

(छ) भयेति। भयेन तरले चपले लोचने यस्यास्तथाभूताम्।

(ज) परित्राता रक्षिता। सुधीरं सधैर्य्यं स्थिरीकृत्य सान्त्वयित्वा।

(झ) अन्यहस्तगतां प्राप्तव्यमर्थहस्तगताम्। अभिहितम् उक्तं वरकीर्त्तिनेति शेषः।

वार्त्ताव्यतिकरेण रजनी व्युष्टा (ञ)। अथ प्रातस्तत्र सञ्जाते महाजनसमवाये वार्त्ताव्यतिकरं श्रुत्वा राजदुहिता तमुद्देशमागता। कर्णपरम्परया श्रुत्वा दण्डपाशकसुतापि तत्रैव आगता। अथ तं महाजनसमवायं श्रुत्वा राजा अपि तत्रैव आजगाम। प्राप्तव्यमर्थं प्राह, भो! विश्रब्धं कथय, कीदृशोऽसौ वृत्तान्तः, अथ सोऽब्रवीत्? प्राप्तव्यमर्थं लभते मनुष्य इति। राजकन्या स्मृत्वा प्राह, देवोऽपि तं लङ्घयितुं न शक्तः। ततो दण्डपाशकसुता अब्रवीत्, तस्मान्न शोचामि न विस्मयो मे इति। तम् अखिललोकवृत्तान्तम् आकर्ण्य वणिक्सुताऽब्रवीत्, यदस्मदीयं न हि तत्परेषामिति। अभयदानं दत्त्वा राज्ञा पृथक् पृथक् वृत्तान्तान् ज्ञात्वा अवगततत्त्वः (ट) तस्मै प्राप्तव्यमर्थाय स्वदुहितरं सबहुमानं ग्रामसहस्रेण समं सर्वालङ्कारपरिवारयुतां दत्त्वा त्वं मे पुत्रोऽसीति नगरविदितं तं यौवराज्येऽभिषिक्तवान्। दण्डपाशकेनापि स्वदुहिता स्वशक्त्या वस्त्रदानादिना सम्भाव्य प्राप्तव्यमर्थाय प्रदत्ता। अथ प्राप्तव्यमर्थेनापि स्वीयपितृमातरौ समस्तकुटुम्बावृतौ तस्मिन्नगरे सम्मानपुरःसरं समानीतौ। अथ सोऽपि स्वगोत्रेण सह विविधभोगान् उपभुञ्जानः सुखेन अवस्थितः। अतोऽहं ब्रवीमि,

प्राप्तव्यमर्थं लभते मनुष्यो देवोऽपि तं लङ्घयितुं न शक्तः।
तस्मान्न शोचामि न विस्मयो मे यदस्मदीयं न हि तत्परेषाम्॥११८

(ञ) वार्त्ताव्यतिकरेण वार्त्तासम्बन्धेन। व्युष्टा अतिक्रान्ता।

(ट) अवगततत्त्वः विदितवृत्तान्तः।

तदेतत्सकलं सुखदुःखमनुभूय परं विषादमुपागतोऽनेन मित्रेण त्वत्सकाशम् आनीतः। तदेतत् मे वैराग्यकारणम्। मन्थरक आह, भद्र! भवति सुहृदयसन्दिग्धं (ठ) यत् क्षुत्-क्षामोऽपि शत्रुभूतं त्वां भक्ष्यस्थाने स्थितमेवं पृष्ठमारोप्य आनयति न मार्गेऽपि भक्षयति। उक्तञ्च यतः,

विकारं याति नो चित्तं वित्ते यस्य कदाचन।
मित्रं स्यात् सर्वकाले च कारयेन्मित्रमुत्तमम् ॥ ११९ ॥
विद्वद्भिः सुहृदामत्र चिह्नैरेतैरसंशयम्।
परीक्षाकरणं प्रोक्तं होमाग्नेरिव पण्डितैः ॥ १२० ॥

तथा च, आपत्काले तु संप्राप्ते यन्मित्रं मित्रमेव तत्।
वृद्धिकाले तु संप्राप्ते दुर्जनोऽपि सुहृद्भवेत् ॥ १२१ ॥

तन्ममापि अद्य अस्य विषये विश्वासः समुत्पन्नो यतो नीतिविरुद्धा इयं मैत्री मांसाशिभिः वायसैः सह जलचराणाम्। अथवा साधु इदमुच्यते,

मित्रं कोऽपि न कस्यापि नितान्तं न च वैरकृत्।

---

(ठ) सुहृदयसन्दिग्धं सुहृदयैः जनैः सन्दिग्धं सन्देहास्पदं भवति एतदिति शेषः।

विकारमिति। यस्य वित्ते धने सति चित्तं कदाचन विकारं नो याति न प्राप्नोति यश्च सर्वकाले मित्रं सर्वभूतेषु सुहृद् स्यात् तम् उत्तमं पुरुषं मित्रं कारयेत् जन इति शेषः ॥ ११९ ॥

विद्वद्भिरिति। विद्वद्भिः पण्डितैः होमाग्नेरिव एतैश्चिह्नैः लक्षणैः अनिकृतरूपादिभिरिति भावः। असंशयं यथा तथा अत्र संसारे सुहृदां मित्राणां परीक्षाकरणं प्रोक्तं कथितम् ॥ १२० ॥

आपत्काले इति। आपत्काले सम्प्राप्ते सति यत् मित्रं तदेव मित्रम्। वृद्धिकाले सम्पदि सम्प्राप्ते तु दुर्जनोऽपि सुहृद् भवेत् ॥ १२१ ॥

दृश्यते मित्रविध्वस्तात् कार्य्याद्वैरी परीक्षितः ॥१२२॥

तत् स्वागतं भवतः ? स्वगृहवदास्यतामत्र सरस्तीरे। यच्च वित्तनाशो विदेशवासश्च ते सञ्जातस्तत्र विषये सन्तापो न कर्त्तव्यः। उक्तञ्च,

अभ्रच्छाया खलप्रीतिः सिद्धमन्नञ्च योषितः।
किञ्चित् कालोपभोग्यानि यौवनानि धनानि च ॥१२३॥

अतएव विवेकिनो जितात्मानो (ड) धनस्पृहां न कुर्वन्ति।

उक्तञ्च, सुसञ्चितैर्जीवनवत् सुरक्षितैः
निजेऽपि देहे न वियोजितैः क्वचित्।
पुंसो यमान्तं व्रजतोऽपि निष्ठुरैः
एतैर्धनैः पञ्चपदी न दीयते ॥ १२४ ॥

अन्यच्च, यथामिषं जले मत्स्यैर्भक्ष्यते श्वापदैर्भुवि।
आकाशे पक्षिभिश्चैव तथा सर्वत्र वित्तवान् ॥१२५॥

---

मित्रमिति। कोऽपि जनः कस्यापि न मित्रं न च नितान्तं वैरकृत् मित्रविध्वस्तात् मित्रविपरीतात् कार्य्यात् परीक्षितो वैरी शत्रुः दृश्यते ॥ १२२ ॥

अभ्रेति। अभ्राणां मेघानां छाया खलानां दुर्जनानां प्रीतिः सिद्धं पक्वम् अन्नं योषितः स्त्रियः यौवनानि धनानि च किञ्चित्कालोपभोग्यानि अल्पकालसम्भोग्यानि ॥ १२३ ॥

(ड) जितात्मानः जितेन्द्रियाः।

सुसञ्चितैरिति। सुसञ्चितैः अतिकष्टेन संगृहीतैः जीवनवत् प्राणवत् सुरक्षितैः निजदेहे क्वचिदपि न वियोजितैः कदापि न व्ययितैरिति भावः। एतैः निष्ठुरैः अकृतज्ञैरिति भावः धनैः यमान्तं यमसकाशं व्रजतः गच्छतोऽपि पुंसः पञ्चपदी न दीयते पञ्चपदगमनार्थं पाथेयमपीति भावः। न दीयते। वंशस्थविलं वृत्तम् ॥१२४॥

यथेति। मत्स्यैः जले श्वापदैः भुवि पक्षिभिः आकाशे आमिषं भक्ष्यं वस्तु यथा भक्ष्यते तथा वित्तवान् धनवान् जनः सर्वत्र भक्ष्यते इत्यनुषज्यते ॥ १२५ ॥

निर्दोषमपि वित्ताढ्यं दोषैर्योजयते नृपः ।
निर्धनः प्राप्तदोषोऽपि सर्वत्र निरुपद्रवः ॥ १२६ ॥
अर्थानामर्जने दुःखमर्जितानां च रक्षणे ।
नाशे दुःखं व्यये दुःखं धिगर्थान् कष्टसंश्रयान् ॥१२७॥
अर्थार्थी यानि कष्टानि मूढोऽयं सहते जनः ।
शतांशेनापि मोक्षार्थी तानि चेन्मोक्षमाप्नुयात् ॥१२८॥

अपरं, विदेशवासजमपि वैराग्यं त्वया न कार्य्यम् । यतः,

को धीरस्य मनस्विनः स्वविषयः ? को वा विदेशः स्मृतो ?
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद्दंष्ट्रानखलाङ्गूलप्रहरणैः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ १२९ ॥

---

निर्दोषमिति । नृपः निर्दोषमपि वित्ताढ्यं धनिनं दोषैः योजयते दूषितं करोति इत्यर्थः धनलोभादिति भावः । निर्धनः जनः प्राप्तदोषोऽपि दोषी अपि सर्वत्र निरुपद्रवः उपद्रवहीनः कैरपि न उपद्रूयते इत्यर्थः धनप्राप्तिविरहादिति भावः ॥ १२६ ॥

अर्थानामिति । अर्थानां धनानाम् अर्जने उपार्जने दुःखम् अर्जितानाञ्च अर्थानां रक्षणे दुःखं नाशे अर्थानामिति शेषः । दुःखं व्यये वितरणे दुःखं
तस्मात् कष्टसंश्रयान् केवलकष्टाधारान् अर्थान् धिक् निन्दामि इत्यर्थः ॥ १२७ ॥

अर्थार्थीति । अर्थार्थी धनार्थी अयं मूढो जनः यानि कष्टानि सहते मोक्षार्थी जनः चेत् यदि शतांशेनापि तानि कष्टानि सहते इति शेषः तदा मोक्षम् अवाप्नुयात् लभते ॥ १२८ ॥

क इति । धीरस्य मनस्विनः स्वविषयः स्वदेशः कः, को वा विदेशः स्मृतः ? न देशविदेशगणनेति भावः । यं देशं श्रयते आश्रयति धीरो जनः इति शेषः तमेव देशं बाहुप्रतापार्जितं स्वबाहुबललब्धं करोति । दंष्ट्रा नखाः लाङ्गूलञ्च तानि प्रहरणानि अस्त्राणि येषां तैः उपलक्षितः सिंहः यत् वनं गाहते प्रविशति तस्मिन्नेव हतानां द्विपेन्द्राणां रुधिरैः आत्मनः तृष्णां छिनत्ति अपनयति विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः । शार्दूलविक्रीडितं वृत्तम् ॥ १२९ ॥

अर्थहीनः परे देशे गतोऽपि यः प्रज्ञावान् भवति स कथञ्चिदपि न सीदति (ढ)। उक्तञ्च,

कोऽतिभारः समर्थानां ? किं दूरं व्यवसायिनाम् ?
को विदेशः सुविद्यानां ? कः परः प्रियवादिनाम् ? ॥१३०॥

तत् प्रज्ञानिधिर्भवान् न प्राकृतपुरुषतुल्यः, (ण) अथवा,

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढसौहृदञ्च लक्ष्मीः स्वयं मार्गति वासहेतोः॥१३१॥

अपरं प्राप्तोऽपि अर्थः कर्मप्राप्त्या (त) नश्यति। तत् एतावन्ति दिनानि त्वदीयमासीत्। मुहूर्त्तमपि अनात्मीयं (थ) भोक्तुं न लभ्यते (द)। स्वयमागतमपि विधिनापह्रियते।

अर्थस्योपार्ज्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा ॥ १३२ ॥

---

(ढ) सीदति क्लिश्यति।

क इति। समर्थानां शक्तिमताम् अतिभारः कः ? व्यवसायिनः वणिजां दूरं किम् ? सुविद्यानां सुशिक्षितविद्यानां सविद्यानामिति वा पाठः। विदेशः कः ? तथा प्रियवादिनां परः कः ? न कोऽपि इत्यर्थः ॥ १३० ॥

(ण) प्रज्ञानिधिः अतिबुद्धिमान्। प्राकृतपुरुषतुल्यः सामान्यमनुष्यसदृशः।

उत्साहेति। लक्ष्मीः सम्पद् वासहेतोः आश्रमार्थम् उत्साहसम्पन्नम् उत्साहिनम् अदीर्घसूत्रम् अचिरक्रियं दीर्घसूत्रश्चिरक्रिय इत्यमरः। क्रियाविधिज्ञं कार्य्यानुष्ठानदक्षं व्यसनेषु कामजक्रोधजाष्टादशविधमृगयादिदोषेषु असक्तम् अनासक्तं शूरं बलवन्तं कृतज्ञं प्रत्युपकारकं तथा दृढं सौहृदं मैत्रं यस्य तादृशं मैत्रीधर्मादस्खलितम् इत्यर्थः जनं स्वयं मार्गति अन्विष्यति। उपजातिवृत्तम् ॥ १३१ ॥

(त) कर्मप्राप्त्या कर्मलाभेन कर्मवशेनेति यावत् नश्यति नष्टं भवति।

(थ) दीनानि इति व्याप्तौ द्वितीया। त्वदीयं तवायत्तं धनमिति शेषः। मुहूर्त्तमपि अल्पकालमपि अनात्मीयम् अस्वम्।

(द) लभ्यते प्राप्यते।

अर्थस्येति। महत् अरण्यम् आसाद्य मूढः अज्ञः सोमिलकः यथा जनः अर्थस्य उपार्जनं कृत्वा भोगं नैव समश्नुते लभते ॥ १३२ ॥

हिरण्यक आह, कथमेतत् ? स आह,

## कथा ५।

कस्मिंश्चिदधिष्ठाने सोमिलको नाम कौलिको (ध) वसति स्म, स च अनेकविधपटरचनारञ्जितानि पार्थिवोचितानि (न) सदा एव वस्त्राणि उत्पादयति। परं तस्य च अनेकविधपट्टरचनानिपुणस्यापि न भोजनाच्छादनाभ्यधिकं कथमपि अर्थमात्रं सम्पद्यते। अथ अन्ये तत्र सामान्यकौलिकाः स्थूलवस्त्रसम्पादनविज्ञानिनो महर्द्धिसम्पन्नाः (प)। तान् अवलोक्य स स्वभार्य्यामाह, प्रिये ! पश्य एतान् स्थूलपट्टकारकान् धनकनकसमृद्धान्। तदधारणकं मम एतत्स्थानम् (फ)। तदन्यत्र उपार्जनाय गच्छामि। सा प्राह, भोः प्रियतम ! मिथ्याप्रलपितमेतद् यत् अन्यत्र गतानां धनं भवति, स्वस्थाने न भवति।

उक्तञ्च, उत्पतन्ति यदाकाशे निपतन्ति महीतले।
पक्षिणां तदपि प्राप्त्या नादत्तमुपतिष्ठति॥ १३३॥

---

(ध) कौलिकः तन्तुवायाख्यजातिविशेषः।

(न) पार्थिवोचितानि राजयोग्यानि।

(प) महर्द्धिसम्पन्नाः महाधनशालिनः।

(फ) अधारणकं न धारकम्। एतत्स्थानं मां न धारयति इत्यर्थः। अत्र मम सौभाग्यं नास्तीति भावः।

उत्पतन्तीति। यत् आकाशे उत्पतन्ति यच्च महीतले निपतन्ति पक्षिण इति शेषः तदपि तथापि पक्षिणां प्राप्त्या अवश्यलभ्यतया दिष्ट्या इत्यर्थः अदत्तं न उपतिष्ठति यदि च ते आकाशे वा महीतले विचरन्ति तथापि दैवेन यदा दत्तं तदेव ते प्राप्नुवन्तीति भावः॥ १३३॥

तथा च, न हि भवति यन्न भाव्यं
भवति च भाव्यं विनापि यत्नेन।
करतलगतमपि नश्यति
यस्य तु भवितव्यता नास्ति ॥ १३४ ॥

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम्।
तथा पुरा कृतं कर्म कर्त्तारमनुगच्छति ॥ १३५ ॥

शेते सह शयानेन गच्छन्तमनुगच्छति।
नराणां प्राक्तनं कर्म तिष्ठेत्त्वथ सहात्मना ॥ १३६ ॥

यथा छायातपौ नित्यं सुसम्बद्धौ परस्परम्।
एवं कर्म च कर्त्ता च संश्लिष्टावितरेतरम् ॥ १३७ ॥

तस्मादत्र एव व्यवसायपरो (ब) भव। कौलिक आह प्रिये! न सम्यगभिहितं भवत्या, व्यवसायं विना कर्म न फलति (भ)।

उक्तञ्च, यथैकेन न हस्तेन तालिका सम्प्रपद्यते।

---

न हीति। यत् भाव्यम् अवश्यं भावि न तत् न हि भवति भाव्यञ्च यत्नेन विनापि भवति। यस्य तु भवितव्यता भाग्यं नास्ति तस्य करतलगतमपि नश्यति नष्टं भवति। आर्य्यावृत्तम् ॥ १३४ ॥

यथेति। धेनुसहस्रेषु मध्ये वत्सः यथा मातरं विन्दति आश्रयति तथा पुराकृतं प्राग्भवीयं कर्म कर्त्तारम् अनुगच्छति प्राप्नोति ॥ १३५ ॥

शेते इति। नराणां प्राक्तनं पूर्वकृतं कर्म शयानेन नरेण सह शेते गच्छन्तं नरम् अनुगच्छति अथ आत्मना सह तिष्ठेत् स्थितिं करोति इत्यर्थः ॥ १३६ ॥

यथेति। छायातपौ यथा नित्यं सततं परस्परं सुसम्बद्धौ संयुक्तौ एवं तथा कर्म च कर्त्ता च इतरेतरम् अन्योन्यं संश्लिष्टौ सम्बद्धौ स्वकर्मफलभुक् पुमानिति भावः ॥ २३७ ॥

(ब) व्यवसायपरः उद्योगपरः यत्नवान् इत्यर्थः।

(भ) व्यवसायं यत्नम्। फलति सिद्ध्यति।

यथेति। यथा एकेन हस्तेन तालिका करतलशब्दः न सम्पद्यते, न निष्पद्यते,

तथोद्यमपरित्यक्तं न फलं कर्मणः स्मृतम् ॥१३८॥
पश्य कर्मवशात् प्राप्तं भोज्यकालेऽपि भोजनम्।
हस्तोद्यमं विना वक्त्रे प्रविशेन्न कथञ्चन॥ १३९ ॥

तथा च, उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीः
दैवं हि दैवमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिद्ध्यति कोऽत्र दोषः? ॥१४०॥

तथा च, उद्यमेन हि सिद्ध्यन्ति कार्य्याणि न मनोरथैः।
न हि सिंहस्य सुप्तस्य प्रविशन्ति मुखे मृगाः ॥१४१॥
उद्यमेन विना राजन्! न सिद्ध्यन्ति मनोरथाः।
कातरा इति जल्पन्ति यद्भाव्यं तद्भविष्यति ॥ १४२ ॥
स्वशक्त्या कुर्वतः कर्म न चेत् सिद्धिं प्रयच्छति।

---

तथा उद्यमपरित्यक्तं यत्नशून्यं कर्मणः फलं न स्मृतं न कथितं यत्नेन विना कर्म न सिद्ध्यति इत्यर्थः॥ १३८ ॥

पश्येति। पश्य अवलोकय, कर्मवशात् भोज्यकाले भोजनसमये प्राप्तमपि उपस्थितमपि भोजनं हस्तस्य उद्यमं चेष्टां विना वक्त्रे मुखे कथञ्चन न प्रविशेत्॥ १३९॥

उद्योगिनमिति। लक्ष्मीः उद्योगिनं पुरुषसिंहं नरवरं उपैति प्राप्नोति, कापुरुषाः दैवं दैवमिति वदन्ति। दैवं निहत्य आत्मशक्त्या पौरुषं यत्नं कुरु, यत्ने कृते सति यदि न सिद्ध्यति कार्य्यमिति शेषः तदा अत्र संसारे को दोषः? ॥ १४० ॥

उद्यमेनेति। कार्य्याणि उद्यमेन हि यत्नेनैव सिद्ध्यन्ति, मनोरथैः सङ्कल्पैर्न। सुप्तस्य निद्रितस्य सिंहस्य मुखे मृगाः न हि प्रविशन्ति॥ १४१ ॥

उद्यमेनेति। हे राजन्! उद्यमेन यत्नेन विना मनोरथाः न सिद्ध्यन्ति कातराः अलसाः जनाः यद्भाव्यं तद्भविष्यतीति जल्पन्ति कथयन्ति ॥ १४२ ॥

स्वशक्त्येति। निजसामर्थ्येन कुर्वतः जनस्य कर्म चेत् यदि न सिद्धिं प्रयच्छति

नोपालभ्यः पुमांस्तत्र दैवान्तरितपौरुषः ॥ १४३ ॥

तन्मया अवश्यं देशान्तरं गन्तव्यम्। इति निश्चित्य वर्द्धमानपुरं गतः। तत्र च वर्षत्रयं स्थित्वा सुवर्णशतत्रयोपार्जनं कृत्वा भूयः स्वगृहं प्रस्थितः। अथ अर्द्धपथे गच्छतः तस्य कदाचित् अटव्यां पर्य्यटतो (म) भगवान् रविरस्तमुपागतः। तदा असौ व्यालभयात् (य) स्थूलतरवटस्कन्धमारुह्य यावत् प्रसुप्तः तावत् निशीथे स्वप्ने द्वौ पुरुषौ रौद्राकारौ (र) परस्परं प्रजल्पन्तौ अशृणोत्। तत्रैक आह, भोः कर्त्तः! (ल)। त्वं किं सम्यक् न वेत्सि? यदस्य सोमिलकस्य भोजनाच्छादनाभ्यधिका समृद्धिर्नास्ति (व)। तत् किं त्वया अस्य सुवर्णशतत्रयं प्रदत्तम्। स आह, भोः कर्मन्! मया अवश्यं दातव्यं व्यवसायिनां (श) तत्र च तस्य परिणतिः त्वदायत्ता (ष) इति।

अथ यावदसौ कौलिकः प्रबुद्धः सुवर्णग्रन्थिम् अवलोकयति, तावत् रिक्तं पश्यति। ततः साक्षेपं (स) चिन्तया-

---

गच्छति तत्र तथा सति पुमान् न उपालभ्यः न तिरस्कार्य्यः यतः सः दैवेन अन्तरितं तिरोहितं पौरुषं यस्य तथाभूतः ॥ १४३ ॥

(म) पर्य्यटतः गच्छतः।

(य) व्यालभयात् हिंस्रश्वापदभयात्।

(र) रौद्राकारौ भीषणाकृती।

(ल) कर्त्तः! प्रभो!।

(व) समृद्धिः सम्पद् नास्ति भोग्ये इति शेषः।

(श) व्यवसायिनाम् उद्योगिनाम्। तस्य दत्तस्येत्यर्थः परिणतिः परिणामः स्थितिरिति यावत्।

(ष) त्वदायत्ता तवाधीना।

(स) प्रबुद्धः जागरितः। साक्षेपं सखेदम्।

मास, अहो! किमेतत्? महता कष्टेन उपार्जितं वित्तं हेलया क्वापि गतम्। तदद्यर्थश्रमोऽकिञ्चनः (ङ) कथं स्वपत्न्या मित्राणाञ्च मुखं दर्शयिष्यामि। इति निश्चित्य तदेव पत्तनं (च) गतः। तत्र च वर्षमात्रेणापि सुवर्णशतपञ्चकमुपार्ज्य भूयोऽपि स्वस्थानं प्रति प्रस्थितः। यावत् अर्द्धपथे भूयोऽटवीगतस्य भगवान् भानुरस्तं जगाम। अथ सुवर्णनाशभयात् सुश्रान्तोऽपि न विश्राम्यति केवलं कृतगृहोत्कण्ठः (क) सत्वरं व्रजति। अत्रान्तरे द्वौ पुरुषौ तादृशौ दृष्टिदेशे समागच्छन्तौ जल्पन्तौ च शृणोति। तत्रैकः प्राह, भो कर्त्तः! किं त्वया एतस्य सुवर्णशतपञ्चकं प्रदत्तम्। तत् किं न वेत्सि? यद्भोजनाच्छादनाभ्यधिकमस्य किञ्चित् नास्ति। स आह, भोः कर्मन्! मया अवश्यं देयं व्यवसायिनाम्। तस्य परिणामः त्वदायत्तः। तत् किं माम् उपालभ्यसि (ख)? तत् श्रुत्वा सोमिलको यावद्ग्रन्थिम् अवलोकयति तावत् सुवर्णं नास्ति। ततः परं दुःखमापन्नो व्यचिन्तयत्, अहो! किं मम धनरहितस्य जीवितेन। तदत्र वटवृक्षे आत्मानमुद्बध्य प्राणान् त्यजामि। एवं निश्चित्य दर्भमयीं रज्जुं विधाय स्वकण्ठे पाशं नियोज्य शाखायाम् आत्मानं निबध्य यावत् प्रक्षिपति तावदेकः पुमान् आकाशस्थ एव इदमाह, भो भोः सोमिलक! मा एवं साहसं

---

(ङ) अकिञ्चनः निर्धनः।

(च) पत्तनं नगरम्।

(क) कृतगृहोत्कण्ठः गृहं प्रति उत्कण्ठितः।

(ख) उपालभ्यसि तिरस्करोषि दर्भमयीं कुशमयीम्।

कुरु। अहं ते वित्तापहारको, (ग) न ते भोजनाच्छादनाभ्यधिकां वराटिकामपि सहामि। तद्गच्छ स्वगृहं प्रति। अन्यच्च भवदीयसाहसेन अहं तुष्टः। तथा मे न स्यात् व्यर्थं दर्शनम्। तत् प्रार्थ्यताम् अभीष्टो वरः कश्चित्। सोमिलक आह, यदि एवं तद्देहि मे प्रभूतं धनम्। स आह, भोः! किं करिष्यसि भोगरहितेन धनेन? यतः तव भोजनाच्छादनाभ्यधिका प्राप्तिरपि नास्ति। उक्तञ्च,

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या च वेश्येव सामान्या पथिकैरुपभुज्यते॥ १४४॥

सोमिलक आह, यद्यपि भोगो नास्ति तथापि तद्भवतु। उक्तञ्च, कृपणोऽप्यकुलीनोऽपि सज्जनैर्वर्जितः सदा।
सेव्यते स नरो लोके यस्य स्यात् वित्तसञ्चयः॥१४५॥

तथाच, शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च॥१४६॥

पुरुष आह, किमेतत्? सोऽब्रवीत्।

---

(ग) वित्तापहारकः धनहर्त्ता

किमिति। तया लक्ष्म्या सम्पदा किं क्रियते? या लक्ष्मीः केवला वधूरिव स्नुषेव न भोग्येति भावः। या च सामान्या साधारणी वेश्येव पथिकैः उपभुज्यते नतु स्वयमिति भावः॥ १४४॥

कृपण इति। यस्य वित्तसञ्चयः धनसमूहः स्यात् सः नरः सदा सज्जनैः वर्जितः परित्यक्तः दुर्जन इति भावः कृपणः व्ययवर्जितः तथा अकुलीनः असत्कुलप्रसूतोऽपि लोके संसारे सेव्यते पूज्यते॥ १४५॥

शिथिलाविति। हे भद्रे! मया दश पञ्च च वर्षाणि पञ्चदशवत्सरान् इत्यर्थः शिथिलौ च सुबद्धौ दृढौ च पततः न वा पततः निरीक्षितौ दृष्टौ वृषणाविति शेषः॥ १४६॥

## कथा ६ ।

कस्मिंश्चित् अधिष्ठाने तीक्ष्णविषाणो (घ) नाम महावृषभः प्रतिवसति स्म, स च मदातिरेकात् परित्यक्तनिजयूथः शृङ्गाभ्यां नदीतटानि विदारयन् स्वेच्छया मरकतसदृशानि शष्पाणि भक्षयन् अरण्यचरो बभूव। अथ तत्र एव वने प्रलोभको नाम शृगालः प्रतिवसति स्म। स कदाचित् स्वभार्यया सह नदीतीरे सुखोपविष्टः तिष्ठति। अत्रान्तरे स तीक्ष्णविषाणो जलार्थं तदेव पुलिनम् अवतीर्णः। ततश्च तस्य लम्बमानौ वृषणौ (ङ) अवलोक्य शृगाल्या शृगालोऽभिहितः, स्वामिन्! पश्य अस्य वृषभस्य मांसपिण्डौ लम्बमानौ यथा स्थितौ। तदेतौ क्षणेन प्रहरेण वा पतिष्यतः। एवं ज्ञात्वा भवता पृष्ठनुयायिना भाव्यम्। शृगाल आह, प्रिये! न ज्ञायते कदाचित् एतयोः पतनं भविष्यति वा न वा। तत् किं वृथाश्रमाय मां नियोजयसि। अत्रस्थः तावज्जलार्थम् आगतान् मूषकान् (च) भक्षयिष्यामि समं त्वया मार्गोऽयं यतः तेषाम्। अपरं यदि त्वां मुक्त्वा (छ) अस्य तीक्ष्णविषाणस्य वृषभस्य पृष्ठे गमिष्यामि तदा आगत्य अन्यः कश्चिदेतत् स्थानं समाश्रयिष्यति। न एतत् युज्यते कर्त्तुम्। उक्तञ्च,

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।

---

(घ) तीक्ष्णविषाणः दृढशृङ्गः।

(ङ) वृषणौ अण्डकोषौ।

(च) यतः यस्मात् हेतोः तेषां मूषकाणाम् अयं मार्गः पन्थाः।

(छ) मुक्त्वा विहाय।

य इति। यो जनः ध्रुवाणि निश्चितानि परित्यज्य अध्रुवाणि अनिश्चितानि

ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव च ॥ १४७ ॥

शृगालो आह, भोः! कापुरुषः त्वं यत्किञ्चित् प्राप्तं तेनापि सन्तोषं करोषि। उक्तञ्च,

सुपूरा स्यात् कुनदिका सुपूरो मूषिकाञ्जलिः।
सुसन्तुष्टः कापुरुषः स्वल्पकेनापि तुष्यति ॥ १४८ ॥

तस्मात् पुरुषेण सदा एव उत्साहवता भाव्यम्। उक्तञ्च,

यत्रोत्साहसमारम्भो यत्रालस्यविहीनता।
नयविक्रमसंयोगस्तत्र श्रीरचला ध्रुवम् ॥ १४९ ॥

तद्दैवमिति सञ्चिन्त्य त्यजेन्नोद्योगमात्मनः।
अनुयोगं विना तैलं तिलानां नोपजायते ॥१५०॥

अन्यच्च, यः स्तोकेनापि सन्तोषं कुरुते मन्दधीर्जनः।
तस्य भाग्यविहीनस्य दत्ता श्रीरपि मार्ज्यते ॥१५१॥

---

निषेवते आश्रयति तस्य ध्रुवाणि नश्यन्ति अध्रुवं अनिश्चितं नष्टमेव पूर्वमेव नष्टम् इत्यर्थः ॥ १४७ ॥

सुपूरेति। कुनदिका क्षुद्रा नदी सुपूरा अल्पेनैव पूरणीया स्यात् मूषिकस्य अञ्जलिः अतिक्षुद्र इति भावः। सुपूरः अल्पेनैव पूर्यः। तथा सुसन्तुष्टः कापुरुषः क्षुद्रो नरः स्वल्पकेनापि वस्तुनेति शेषः तुष्यति ॥ १४८ ॥

यत्रेति। यत्र उत्साहेन समारम्भः सम्यक् उद्योगः कर्म वा यत्र आलस्यहीनता अनालस्यं तथा नयविक्रमयोः नीतिपुरुषकारयोः संयोगः समावेशः, तत्र अचला श्रीः सम्पद् ध्रुवं निश्चितं तिष्ठतीति शेषः ॥ १४९ ॥

तदिति। तत्प्रसिद्धम् इत्यर्थः दैवम् अप्रतिसमाधेयमिति भावः। सञ्चिन्त्य आत्मनः उद्योगं न त्यजेत्। अनुयोगं पौरुषेण सह योगं विना तिलानां तैलं न उपजायते। तिलपेषणेनैव तैलं भवतीति भावः ॥ १५० ॥

य इति। यः मन्दधीः मूढमतिर्जनः स्तोकेनापि अल्पेनैव सन्तोषं कुरुते भाग्यविहीनस्य हतभाग्यस्य तस्य दत्तापि केनापीति शेषः। श्रीः सम्पद् मार्ज्यते क्षीयते जनैरिति शेषः ॥ १५१ ॥

यच्च त्वं वदसि, एतौ पतिष्यतो न वेति, तदपि अयुक्तम् । उक्तञ्च, कृतनिश्चयिनो वन्द्या तुङ्गिमा नः प्रशस्यते ।

चातकः को वराकोऽयं ? यस्येन्द्रो वारिवाहकः ॥१५२॥

अपरं मूषकमांसस्य निर्विसा (ज) अहम्, एतौ च मांसपिण्डौ पतनप्रायौ दृश्येते, तत्सर्वथा नान्यथा कर्त्तव्यमिति अथ असौ तदाकर्ण्य मूषकप्राप्तिस्थानं परित्यज्य तीक्ष्णविषाणस्य पृष्ठमन्वगच्छत् । अथवा साधु इदमुच्यते,

तावत् स्यात् सर्वकृत्येषु पुरुषोऽत्र स्वयं प्रभुः ।
स्त्रीवाक्याङ्कुशविक्षुण्णो यावन्नो ध्रियते बलात् ॥१५३॥

अकृत्यं मन्यते कृत्यमगम्यं मन्यते सुगम् ।
अभक्ष्यं मन्यते भक्ष्यं स्त्रीवाक्यप्रेरितो नरः ॥१५४॥

एवं स तस्य ( झ ) पृष्ठतः सभार्य्यः परिभ्रमन् चिरकालम्

---

कृतेति । कृतनिश्चयिनः कार्य्यसिद्धौ दृढ़ोत्साहवत इत्यर्थः वन्द्या वन्दनीया पूजनीया इत्यर्थः तुङ्गिमा उच्चाभिलाष इति यावत् नः अस्माकं प्रशस्यते । तथाहि अयं चातकी वराकः दीनः कः ? यस्य चातकस्य कृतनिश्चयिन इति भावः इन्द्रः देवराजः वारिवाहकः जलदाता । चातकः अतिक्षुद्रोऽपि निश्चितं कार्य्यं साधयामीति प्रतिज्ञाय देवराजं जलार्थं प्रार्थयते, देवराजोऽपि तदीयं निश्चयं ज्ञात्वा तं तस्य मनोरथं पूरयतीति भावः ॥ १५२ ॥

(ज) निर्विसा तृप्ता मूषकमांसभक्षणे न मम रुचिरस्तीति भावः ।

तावदिति । अत्र संसारे पुरुषः यावत् बलात् स्त्रीणां वाक्यमेव अङ्कुशं दण्डविशेषः तेन विक्षुण्णः विताड़ितः न ध्रियते न तिष्ठति तावत् सर्वेषु कृत्येषु कार्य्येषु स्वयं प्रभुः स्वाधीनः स्यात् । स्त्रीवश्यानां हि स्वाधीनता नश्यतीति भावः ॥ १५३ ॥

अकृत्यमिति । स्त्रीणां वाक्येन प्रेरितः नियुक्तः नरः अकृत्यम् अकार्य्यं कृत्यं मन्यते, अगम्यं सुगं सुगमं मन्यते, तथा अभक्ष्यं भक्ष्यं मन्यते ॥ १५४ ॥

(झ) तस्य वृषभस्य ।

अनयत्। न च तयोः पतनम् अभूत्। ततश्च निर्वेदात् (ञ) पञ्चदशे वर्षे शृगालः स्वभार्य्यामाह,

शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च ॥१५५॥

तयोः तत्पश्चादपि पातो न भविष्यति। तत् तदेव स्वस्थानं गच्छावः अतोऽहं ब्रवीमि,

शिथिलौ च सुबद्धौ च पततः पततो न वा।
निरीक्षितौ मया भद्रे! दश वर्षाणि पञ्च च ॥१५६॥

पुरुष आह, यदि एवं तद्गच्छ भूयोऽपि वर्द्धमानपुरम्। तत्र द्वौ वणिक्पुत्रौ वसतः, एको गुप्तधनः, द्वितीय उपभुक्तधनः। (ट) ततः तयोः स्वरूपं (ठ) बुद्ध्वा एकस्य वरः प्रार्थनीयः। यदि ते धनेन प्रयोजनम् अभक्षितेन ततः त्वामपि गुप्तधनं करोमि। अथवा दत्तभोग्येन धनेन ते प्रयोजनं तदुपभुक्तधनं करोमीति। एवमुक्त्वा अदर्शनं गतः। सोमिलकोऽपि विस्मितमना भूयोऽपि वर्द्धमानपुरं गतः। अथ सन्ध्यासमये श्रान्तः कथमपि तत् पुरं प्राप्तो गुप्तधनगृहं पृच्छन् कृच्छ्रात् लब्ध्वा अस्तमितसूर्य्ये प्रविष्टः। अथ असौ भार्य्यापुत्रसमेतेन गुप्तधनेन निर्भर्त्स्यमानो हठाद् गृहं प्रविश्य उपविष्टः। ततश्च भोजनवेलायां तस्यापि भक्तिवर्जितं किञ्चिदशनं दत्तम्। ततश्च भुक्त्वा तत्र एव यावत् सुप्तो निशीथे पश्यति तावत् तौ अपि द्वौ पुरुषौ परस्परं मन्त्रयतः।

---

(ञ) तयोः वृषणयोः। निर्वेदात् विरागात्।
(ट) गुप्तधनः रक्षितधनः। उपभुक्तधनः व्ययितधनः।
(ठ) स्वरूपं भावम् आशयम् इत्यर्थः।

तत्र एक आह, भोः कर्त्तः! किं त्वया अस्य गुप्तधनस्य अन्योऽधिको व्ययो निर्म्मितो (ड) यत् सोमिलकस्य अनेन भोजनं दत्तम्। तदयुक्तं त्वया कृतम्। स आह, भोः कर्म्मन्! न मम अत्र दोषः मया पुरुषस्य लाभप्राप्तिर्दातव्या। तत्परिणतिः पुनः त्वदायत्तेति। अथ असौ यावदुत्तिष्ठति तावद् गुप्तधनो विसूचिकया खिद्यमानो (ढ) रुजाभिभूतः क्षणं तिष्ठति। ततो द्वितीयेऽह्नि तद्दोषेण (ण) कृतोपवासः सञ्जातः। सोमिलकोऽपि प्रभाते तद्गृहात् निष्क्रम्य उपभुक्तधनगृहं गतः। तेनापि च अभ्युत्थानादिना सत्कृतो विहितभोजनाच्छादनसम्मानः तस्य एव गृहे भव्यशय्याम् आरुह्य सुष्वाप। ततश्च निशीथे यावत्पश्यति तावत् तौ एव द्वौ पुरुषौ मिथो मन्त्रयतः। अथ तयोः एक आह, भोः कर्त्तः! अनेन सोमिलकस्य उपकारं कुर्वता प्रभूतो व्ययः कृतः, तत् कथय कथम् अस्य उद्धारकविधिः भविष्यति। अनेन सर्वमेतद्व्यवहारकगृहात् (त) समानीतम्। स आह, भोः कर्म्मन्! मम कृत्यमेतत्। परिणतिः त्वदायत्तेति। अथ प्रभातसमये राजपुरुषो राजप्रसादजं (थ) वित्तम् आदाय

---

(ड) निर्मितः सृष्टः निर्द्धारित इत्यर्थः।

(ढ) विसूचिकया व्याधिविशेषेण। खिद्यमानः पीड्यमानः।

(ण) तद्दोषेण तेन दोषेण व्याधिनेति भावः। सोमिलकाय एकवारभोजनदानेन आत्मनस्तदंशस्य विच्छेदात् एकदिनोपवासेन तत्प्रतिसमाहितं कर्मणेति भावः।

(त) उद्धारकविधिः परिशोधविधानम्। एतत् सोमिलकस्य परिचर्य्यार्थं द्रव्यम्। व्यवहारकगृहात् व्यवसायिगृहात्।

(थ) राजप्रसादजं राज्ञा पुरस्कारत्वेन दत्तमिति भावः। आतिथ्यसत्कारजप्रकर्षफलमिदमिति भावः।

समायात उपभुक्तधनाय समर्पयामास। तद् दृष्ट्वा सोमिलकः चिन्तयामास, सञ्चयरहितोऽपि वरमेष उपभुक्तधनो न असौ गुप्तधनः। उक्तञ्च,

अग्निहोत्रफला वेदाः शीलवित्तफलं श्रुतम्।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम्॥ १५७॥

तद्विधाता मां दत्तभुक्तधनं करोतु, न कार्य्यं मे गुप्तधनेन। ततः सोमिलको दत्तभुक्तधनः सञ्जातः। अतोऽहं ब्रवीमि,

अर्थस्योपार्जनं कृत्वा नैव भोगं समश्नुते।
अरण्यं महदासाद्य मूढः सोमिलको यथा॥१५८॥

तद्भद्र हिरण्यक! एवं ज्ञात्वा धनविषये सन्तापो न कार्य्यः। अथ विद्यमानमपि धनं भोज्यवन्ध्यतया (द) तत् अविद्यमानं मन्तव्यम्। उक्तञ्च,

गृहमध्यनिखातेन धनेन धनिनो यदि।
भवामः किं न तेनैव धनेन धनिनो वयम्?॥१५९॥

तथाच, उपार्जितानामर्थानां त्याग एव हि रक्षणम्।

---

अग्नीति। वेदाः अग्निहोत्रं यज्ञानुष्ठानं फलं प्रयोजनं येषां तादृशाः श्रुतं शास्त्रज्ञानं शीलं सुचरित्रं वित्तं धनञ्च फलं प्रयोजनं यस्य तादृशं विद्वान् जनः सुशीलो भवति सत्पात्रतया सम्पदञ्च लभते इति भावः। दाराः स्त्रियः रतिः सुरतं पुत्रश्च फलं येषां तादृशाः पुत्रार्थं रत्यर्थं च क्रियते भार्य्येति भावः। धनं दत्तं दानं भुक्तं भोगश्च फलं यस्य तथाभूतं धनं भुज्यते दीयते चेति भावः अन्यथा सर्वं निष्फलमिति तात्पर्य्यम्॥ १५७॥

(द) भोज्यवन्ध्यतया भोक्तुमशक्यतया इत्यर्थः।

गृहेति। यदि मानवाः गृहमध्ये निखातेन धनेन धनिनः धनवन्तः भवन्ति, तदा वयमपि तेनैव धनेन किं कथं धनिनः न भवामः॥ १५९॥

उपार्जितानामिति। तड़ागोदरसंस्थानां सरोवरमध्यस्थितानाम् अम्भसां

तड़ागोदरसंस्थानां परीवाह इवाम्भसाम् ॥ १६० ॥
दातव्यं भोक्तव्यं धनविषये सञ्चयो न कर्त्तव्यः ।
पश्येह मधुकरीणां सञ्चितमर्थं हरन्त्यन्ये ॥ १६१ ॥

अन्यच्च, दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ १६२ ॥

एवं ज्ञात्वा विवेकिना न स्थित्यर्थं वित्तोपार्जनं कर्त्तव्यं यतो दुःखाय तत् । उक्तञ्च,

धनादिकेषु विद्यन्ते येऽत्र मूर्खाः सुखाशया ।
तप्तग्रीष्मेण सेवन्ते शैत्यार्थं ते हुताशनम् ॥ १६३ ॥

सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वनगजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवरा गमयन्ति कालं
सन्तोष एष पुरुषस्य परं निधानम् ॥ १६४ ॥

---

जलानां परीवाह इव जलोच्छ्रास इव जलनिःसारणमिव इत्यर्थः उपार्जितानाम् अर्थानां धनानां त्यागः दानं भोगो वा रक्षणं हि ॥ १६० ॥

दातव्यमिति । धनविषये दातव्यं दानं कर्त्तव्यं, भोक्तव्यं भोगः कर्त्तव्यः, सञ्चयः संग्रहः न कर्त्तव्यः । पश्य इह संसारे मधुकरीणां मधुकराणामिति वा पाठः भ्रमराणां सञ्चितम् अर्थम् अन्ये जनाः हरन्ति । आर्य्यावृत्तम् ॥ १६१ ॥

दानमिति । वित्तस्य धनस्य तिस्रो गतयः अवस्थाः भवन्ति दानं भोगः नाशश्च । यो जनः न ददाति न भुङ्क्ते तस्य तृतीया गतिः नाश इति भावः भवति ॥ १६२ ॥

धनादिकेष्विति । धनादिकेषु सत्सु ये मूर्खाः अत्र संसारे सुखाशया विद्यन्ते ते तप्तग्रीष्मेण उपलक्षिताः आर्त्ता इत्यर्थः सन्तः शैत्यार्थं हुताशनम् अग्निं सेवन्ते आश्रयन्ति । धनादिना सुखसेवनं ग्रीष्मार्त्तस्य अग्निसेवनमिवेति भावः ॥ १६३ ॥

सर्पा इति । सर्पाः पवनं पिबन्ति, न च ते सर्पाः दुर्बलाः । वनगजाः शुष्कैः तृणैः भक्षितैरिति भावः बलिनः बलवन्तः भवन्ति, मुनिवराः कन्दैः मूल-

सन्तोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ? ॥ १६५ ॥
पीयूषमिव सन्तोषं पिबतां निर्वृतिः परा ।
दुःखं निरन्तरं पुंसामसन्तोषवतां पुनः ॥ १६६ ॥
निरोधाच्चेतसोऽक्षाणि निरुद्धान्यखिलान्यपि ।
आच्छादिते रवौ मेघैराच्छन्नाः स्युर्गभस्तयः ॥ १६७ ॥
वाञ्छाविच्छेदनं प्राहुः स्वास्थ्यं शान्ता महर्षयः ।
वाञ्छा निवर्त्तते नार्थैः पिपासेवाग्निसेवनैः ॥ १६८ ॥
अनिन्द्यमपि निन्दन्ति स्तुवन्त्यस्तुत्यमुच्चकैः ।
स्वापतेयकृते मर्त्याः किं किं नाम न कुर्वते ? ॥१६९॥

---

विशेषैः फलैश्च कालं गमयन्ति यापयन्ति, तस्मात् सन्तोष एव पुरुषस्य परं निधानं रत्नम् आश्रयो वा । सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः । वसन्ततिलकं वृत्तम् ॥ १६४ ॥

सन्तोषेति । सन्तोष एव अमृतं तेन तृप्तानां परितोषं गतानां शान्तचेतसां निःस्पृहचित्तानां यत् सुखं भववीति शेषः धनलुब्धानाम् अतएव इतश्च इतश्च समन्तादित्यर्थः धावतां जनानां तत् सुखं कुतः ? कस्माद् भवतीति शेषः ? नैव भवति इत्यर्थः ॥ १६५ ॥

पीयूषमिवेति । पीयूषमिव अमृतमिव सन्तोषं पिबतां जनानां परा निर्वृतिः परमं सुखं भवतीति शेषः । पुनः किन्तु असन्तोषवताम् असन्तुष्टानां पुंसां निरन्तरम् अविच्छिन्नं दुःखं भवतीति शेषः ॥ १६६ ॥

निरोधादिति । चेतसः चित्तस्य निरोधात् दमनादित्यर्थः अखिलानि समग्राणि अपि अक्षाणि इन्द्रियाणि श्रोत्रादीनि निरुद्धानि दान्तानि भवन्ति सर्वेषामेव मनोनियन्तृत्वादिति भावः । तथाहि रवौ सूर्य्ये मेघैः आच्छादिते सति गभस्तयः सूर्य्यकिरणाः आच्छन्नाः स्युः । दृष्टान्तालङ्कारः ॥ १६७ ॥

वाञ्छेति । शान्ताः महर्षयः वाञ्छायाः वासनायाः विच्छेदनं विध्वंसं स्वास्थ्यम् आरामं प्राहुः कथयन्ति । अग्निसेवनैः पिपासेव अर्थैः धनैः वाञ्छा न निवर्त्तते ॥ १६८ ॥

अनिन्द्यमिति । मर्त्त्याः मानवाः स्वापतेयकृते धनार्थम् अनिन्द्यमपि जनं

धर्मार्थं यस्य वित्तेहा तस्यापि न शुभावहा ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ १७० ॥

दानेन तुल्यो निधिरस्ति नान्यो
लोभाच्च नान्योऽस्ति रिपुः पृथिव्याम् ।
विभूषणं शीलसमं न चान्यत्
सन्तोषतुल्यं धनमस्ति नान्यत् ॥ १७१ ॥

दारिद्र्यस्य परा भूतिर्यन्मानद्रविणाल्पता ।
जरद्गवधनः शर्वः तथापि परमेश्वरः ॥ १७२ ॥

सकृत् कन्दुकपातेन पतत्यार्य्यः पतन्नपि ।
तथा पतति मूर्खस्तु मृत्पिण्डपतनं यथा ॥ १७३ ॥

एवं ज्ञात्वा भद्र ! त्वया सन्तोषः कार्य्य इति । मन्थरकवचनमाकर्ण्य वायस आह, भद्र ! मन्थरको यत् एवं वदति तत् त्वया चित्ते कर्त्तव्यम् । अथवा साधु इदमुच्यते ।

---

निन्दन्ति अस्तुत्यच्च निन्द्यञ्च इत्यर्थः जनम् उच्चकैः अतिमात्रं स्तुवन्ति । किं बहुना, किं किं न कुर्वते ? सर्वमेव कुर्वते इत्यर्थः ॥ १६९ ॥

धर्मार्थमिति । यस्य जनस्य धर्मार्थं धर्मकार्य्यानुष्ठानार्थं वित्तेहा धनार्जनचेष्टा तस्यापि सा चेष्टा न शुभावहा न शुभकरी, हि यतः पङ्कस्य प्रक्षालनात् प्रचालनम् अपेक्ष्य इत्यर्थः दूरात् अस्पर्शनं वरं मनाक् प्रियम् ॥ १७० ॥

दानेन इति । दानेन तुल्यः समः अन्यः अपरः निधिः रत्नं नास्ति, लोभात् अन्यः पृथिव्यां रिपुः नास्ति, शीलेन समं तुल्यम् अन्यत् अपरं विभूषणं न अस्तीति शेषः सन्तोषेण तुल्यम् अन्यत् धनं नास्ति । उपजातिवृत्तम् ॥ १७१ ॥

दारिद्र्यस्य इति । मान एव द्रविणं धनं तस्य अल्पता इति यत् सा दारिद्र्यस्य दैन्यस्य परा भूतिः परमैश्वर्य्यम् । शर्वः शम्भुः जरद्गवधनः जीर्णवृषमात्रधनः तथापि परमेश्वरः मानोन्नतत्वादिति भावः ॥ १७२ ॥

सकृदिति । आर्य्यः सुजनः पतन्नपि कन्दुकपातेन सकृत् पतति पुनरुत्पततीति भावः, मूर्खस्तु तथा पतति यथा मृत्पिण्डपतनं मृत्पिण्डो यथा पतति न पुनः केनापि असौ उत्थाप्यते इति भावः ॥ १७३ ॥

सुलभाः पुरुषा राजन् ! सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥१७४॥
अप्रियाण्यपि पथ्यानि ये वदन्ति नृणामिह ।
त एव सुहृदः प्रोक्ता अन्ये स्युर्नामधारकाः ॥ १७५ ॥

अथ एवं जल्पतां तेषां चित्राङ्गो नाम हरिणो लुब्धकत्रासितः तस्मिन् एव सरसि प्रविष्टः । अथ आयान्तं ससम्भ्रमम् अवलोक्य लघुपतनको वृक्षमारूढः । हिरण्यको निकटवर्त्तिनं शरस्तम्बं (ध) प्रविष्टः । मन्थरकः सलिलाशयम् आश्रितः । अथ लघुपतनको मृगं सम्यक् परिज्ञाय मन्थरकम् उवाच, एहि एहि सखे मन्थरक ! मृगोऽयं तृषार्त्तोऽत्र समायातः सरसि प्रविष्टः । तस्य शब्दोऽयं न मानुषसम्भव इति । तच्छ्रुत्वा मन्थरको देशकालोचितमाह, भो लघुपतनक ! यथा अयं मृगो दृश्यते प्रभूतम् उच्छ्वासम् उद्वहन् उद्भ्रान्तदृष्ट्या (न) पृष्ठतोऽवलोकयति तन्न तृषार्त्त एष नूनं लुब्धकत्रासितः । तज्ज्ञायताम् अस्य पृष्ठे लुब्धका आगच्छन्ति न वा इति । उक्तञ्च,

---

सुलभा इति । हे राजन् ! सततं प्रियवादिनः पुरुषाः सुलभाः, अप्रियस्य किन्तु पथ्यस्य हितस्य वचनस्य वक्ता श्रोता च दुर्लभः । यः अप्रियं किन्तु हितम् उपदिशति यश्च तत् शृणोति तावुभौ दुर्लभौ इत्यर्थः ॥ १७४ ॥

अप्रियाणीति । इह अस्मिन संसारे ये जनाः नृणाम् अप्रियाणि आपाततः असन्तोषकराण्यपि पथ्यानि हितानि परिणामसुखानीति यावत् वदन्ति ते एव सुहृदः मित्राणि प्रोक्ताः कथिताः, अन्ये पुनः सुहृद इति नामधारकाः नाममात्रधारिणः स्युः ॥ १७५ ॥

(ध) शरस्तम्बं शरवणम् ।

(न) प्रभूतं समधिकम् । उच्छ्वासं निश्वासम् । उद्भ्रान्तदृष्ट्या चकितदर्शनेन ।

भयत्रस्तो नरः श्वासं प्रभूतं कुरुते मुहुः ।
दिशोऽवलोकयत्येव न स्वास्थ्यं व्रजति क्वचित् ॥१७६॥

तच्छ्रुत्वा चित्राङ्ग आह, भो मन्थरक! ज्ञातं त्वया सम्यक् मे त्रासकारणम् । अहं लुब्धकशरप्रहारात् उद्धारितः (प) कृच्छ्रेण अत्र समायातः । मम यूथं तैः लुब्धकैः व्यापादितं भविष्यति । तत् शरणागतस्य मे दर्शय किञ्चित् अगम्यं स्थानं लुब्धकानाम् । तदाकर्ण्य मन्थरक आह, भोः चित्राङ्ग! श्रूयतां नीतिशास्त्रम् ।

द्वावुपायाविह प्रोक्तौ विमुक्तौ शत्रुदर्शने ।
हस्तयोश्चालनादेको द्वितीयः पादवेगजः ॥ १७७ ॥

तद्गम्यतां शीघ्रं सघनं (फ) वनं, यावत् अद्यापि न आगच्छन्ति ते दुरात्मानो लुब्धकाः । अत्रान्तरे लघुपतनकः सत्वरम् अभ्युपेत्य उवाच, भो मन्थरक! गतास्ते लुब्धकाः स्वगृहोन्मुखाः प्रचुरमांसपिण्डधारिणः । तत् चित्राङ्ग! त्वं विश्रब्धो वनात् वहिर्भव, ततः ते चत्वारोऽपि मित्रभावमाश्रिताः तस्मिन् सरसि मध्याह्नसमये वृक्षच्छायाया अधस्तात् सुभाषितगोष्ठीसुखम् अनुभवन्तः सुखेन कालं नयन्ति अथवा युक्तमेतदुच्यते,

---

भयत्रस्त इति । भयेन त्रस्तः युक्तः नरः मुहुः पुनःपुनः प्रभूतम् अधिकं श्वासं कुरुते दीर्घं निश्वसिति इत्यर्थः दिशः अवलोकयति निरीक्षते, तथा क्वचिदपि स्वास्थ्यं न व्रजति नाधिगच्छति ॥ १७६ ॥

(प) उद्धारितः निस्तीर्णः ।

द्वाविति । इह संसारे शत्रुदर्शने वैरिपराभवे इति भावः विमुक्तौ परित्राणे द्वौ उपायौ प्रोक्तौ कथितौ, हस्तयोश्चालनात् एकः हस्ताभ्यां युद्धकरणमिति भावः द्वितीयः पादवेगजः दूरतः पलायनमिति भावः ॥ १७७ ॥

(फ) सघनं सान्द्रम् ।

सुभाषितरसास्वादबद्धरोमाञ्चकञ्चुकाः।
विनापि सङ्गमं स्त्रीणां सुधियः सुखमासते ॥ १७८ ॥
सुभाषितमयद्रव्यसंग्रहं न करोति यः।
स तु प्रस्तावयज्ञेषु कां प्रदास्यति दक्षिणाम् ? ॥१७९॥
तथा च, सकृदुक्तं न गृह्णाति स्वयं वा न करोति यः।
यस्य सम्पुटिका नास्ति कुतस्तस्य सुभाषितम् ? ॥१८०॥

अथ एकस्मिन्नहनि गोष्ठीसमये चित्राङ्गो न आयातः। अथ ते व्याकुलीभूताः परस्परं जल्पितुम् आरब्धाः। अहो ! किमद्य सुहृन्न समायातः ? किं सिंहादिभिः क्वापि व्यापादितः ? उत लुब्धकैः ? अथवा अनले प्रपतितो गर्त्ताविषमे (व) वा नवतृणलौल्यादिति ?। अथवा साधु इदमुच्यते,

स्वगृहोद्यानगतेऽपि स्निग्धैः पापं विशङ्क्यते मोहात्।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे ? ॥१८१॥

---

सुभाषितेति। सुधियः विद्वांसः सुभाषितस्य प्रणययुक्तवचनस्य रसास्वादेन बद्धः जनितः रोमाञ्चः लोमहर्षणमेव कञ्चुकः वारवाणः येषां तादृशाः सन्तः स्त्रीणां सङ्गमं विनापि सुखम् आसते अवतिष्ठन्ते ॥ १७८ ॥

सुभाषितेति। यः सुभाषितमयानां द्रव्याणां संग्रहं न करोति, स तु प्रस्तावाः परस्परमालापप्रसङ्गा एव यज्ञाः तेषु कां दक्षिणां प्रदास्यति ? कथं सभ्यान् तोषयिष्यतीति भावः ॥ १७९ ॥

सकृदिति। यः सकृत् उक्तं वचनं न गृह्णाति स्वयं वा उक्तं न करोति वक्तुं न शक्नोतीति भावः यस्य च सम्पुटिका आवरणभेदः अवधानमिति भावः नास्ति तस्य सुभाषितं कुतः ? स सुभाषितं नाधिकरोतीति भावः ॥ १८० ॥

(व) गर्त्ताविषमे गर्तवशात् उन्नतानते प्रदेशे इत्यर्थः। नवतृणेति। नवेषु नूतनेषु तृणेषु लौल्यात् तृष्णावशात्।

स्वगृहेति। स्निग्धैः सुहृद्भिः मोहात् मायावशात् स्वगृहस्य उद्यानगते उपवनगतेऽपि सुहृदि पापम् अनिष्टं विशङ्क्यते विशेषेण चिन्त्यते, दृष्टा बहवः अपायाः विपदः यत्र तादृशम् अतएव प्रतिभयं भयावहं यत् कान्तारं दारुणं वनं

अथ मन्थरको वायसमाह, भो लघुपतनक! अहं हिरण्यकश्च तावद् द्वौ अपि अशक्तौ तस्य अन्वेषणं कर्त्तुं मन्दगतित्वात्। तद्गत्वा त्वम् अरण्यं शोधय (भ) यदि कुत्रचित् तं जीवन्तं पश्यसीति। तदाकर्ण्य लघुपतनको नातिदूरे यावद्गच्छति तावत् पल्वलतीरे चित्राङ्गः कूटपाशनियन्त्रितः (म) तिष्ठति। तं दृष्ट्वा शोकव्याकुलितमनाः तम् अवोचत्। भद्र! किमिदम्? चित्राङ्गोऽपि वायसमवलोक्य विशेषेण दुःखितमना बभूव।

अथवा युक्तमेतत्,

अपि मन्दत्वमापन्नो नष्टो वापीष्टदर्शनात्।
प्रायेण प्राणिनां भूयो दुःखावेगोऽधिको भवेत् ॥१८२॥

ततश्च वाक्यावसाने चित्राङ्गो लघुपतनकमाह, भो मित्र! सञ्जातोऽयं तावन्मम मृत्युः। तत् युक्तं (य) सम्पन्नं यद् भवता सह मे दर्शनं सञ्जातम्। उक्तञ्च,

प्राणात्यये समुत्पन्ने यदि स्यान्मित्रदर्शनम्।
तद् द्वाभ्यां सुखदं पश्चाज्जीवतोऽपि मृतस्य च ॥१८३॥

---

तस्य मध्यस्थे मध्यवर्त्तिनि सति किमु वक्तव्यमिति शेषः। तादृशे देशे प्रियजनस्थितिरतीव शङ्कास्पदमिति भावः। आर्य्यावृत्तम् ॥ १८१ ॥

(भ) शोधय अवलोकयेति भावः।

(म) कूटपाशेन कपटजालेन नियन्त्रितः निबद्धः।

अपीति। इष्टस्य प्रियस्य दर्शनात् मन्दत्वं लाघवम् आपन्नोऽपि नष्टोऽपि प्राणिनां दुःखावेगः प्रायेण भूयः बाहुल्येन अधिको भवेत् ॥ १८२ ॥

(य) युक्तं शुभम्। सम्पन्नं भूतम्।

प्राणात्यये इति। प्राणानाम् अत्यये अपगमे सञ्जाते समुपस्थिते यदि मित्रदर्शनं स्यात्, तदा द्वाभ्यां पश्चात् जीवतोऽपि मृतस्य च सुखदं तत् मित्रदर्शन-

तत् क्षन्तव्यं यन्मया प्रणयात् सुभाषितगोष्ठीषु अभिहितम्। तथा हिरण्यकमन्थरकौ मम वाक्याद्वाच्यौ।

अज्ञानाज्ज्ञानतो वापि दुरुक्तं यदुदाहृतम्।
तत् क्षन्तव्यं युवाभ्यां मे कृत्वा प्रीतिपरं मनः ॥१८४॥

तत् श्रुत्वा लघुपतनक आह, भद्र ! न भेतव्यम् अस्मद्विधैः मित्रैः विद्यमानैः, यावत् अहं द्रुततरं हिरण्यकं गृहीत्वा आगच्छामि। अपरं ये सत्पुरुषा भवन्ति ते व्यसने न व्याकुलत्वमुपयान्ति। उक्तञ्च,

सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम्।
तं भुवनत्रयतिलकं जनयति जननी सुतं विरलम् ॥ १८५ ॥

एवमुक्त्वा लघुपतनकः चित्राङ्गम् आश्वास्य यत्र हिरण्यकमन्थरकौ तिष्ठतस्तत्र गत्वा सर्वं चित्राङ्गपाशपतनं कथितवान्। हिरण्यकञ्च चित्राङ्गपाशमोचनं प्रति कृतनिश्चयं (र) पृष्ठमारोप्य भूयोऽपि सत्वरं चित्राङ्गसमीपे गतः। सोऽपि मूषकमवलोक्य किञ्चित् जीविताशया संश्लिष्ट (ल) आह,

आपन्नाशाय विबुधैः कर्त्तव्याः सुहृदोऽमलाः।

---

मित्यर्थः। मित्रकौशलेन जीवनरक्षापि सम्भवति मित्रकर्त्तव्यौर्द्धदैहिकव्यापारेण मृतस्यापि सद्गतिर्लभ्यते इति द्विविधं सुखमिति भावः ॥ १८३ ॥

अज्ञानादिति। अज्ञानात् ज्ञानतो वा मया यत् दुरुक्तं दुर्वचः उदाहृतम् उक्तं युवाभ्यां प्रीतिपरं मनः कृत्वा मे मम तत् दुरुक्तं क्षन्तव्यं सोढ़व्यम् ॥ १८४ ॥

सम्पदीति। यस्य जनस्य सम्पदि हर्षो न, विपदि विषादो न, रणे भीरुत्वं न, जननी भुवनत्रयतिलकं तं सुतं विरलम् अल्पं जनयति प्रसूते। आर्य्यावृत्तम् ॥ १८५ ॥

(र) चित्राङ्गेति। चित्राङ्गस्य तदाख्यस्य मृगस्य पाशात् मोचनं परित्राणं प्रति परित्राणार्थम् इत्यर्थः। कृतनिश्चयं कृतप्रतिज्ञम्।

(ल) संश्लिष्टः युक्तः।

आपदिति। विबुधैः विद्वद्भिः आपन्नाशाय विपदो मुक्तये अमलाः निर्दोषाः

न तरत्यापदं कश्चिद्योऽत्र मित्रविवर्जितः ॥ १८६ ॥

हिरण्यक आह, भद्र! त्वं तावत् नीतिशास्त्रज्ञो दक्षमतिः (व)। तत् कथमत्र कूटपाशे पतितः। स आह, भो! न कालोऽयं विवादस्य (श)। तन्न यावत् स पापात्मा लुब्धकः समभ्येति तावत् द्रुततरं कर्त्तय इमं मत्पादपाशम् (ष)। तदाकर्ण्य विहस्य आह, हिरण्यकः। किं मयि अपि समायाते लुब्धकाद् बिभेषि। ततः शास्त्रं प्रति महती मे विरक्तिः सम्पन्ना (स) यद्भवद्विधा अपि नीतिशास्त्रविद एनाम् अवस्थां प्राप्नुवन्ति। तेन त्वां पृच्छामि, स आह, भद्र! कर्मणा बुद्धिरपि हन्यते।

उक्तञ्च, कृतान्तपाशबद्धानां दैवोपहतचेतसाम्।
बुद्धयः कुब्जगामिन्यो भवन्ति महतामपि ॥ १८७ ॥

विधात्रा रचिता या सा ललाटेऽक्षरमालिका।
न तां मार्जयितुं शक्ताः स्वबुद्ध्याप्यतिपण्डिताः ॥१८८॥

एवं तयोः प्रवदतोः सुहृद्व्यसनसन्तप्तहृदयो मन्थरकः

---

सज्जना इत्यर्थः सुहृदः कर्त्तव्याः। अत्र संसारे यः कश्चित् मित्रविवर्जितः बन्धुविहीनः, स आपदं न तरति न आपदो मुच्यते इत्यर्थः ॥ १८६ ॥

(व) दक्षमतिः निपुणबुद्धिः।

(श) विवादस्य अनुयोगस्य तिरस्कारस्य इत्यर्थः।

(ष) कर्त्तय छिन्धि। मदिति। मम पादानां चरणानां पाशः तम्।

(स) विरक्तिः असन्तोषः। सम्पन्ना जाता।

कृतान्तेति। कृतान्तस्य यमस्य कृतान्तो यम दैवयोरिति विश्वः। पाशेन बद्धानां नियन्त्रितानां दैवेन उपहतं ग्रस्तं चेतो येषां दुर्दैवविलुप्तमतीनाम् इत्यर्थः महतामपि बुद्धयः कुब्जगामिनः कुपथगा भवन्ति ॥ १८७ ॥

विधात्रेति। विधात्रा ललाटे या अक्षरमालिका वर्णावली रचिता, लिखिता, अतिपण्डिताः अपि स्वबुद्ध्या ताम् अक्षरमालिकां मार्जयितु खण्डयित न शक्नुवन्ति ॥ १८८ ॥

शनैःशनैः तं प्रदेशम् आजगाम। तं दृष्ट्वा लघुपतनको हिरण्यकमाह, अहो! न शोभनम् आपतितम् (ङ)। हिरण्यक आह, किं स लुब्धकः समायाति। स आह, आस्तां तावत् लुब्धकवार्त्ता। एष मन्थरकः समागच्छति। तत् अनीतिः (च) अनुष्ठिता अनेन यतो वयमपि अस्य कारणात् नूनं व्यापादनं (छ) यास्यामो यदि स पापात्मा लुब्धकः समागमिष्यति, तदहं तावत् खम् उत्पतिष्यामि। त्वं पुनर्विलं प्रविश्य आत्मानं रक्षयिष्यसि। चित्राङ्गोऽपि वेगेन दिगन्तरं यास्यति। एष पुनर्जलचरः स्थले कथं भविष्यति इति व्याकुलोऽस्मि। अत्रान्तरे प्राप्तोऽयं मन्थरकः। हिरण्यक आह, भद्र! न युक्तम् अनुष्ठितं भवता, यदत्र समायातः तद्भूयोऽपि द्रुततरं गम्यतां, यावत् असौ लुब्धको न समायाति। मन्थरक आह, भद्र! किं करोमि? न शक्नोमि तत्रस्थो मित्रव्यसनाग्निदाहं सोढुम्। तेनाहम् अत्र आगतः। अथवा साधु इदमुच्यते,

दयितजनविप्रयोगो वित्तवियोगश्च केन सह्याः स्युः।
यदि सुमहौषधकल्पो वयस्यजनसङ्गमो न स्यात्॥ १८८॥

वरं प्राणपरित्यागो न वियोगो भवादृशैः।

---

(ङ) आपतितम् उपस्थितम्।

(च) अनीतिः दुर्णयः।

(छ) अस्य मन्थरकस्य। व्यापादनं विनाशम्। अस्य मन्दगामित्वेन पलायनाक्षमत्वादिति भावः।

दयितेति। दयितजनानां प्रियजनानां विप्रयोगाः विच्छेदाः वित्तवियोगाश्च धननाशाश्च केन कथं सह्याः सोढ़व्याः स्युः, यदि वयस्यजनसङ्गमः सुहृत्समागमः सुमहौषधकल्पः शोभनौषधसदृशः न स्यात्। आर्य्यावृत्तम्॥ १८८॥

वरमिति। प्राणपरित्यागो वरं मनाक्प्रियः, भवादृशैः सुहृद्भिरिति भावः

प्राणा जन्मान्तरे भूयो न भवन्ति भवद्विधाः ? ॥१९०॥

एवं तस्य प्रवदत आकर्णपूरितशरासनो लुब्धकोऽपि उपागतः, तं दृष्ट्वा मूषकेण तस्य स्नायुपाशस्तत्क्षणात् खण्डितः। अत्रान्तरे चित्राङ्गः सत्वरं पृष्ठमवलोकयन् प्रधावितः। लघुपतनको वृक्षमारूढ़ः। हिरण्यकश्च समीपवर्त्ति विलं प्रविष्टः, अथ असौ लुब्धको मृगगमनात् विषस्णवदनो व्यर्थश्रमः तं मन्थरकं मन्दं मन्दं स्थलमध्ये गच्छन्तं दृष्टवान् अचिन्तयच्च। यद्यपि कुरङ्गो धात्रा अपहृतः तथापि अयं कूर्म आहारार्थं सम्पादितः। तदद्य अस्य आमिषेण मे कुटुम्बस्य आहारनिर्वृत्तिः भविष्यति। एवं विचिन्त्य तं दर्भैः संच्छाद्य धनुषि समारोप्य स्कन्धे कृत्वा गृहं प्रति प्रस्थितः, अत्रान्तरे तं नीयमानम् अवलोक्य हिरण्यको दुःखाकुलः पर्य्यदेवयत्। कष्टं भोः ! कष्टमापतितम्।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति॥१९१॥

तावदस्खलितं यावत् सुखं याति समे पथि।
स्खलिते च समुत्पन्ने विषमञ्च पदे पदे॥ १९२ ॥

---

वियोगः न वरमित्यनुषङ्गः। प्राणाः जन्मान्तरे भूयः पुनः भवन्ति लभ्या इति शेषः, भवद्विधाः सुहृदः न लभ्या इति शेषः ॥ १९० ॥

एकस्येति। अहम् अर्णवस्य समुद्रस्य पारमिव एकस्य दुःखस्य यावत् अन्तम् अवसानं न गच्छामि प्राप्नोमि, तावत् मे मम द्वितीयं दुःखं समुपस्थितम्। तथाहि अनर्थाः विपदः छिद्रेषु रन्ध्रेषु बहुलीभवन्ति विस्तारं गच्छन्ति। इन्द्रवज्रावृत्तम् ॥ १९१ ॥

यावदिति। यावत् समे पथि सुखं याति तावत् अस्खलितम् अपतनमित्यर्थः, स्खलिते पतने समुत्पन्ने सति पदे पदे प्रतिपदं विषमं विपत् उपतिष्ठते इति शेषः ॥ १९२ ॥

यन्नम्रं सरलञ्चापि तच्चापत्सु न सीदति ।
धनुर्मित्रं कलत्रं च दुर्लभं शुद्धवंशजम् ॥ १९३ ॥

न मातरि न दारेषु न सोदर्य्ये न चात्मजे ।
विश्रम्भस्तादृशः पुंसां यादृग्मित्रे निरन्तरे ॥ १९४ ॥

यदि तावत् कृतान्तेन (ख) मे धननाशो विहितः तन्मार्गश्रान्तस्य मे विश्रामभूतं मित्रं कस्मात् अपहृतम्? अपरमपि मित्रं परं मन्थरकसमं न स्यात्। उक्तञ्च,

असम्पत्तौ परो लाभो गुह्यस्य कथनं तथा ।
आपद्विमोचणं चैव मित्रस्यैतत् फलत्रयम् ॥ १९५ ॥

तदस्य (ग) पश्चान्नान्यः सुहृत् मे। तत् किं मम उपरि अनवरतं व्यसनशरैः वर्षति हन्त विधिः (घ)? यत आदौ तावद्वित्तनाशस्ततः परिवारभ्रंशः ततो देशत्यागः ततो मित्रवियोग इति। अथवा स्वरूपमेतत् सर्वेषामेव जन्तूनां जीवितधर्मस्य (ङ)। उक्तञ्च,

---

यदिति। यत् नम्रं सरलम् ऋजु शुद्धवंशजं पवित्रकुलोत्पन्नं सद्वंशसमुत्पन्नञ्च अतएव दुर्लभं दुष्प्रापं धनुः मित्रं कलत्रं भार्य्या च, तत् आपत्सु न सीदति न अवसादं गच्छति न विकृतिं लभते इत्यर्थः ॥ १९३ ॥

नेति। निरन्तरे अविशेषे अभिन्नहृदये इति भावः स्वभावजे इति पाठान्तरम्। मित्रे पुंसां यादृक् विश्रम्भः विश्वासः, मातरि तादृशो न, दारेषु स्त्रीषु तादृशो न, सोदर्य्ये सहोदरे भ्रातरि तादृशो न, आत्मजे पुत्रे च तादृशो न भवतीति शेषः ॥ १९४ ॥

(ख) कृतान्तेन दैवेन। मार्गश्रान्तस्य अध्वक्लिष्टस्य अनाश्रयस्येति भावः।

असम्पत्ताविति। असम्पत्तौ निर्धनत्वे परः महान् लाभः धनस्येति शेषः तथा गुह्यस्य रहस्यस्य च कथनम् आलापः आपद्विमोचणं विपत्परित्राणञ्च एतत् मित्रस्य फलत्रयं त्रीणि प्रयोजनानि ॥ १९५ ॥

(ग) पश्चात् परः श्रेष्ठ इत्यर्थः अस्येति सम्बन्धविवक्षया षष्ठी।

(घ) व्यसनशरैः व्यसनान्येव विपद एव शराः तैः। विधिः दैवम्।

(ङ) स्वरूपं लक्षणम् इत्यर्थः। जीवितधर्मस्य जीवनवृत्तान्तस्य।

कायः सन्निहितापायः सम्पदः क्षणभङ्गुराः।
समागमाः सापगमाः सर्वेषामेव देहिनाम्॥ १९६॥

तथाच, क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये दीप्यति जाठराग्निः।
आपत्सु वैराणि समुल्लसन्ति
छिद्रेष्वनर्था बहुलीभवन्ति॥ १९७॥

अहो! साधु उक्तं केनापि।

प्राप्ते भये परित्राणं प्रीतिविस्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्॥ १९८॥

अत्रान्तरे च आक्रन्दपरौ चित्राङ्गलघुपतनकौ तत्र एव समायातौ। अथ हिरण्यक आह, अहो! किं वृथा प्रलपितेन? (च) तद्यावदेष मन्थरको दृष्टिगोचरात् न नीयते तावदस्य मोक्षोपायः (छ) चिन्त्यतामिति।

व्यसनं प्राप्य यो मोहात् केवलं परिदेवयेत्।

---

काय इति। कायः देहः सन्निहितः आसन्नः अपायो विध्वंसो यस्य तादृशः क्षणविनश्वर इत्यर्थः। सर्वेषामेव देहिनां सम्पदः धनानि क्षणभङ्गुराः क्षणध्वंसिनः पदमापदामिति पाठान्तरम्। समागमाः प्रियसंयोगाः सापगमाः सविच्छेदाः। सर्वेषामेव देहिनामित्यत्र सर्वमुत्पादि भङ्गुरमिति पाठान्तरम्॥ १९६॥

क्षते इति। क्षते क्षतस्थाने अभीक्ष्णं सततं प्रहाराः निपतन्ति, धनक्षये सति जाठराग्निः उदरानलः दीप्यति क्रीड़ति ज्वलति इत्यर्थः। तथा आपत्सु वैराणि विद्वेषाः समुल्लसन्ति सम्यक् स्फुरन्ति। किमधिकं छिद्रेषु रन्ध्रेषु अनर्थाः विपदः बहुलीभवन्ति प्रसरन्ति। उपजातिवृत्तम्॥ १९७॥

प्राप्ते इति। भये प्राप्ते उपस्थिते सति परित्राणं निस्तारकारणम् इत्यर्थः तथा प्रीत्या विस्रम्भस्य विश्वासस्य च भाजनं पात्रं रत्नं रत्नभूतमिदं मित्रमिति अक्षरद्वयं द्वे अक्षरे इत्यर्थः केन महापुरुषेणेति भावः सृष्टं निर्मितम्॥ १९८॥

(च) आक्रन्दपरौ रुदन्तौ। प्रलपितेन प्रलापेन अनर्थकेन वचसा इत्यर्थः।

(छ) मोक्षोपायः परित्राणोपायः।

व्यसनमिति। यः व्यसनं विपदं प्राप्य मोहात् अज्ञानात् केवलं परिदेवयेत्

क्रन्दनं वर्द्धयत्येव तस्यान्तं नाधिगच्छति ॥ १९९ ॥

केवलं व्यसनस्योक्तं भेषजं नयपण्डितैः ।
तस्योच्छेदसमारम्भो विषादपरिवर्जनम् ॥ २०० ॥

अन्यच्च, अतीतलाभस्य सुरक्षणार्थं
भविष्यलाभस्य च सङ्गमार्थम् ।
आपत्प्रपन्नस्य च मोक्षणार्थं
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः ॥ २०१ ॥

तच्छ्रुत्वा वायस आह, भो! यदि एवं तत् क्रियतां मद्वचः। एष चित्राङ्गोऽस्य मार्गे गत्वा किञ्चित् पल्वलम् (ज) आसाद्य तस्य तीरे निश्चेतनो भूत्वा पततु। अहमपि अस्य शिरसि समारुह्य मन्दैः चञ्चुप्रहारैः शिर उल्लेखयिष्यामि। येन असौ दुष्टलुब्धकोऽमुं मृतं मत्वा मम चञ्चुप्रहरणप्रत्ययेन (झ) मन्थरकं भूमौ क्षिप्त्वा मृगार्थं परिधाविष्यति। अत्रान्तरे त्वया

---

विलपेत् तथा क्रन्दनं वर्द्धयति क्रन्दनपर एव भवति इत्यर्थः, स तस्य व्यसनस्य अन्तम् अवसानं न अधिगच्छति न विपदो मुच्यते इत्यर्थः ॥ १९९ ॥

केवलमिति । नयपण्डितैः नीतिकुशलैः जनैः व्यसनस्य विपदः केवलम् । एकम् एके मुख्यान्यकेवला इत्यमरः । भेषजम् औषधम् उक्तम् । किं तदित्याह विषादस्य अधैर्य्यस्य परिवर्जनं परित्यागः तस्य व्यसनस्य उच्छेदसमारम्भः विध्वंसकरणम् इत्यर्थः । धैर्य्यं हि विपदुद्धारहेतुरिति भावः ॥ २०० ॥

अतीतेति । अतीतः उपार्जित इति भावः लभ्यते इति लाभो धनम् अतीतश्चासौ लाभश्चेति तस्य उपार्जितधनस्य इत्यर्थः सुरक्षणार्थं सुष्ठु सञ्चयार्थं भविष्यस्य भाविनो लाभस्य सङ्गमार्थं संग्रहार्थं प्राप्त्यर्थम् इत्यर्थः आपदं प्रपन्नः प्राप्तः तस्य विपन्नस्य इत्यर्थः मोक्षणार्थं त्राणार्थञ्च यत् मन्त्र्यते परामृश्यते असौ हि परमः महान् मन्त्रः परामर्शः । यथा इदानीम् आपदो मुच्येमहि तथा मन्त्र्यतामिति भावः । उपजातिवृत्तम् ॥ २०१ ॥

(ज) पल्वलं क्षुद्रं सरः ।

(झ) चञ्च्विति । चञ्चुभ्यां यत् प्रहरणम् उल्लेखनं तेन यः प्रत्ययः मृत इति विश्वासः तेन ।

दर्भमयाणि पाशानि खण्डनीयानि (ञ)। येन असौ मन्थरको द्रुततरं पल्वलं प्रविशति। चित्राङ्ग आह, भो! भद्रोऽयं त्वया दृष्टो मन्त्रः नूनं मन्थरकोऽयं सुक्तो मन्तव्य इति। उक्तञ्च,

सिद्धं वा यदि वा सिद्धं चित्तोत्साहो निवेदयेत्।
प्रथमं सर्वजन्तूनां तत् प्राज्ञो वेत्ति नेतरः॥ २०२॥

तत् एवं क्रियतामिति। तथा अनुष्ठिते स लुब्धकः तथा एव मार्गासन्नपल्वलतीरस्थं चित्राङ्गं वायससनाथम् अपश्यत्। तं दृष्ट्वा हर्षितमना व्यचिन्तयत्। नूनं पाशबन्धनवेदनया वराकोऽयं मृगः सावशेषजीवितः पाशं त्रोटयित्वा (ट) कथमपि एतद्वनान्तरं यावत् प्रविष्टः तावन्मृतः तद्वश्योऽयं मे कच्छपः सुयन्त्रितत्वात् (ठ)। तत् एनमपि तावद्गृह्णामि इति। इति अवधार्य्य कच्छपं भूतले प्रक्षिप्य मृगमुपाद्रवत्। एतस्मिन्नन्तरे हिरण्यकेन वज्रोपमदंष्ट्राप्रहरणेन तद्दर्भवेष्टनं (ड)खण्डशः कृतम्। मन्थरकोऽपि तृणमध्यात् निष्क्रम्य समीपवर्त्तिनं पल्वलं प्रविष्टः। चित्राङ्गोऽपि अप्राप्तस्यापि तस्य

---

(ञ) दर्भमयाणि कुशमयानि। खण्डनीयानि कर्त्तनीयानि।

सिद्धमिति। चित्तस्य मनसः उत्साहः उल्लासः प्रथमं सर्वेषां जन्तूनां सिद्धं वा असिद्धं यदि वा कार्य्यमिति शेषः प्रथमं सिद्ध्यसिद्धिभ्यां प्रागित्यर्थः निवेदयेत् ज्ञापयेत्। प्राज्ञो जनः तत् वेत्ति बुध्यते, इतरोऽनभिज्ञ इत्यर्थः॥ २०२॥

(ट) त्रोटयित्वा छित्वा।

(ठ) सुयन्त्रितत्वात् सुबद्धत्वात्।

(ड) वज्रेति। वज्रोपमायाः कुलिशतुल्यायाः दंष्ट्रायाः प्रहरणेन करणेन। दर्भवेष्टनं कुशबन्धनम्।

तले (ढ) उत्थाय वायसेन सह पलायितः। एतस्मिन्नन्तरे विलक्षो (ण) विषादपरो लुब्धको निवृत्तो यावत् पश्यति, तावत् कच्छपोऽपि गतः। ततश्च तत्र उपविश्य इमं श्लोकम् अपठत्।

प्राप्तो बन्धनमप्ययं गुरुमृगस्तावत् त्वया मे हृतः
सम्प्राप्तः कमठः स चापि नियतं नष्टस्तवादेशतः।
क्षुत्क्षामोऽत्र वने भ्रमामि शिशुकैस्त्यक्तः समं भार्य्यया
यच्चान्यन्न कृतं कृतान्त! कुरुते तच्चापि सह्या मया॥२०२॥

एवं बहुविधं विलप्य स्वगृहं गतः। अथ तस्मिन् व्याधे दूरतरं गते सर्वेऽपि ते काककूर्ममृगमूषिकाः परमानन्दभाजः परस्परम् आलिङ्ग्य पुनर्जातमिव आत्मानं मन्यमानाः तदेव सरः सम्प्राप्य महासुखेन सुभाषितकथागोष्ठीविनोदेन कालं नयन्ति स्म। एवं ज्ञात्वा विवेकिना (त) मित्रसंग्रहः कार्य्यः। न च मित्रेण सह व्याजेन (थ) वर्त्तितव्यमिति। उक्तञ्च यतः,

---

(ढ) अप्राप्तस्यापीति। अपिरत्रैवार्थः अप्राप्तस्य अनुपस्थितस्य एव तस्य लुब्धकस्य इत्यर्थः। तले तलात् इत्यर्थः अधिकरणविवक्षया अपादाने सप्तमी।

(ण) विलक्षः विस्मितो लज्जितो वा।

प्राप्त इति। हे कृतान्त देव! अयं गुरुमृगः महान् मृगः बन्धनं प्राप्तोऽपि त्वया तावत् मे मम अनादरे षष्ठी मामनादृत्य इत्यर्थः हृतः। कमठः कच्छपः सम्प्राप्तः मयेति शेषः स चापि तव आदेशतः आज्ञया इत्यर्थः नियतं निश्चितं नष्टः पलायितः। भार्य्यया शिशुकैः पुत्रैश्च समं समकालं त्यक्तः विरहितः पुत्रकलत्र-वियुक्त इत्यर्थः अत्र वने क्षुत्क्षामः क्षुधया निपीड़ितः सन् भ्रमामि पर्य्यटामि, यच्च अन्यत् अनिष्टमिति शेषः न कृतं त्वयेति शेषः तच्चापि कुरु, ते तव तच्च मया सह्यं सोढ़व्यम्। शार्दूलविक्रीड़ितं वृत्तम्॥२०२॥

(त) विवेकिना विज्ञेन।

(थ) व्याजेन कपटेन।

यो मित्राणि करोत्यत्र न कौटिल्येन वर्त्तते।
तैः समं न पराभूतिं सम्प्राप्नोति कथञ्चन ॥ २०४ ॥

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके मित्रसम्प्राप्तिर्नाम द्वितीयं तन्त्रं समाप्तम्।

---

## अथ तृतीयं तन्त्रम्।



अथ इदमारभ्यते काकोलूकीयं (क) नाम तृतीयं तन्त्रम्।

तस्य अयमाद्यः श्लोकः।

न विश्वसेत् पूर्वविरोधितस्य शत्रोश्च मित्रत्वमुपागतस्य।
दग्धां गुहां पश्य उलूकपूर्णां काकप्रणीतेन हुताशनेन ॥ १ ॥

तद्यथा अनुश्रूयते। अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य समीपस्थः (ख) अनेकशाखा-

---

य इति। यः अत्र संसारे मित्राणि करोति, तेषु च कौटिल्येन कापट्येन न वर्त्तते सः तैः मित्रैः समं कथञ्चन पराभूतिं पराभवं न सम्प्राप्नोति ॥ २०४ ॥

---

(क) काकोलूकीयं काकश्च उलूकश्च तौ, तयोः संवादो वर्णितो यस्मिन् तत्।

नेति। पूर्वविरोधितस्य पूर्वं विद्वेषमापादितस्य शत्रोः पश्चात् मित्रत्वम् उपागतस्य सतः न विश्वसेत् शत्रौ मित्रभावमापन्ने विश्वासो न कर्त्तव्य इत्यर्थः। तथाहि उलूकपूर्णां पेचकाकीर्णां गुहां काकप्रणीतेन वायसदत्तेन हुताशनेन अग्निना दग्धां भस्मीकृतां पश्य। उपजातिवृत्तम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ १ ॥

(ख) अनेकेति। बहुशाखासमन्वित इत्यर्थः।

सनाथोऽतिघनतरपत्रच्छन्नो न्यग्रोधपादपोऽस्ति (ग)। तत्र च मेघवर्णो नाम वायसराजोऽनेककाकपरिवारः प्रतिवसति स्म। स तत्र विहितदुर्गरचनः (घ) सपरिजनः कालं नयति स्म। तथा अन्योऽरिमर्दनो (ङ) नाम उलूकराजोऽसङ्ख्योलूकपरिवारो गिरिगुहादुर्गाश्रयः (च) प्रतिवसति स्म। स च रात्रौ अभ्येत्य सदा एव तस्य न्यग्रोधस्य समन्तात् परिभ्रमति। अथ उलूकराजः पूर्वविरोधवशात् यं कञ्चिद्वायसं समासादयति तं व्यापाद्य गच्छति। एवं नित्याभिगमनात् शनैः शनैः तत् न्यग्रोधपादपदुर्गं तेन समन्तात् निर्वायसं कृतम्। अथवा भवत्येवम्। उक्तञ्च,

य उपेक्षेत शत्रुं स्वं प्रसरन्तं यदृच्छया।
रोगं चालस्यसंयुक्तः स शनैस्तेन हन्यते ॥ २ ॥

तथाच, जातमात्रं न यः शत्रुं व्याधिञ्च प्रशमं नयेत्।
अतिपुष्टाङ्गयुक्तोऽपि स पश्चात् तेन हन्यते ॥ ३ ॥

---

(ग) अतीति। अतिघनतरैः अतिनिविड़ैरित्यर्थः पत्रैः छन्नः आकीर्णः। न्यग्रोधपादपः वटतरुः।

(घ) विहितेति। विहिता कृता दुर्गस्य दुर्गमस्थानविशेषस्य रचना निर्माणं येन तथाभूतः।

(ङ) अरिमर्दनः शत्रुनाशकः।

(च) गिरीति। गिरेः पर्वतस्य गुहा कन्दरा एव दुर्गम् आश्रयो यस्य तथोक्तः।

य इति। यः आलस्यसंयुक्तः सन् यदृच्छया स्वेच्छया प्रसरन्तं वृद्धिं गच्छन्तं शत्रुं रोगञ्च उपेक्षेत न हन्यादिति भावः सः शनैः शनैः क्रमेणेत्यर्थः तेन शत्रुणा रोगेण च हन्यते विनाश्यते ॥ २ ॥

जातमात्रमिति। यः जातमात्रं शत्रुं व्याधिञ्च प्रशमं शान्तिं न नयेत्। सः अतिपुष्टानि अतिप्रबलानि अङ्गानि अमात्यादीनि राज्याङ्गानि हस्तपदादीनि वा यस्य तथाभूतोऽपि पश्चात् तेन शत्रुणा व्याधिना च हन्यते ॥ ३ ॥

अथ अन्येद्युः स वायसराजो सर्वान् वायससचिवान् आहूय प्रोवाच। भो ! उत्कटः तावत् अस्माकं शत्रुः उद्यमसम्पन्नः (छ) च कालवशात् नित्यमेव निशागमे समेत्य अस्मत्पक्षकदनं (ज) करोति, तत् कथमस्य प्रतिविधानम् ? (झ) वयं तावत् रात्रौ न पश्यामः। न च तस्य दिवा (ञ) दुर्गं विजानीमः, येन गत्वा प्रहरामः। तदत्र विषये किं युज्यते, सन्धिविग्रहयानासनसंश्रयद्वैधीभावानाम् एकतमस्य क्रियमाणस्य। तद्विचार्य्य शीघ्रं कथयन्तु भवन्तः। अथ ते प्रोचुः। युक्तम् अभिहितं देवेन यदा एष प्रश्नः कृतः। उक्तञ्च,

अपृष्टेनापि वक्तव्यं सचिवेनात्र किञ्चन।
पृष्टेन तु ऋतं पथ्यं वाच्यञ्च प्रियमप्रियम्॥ ४॥
यो न पृष्टो हितं ब्रूते परिणामे सुखावहम्।
सुमन्त्री प्रियवक्ता च केवलं स रिपुः स्मृतः॥ ५॥
तस्मादेकान्तमासाद्य कार्य्यो मन्त्रो महीपतेः।
येन तस्य वयं कुर्मो निर्णयं कारणं तथा॥ ६॥

---

(छ) उत्कटः महान् दारुण इत्यर्थः। उद्यमसम्पन्न ससुत्साहान्वितः।

(ज) अस्मत्पक्षकदनम् अस्माकं पक्षीयप्राणिविनाशनम्।

(झ) प्रतिविधानं प्रतीकारः।

(ञ) दिवसे अव्ययमेतत्।

अपृष्टेनेति। अत्र संसारे सचिवेन अमात्येन अपृष्टेनापि अननुयुक्तेनापि किञ्चन वक्तव्यम्। पृष्टेन तु अमात्येन ऋतं सत्यं पथ्यं हितं प्रियं प्रीतिकरम् अप्रियञ्च वाच्यं वक्तव्यम्॥ ४॥

य इति। यः पृष्टः सन् परिणामे सुखावहं हितं न ब्रूते न कथयति नोपदिशति इत्यर्थः स सुमन्त्री प्रियवक्ता च केवलं रिपुः शत्रुः स्मृतः॥ ५॥

तस्मादिति। तस्मात् एकान्तं निर्जनदेशमासाद्य महीपतेः राज्ञः मन्त्रः कार्य्यः, येन वयं तस्य मन्त्रस्य निर्णयं तथा कारणं कुर्मः विदधीम इत्यर्थः। प्रकाशेन मन्त्रभङ्गभयात् एकान्त एव मन्त्रणविधिः कार्य्य इति भावः॥ ६॥

अथ स मेघवर्णः अन्वयागतोज्जीवि-सञ्जीवि-अनुजीवि-प्रजीवि चिरञ्जीविनाम्नः पञ्च सचिवान् (ट) प्रत्येकं प्रष्टुमारब्धः। तत्र एतेषामादौ तावत् उज्जीविनं पृष्टवान्। भद्र! एवं स्थिते किं मन्यते (ठ) भवान्। स आह राजन्! बलवता सह विग्रहो न कार्य्यः। यथा स बलवान् कालप्रहर्त्ता (ड) च। उक्तञ्च यतः,

बलीयसि प्रणमतां काले प्रहरतामपि।
सम्पदो नापगच्छन्ति प्रतीपमिव निम्नगाः॥ ७॥

तथा च, सन्त्याज्यो धार्मिकश्चार्य्यो भ्रातृसङ्घातवान् बली।
अनेकविजयी चैव सन्धेयः स रिपुर्भवेत्॥ ८॥
सन्धिः कार्य्योऽप्यनार्य्येण विज्ञाय प्राणसंशयम्।
प्राणैः संरक्षितैः सर्वं यतो भवति रक्षितम्॥ ९॥

---

(ट) अन्वयेति। अन्वयागतान् कुलक्रमागतान् उज्जीव्यादीन्। सचिवान् मन्त्रिणः।

(ठ) स्थिते उपस्थिते। मन्यते कर्त्तव्यत्वेनावधारयतीत्यर्थः।

(ड) कालप्रहर्त्ता समयानुसारेणागत्य प्रहारकः। रन्ध्रप्रहर्त्ता इत्यर्थः।

बलीयसि इति। बलीयसि प्रबलाय प्रणमतां बलवन्तं रिपुं प्रणत्या सान्त्वयताम् इत्यर्थः किन्तु काले समये प्रहरतां रन्ध्रं प्राप्य तमपि घ्नताम् इत्यर्थः जनानां सम्पदः निम्नगाः निम्नवाहिन्यः नद्य इत्यर्थः प्रतीपं प्रतिकूलमिव न अपगच्छन्ति न विनश्यन्तीति भावः॥ ७॥

सन्त्याज्य इति। धार्मिकः धर्मपरः आर्य्यः साधुः भ्रातृसङ्घातवान् बहुभ्रातृपरिवृतः बली प्रबलः अनेकविजयी बहुसंग्रामजेता शत्रुः सन्त्याज्यः परिहरणीयः न तेन विग्रहः कर्त्तव्यः दुर्जेयत्वादिति भावः। स रिपुः सन्धेयः सन्धिना सन्तोषणीय इत्यर्थः भवेत्॥ ८॥

सन्धिरिति। प्राणानां संशयं विज्ञाय अनार्य्येण दुर्जनेनापि सन्धिः कार्य्यः यदि दुर्जनेन सह विग्रहे प्राणसंशयो बुध्यते तदा तेनापि सन्धिं कुर्य्यात् इत्यर्थः। ज्ञायेत् प्रत्यपकारेण नोपकारेण दुर्जन इति प्राणसंशयादन्यत्रेति बोद्धव्यम्। यतः प्राणैः संरक्षितैः सद्भिः सर्वं रक्षितं भवति॥ ९॥

येन अनेकयुद्धविजयी स तेन विशेषात् सन्धनीयः (ढ)।
उक्तञ्च,

अनेकयुद्धविजयी सन्धानं यस्य गच्छति।
तत्प्रभावेण तस्याशु वशं गच्छन्त्यरातयः॥ १०॥
सन्धिमिच्छेत् समेनापि सन्दिग्धो विजयो युधि।
न हि सांशयिकं कुर्य्यादित्युवाच बृहस्पतिः॥ ११॥
सन्दिग्धो विजयो युद्धे जनानामिह युध्यताम्।
उपायत्रितयादूर्द्ध्वं तस्माद् युद्धं समाचरेत्॥ १२॥
असन्दधानो मानाद् यः समेनापि हतो भृशम्।
आमकुम्भ इवान्येन करोत्युभयसंक्षयम्॥ १३॥
समं शक्तिमता युद्धमशक्तस्य हि मृत्यवे।
दृषत् कुम्भं यथा भित्त्वा तावत् तिष्ठति शक्तिमान्॥१४॥

---

(ढ) येन हेतुना। स उलूकः सन्दधनीयः सन्धेयः।

अनेकेति। अनेकयुद्धविजयी बहुसंग्रामजेता नृपतिः यस्य सन्धानं गच्छति प्राप्नोति, येन संहित इत्यर्थः तस्य अरातयः शत्रवः तस्य संहितस्य अनेकयुद्ध-जयिनः प्रभावेण आशु शीघ्रं वशं गच्छन्ति वश्या भवन्ति॥ १०॥

सन्धिमिति। यदि युधि युद्धे विजयः सन्दिग्धो भवेदिति शेषः तदा समेन तुल्यबलेनापि सन्धिम् इच्छेत्। सांशयिकं सन्देहसङ्कुलं किमपि कार्य्यमिति शेषः न हि कुर्य्यात् इति बृहस्पतिः उवाच॥ ११॥

सन्दिग्ध इति। इह संसारे युध्यतां जनानां युद्धे विजयः सन्दिग्धः सन्देह-पूर्णः, तस्मात् उपायानां सामदानभेदानां त्रितयात् ऊर्द्ध्वं सामादिभिः कार्य्यस्य असिद्धौ इति भावः युद्धं समाचरेत् कुर्य्यात्॥ १२॥

असन्दधान इति। यः असन्दधानः सन्धिमकुर्वन् समेनापि तुल्येनापि मानात् भृशम् अत्यर्थं हतो भवेदिति शेषः स आमकुम्भ इव अपक्वकलस इव अन्येन प्रबलेनेति शेषः हतः सन् उभयसंचयं मानस्य प्राणानां च इत्युभयस्य ध्वंसं करोति॥ १३॥

सममिति। अशक्तस्य अक्षमस्य दुर्बलस्य इत्यर्थः शक्तिमता प्रबलेन समं सह युद्धं मृत्यवे हि, निधनकारणमेव इत्यर्थः। शक्तिमान् जनः दृषत् पाषाणः

अन्यच्च, भूमिर्मित्रं हिरण्यं वा विग्रहस्य फलत्रयम् ।
नास्त्येकमपि यद्येषां विग्रहं न समाचरेत् ॥ १५ ॥
खनन्नाखुविलं सिंहः पाषाणशकलाकुलम् ।
प्राप्नोति नखभङ्गं वा फलं वा मूषको भवेत् ॥ १६ ॥
तस्मान्न स्यात् फलं यत्र दुष्टं युद्धन्तु केवलम् ।
न तत् स्वयं समुत्पाद्यं कर्त्तव्यं न कथञ्चन ॥ १७ ॥
बलीयसा समाक्रान्तो वैतसीं वृत्तिमाचरेत् ।
वाञ्छन् अभ्रंशिनीं लक्ष्मीं न भौजङ्गीं कदाचन ॥ १८ ॥
कुर्वन् हि वैतसीं वृत्तिं प्राप्नोति महतीं श्रियम् ।
भुजङ्गवृत्तिमापन्नो वधमर्हति केवलम् ॥ १९ ॥

---

कुम्भमिव मृण्मयमिति यावत् दुर्बलं भित्त्वा निहत्य तिष्ठति तावत् स्थितिं करोत्येव ॥ १४ ॥

भूमिरिति । भूमिः राज्यं मित्रं सुहृत् हिरण्यं रत्नाद्युपलक्षणमेतत् एतत् विग्रहस्य संग्रामस्य फलत्रयं प्रयोजनानि त्रीणि इत्यर्थः संग्रामजयिना एतानि त्रीणि लभ्यन्ते इति भावः । यदि एषां भूम्यादीनाम् एकमपि नास्ति न लभ्यं भवतीत्यर्थः तदा विग्रहं न समाचरेत् न कुर्यादित्यर्थः ॥ १५ ॥

खनन्निति । सिंहः पाषाणशकलैः प्रस्तरखण्डैः आकुलं पूर्णम् आखोर्मूषिकस्य विलं गर्त्तं खनन् सन् नखानां भङ्गं प्राप्नोति । वा मूषकः फलं भवेत् तस्येति शेषः । अतिसामान्यलाभाकाङ्क्षया सामान्यस्यापि कदाचित् लाभविरहसम्भावनायां महान् प्रयत्नो न आश्रयणीय इति भावः ॥ १६ ॥

तस्मादिति । तस्मात् यत्र फलं न दृष्टं न दृश्यते इति यावत् केवलं निरर्थकमित्यर्थः युद्धं भवेदिति शेषः स्वयं तत् कार्यं न समुत्पाद्यं न उत्थापनीयं कथञ्चन न कर्त्तव्यञ्च ॥ १७ ॥

बलीयसेति । अभ्रंशिनीम् अक्षयां कदाचन भौजङ्गीं क्षयिणीमिति भावः । न लक्ष्मीं सम्पदं वाञ्छन् जनः बलीयसा प्रबलेन शत्रुणा समाक्रान्तः सन् वैतसीं वृत्तिं नम्रतामिति भावः आचरेत् आश्रयेत् ॥ १८ ॥

कुर्वन्निति । वैतसीं वेतससम्बन्धिनीं वृत्तिं कुर्वन् आश्रयन् महतीं श्रियं प्राप्नोति, भुजङ्गवृत्तिमापन्नस्तु केवलं वधम् अर्हति ॥ १९ ॥

कौर्मं सङ्कोचमास्थाय प्रहारानपि मर्षयेत्।
काले काले च मतिमान् उत्तिष्ठेत् कृष्णसर्पवत् ॥२०॥
आगतं विग्रहं मत्वा सुसाम्ना प्रशमं नयेत्।
विजयस्य ह्यनित्यत्वात् रभसञ्च समुत्सृजेत् ॥ २१ ॥
तथाच, बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि घनः कदाचिदुपसर्पति ॥ २२ ॥

एवमुज्जीवी साममन्त्रं सन्धिकारं क्लृप्तवान् (ण)। अथ तत् श्रुत्वा सञ्जीविनम् आह, भद्र! तव अभिप्रायमपि श्रोतुमिच्छामि। स आह, देव! न मम एतत् (त) प्रतिभाति यत् शत्रुणा सह सन्धिः क्रियते। उक्तञ्च यतः,

शत्रुणा न हि सन्दध्यात् सुश्लिष्टेनापि सन्धिना।

---

कौर्ममिति। कौर्मं कूर्मस्यायं कौर्मः तं कूर्मसम्बन्धिनं सङ्कोचं कुञ्चनभावं नम्रतामिति भावः आस्थाय अवलम्ब्य प्रहारानपि मर्षयेत् सहेत, तथा मतिमान् बुद्धिमान् जनः काले काले काले समयं प्राप्येति भावः कृष्णसर्पवत् कालभुजङ्ग इव उत्तिष्ठेत् शत्रून् दंशेदिति भावः ॥ २० ॥

आगतमिति। विग्रहम् आगतम् उपस्थितं मत्वा सुसाम्ना शोभनेन साम्नेन प्रशमं प्रकृष्टां शान्तिं नयेत् प्रापयेत्। विजयस्य अनित्यत्वात् कादाचित्कत्वादिति भावः रभसं वेगं युद्धोद्योगमित्यर्थः समुत्सृजेत् त्यजेत् ॥ २१ ॥

बलिनेति। बलिना बलवता सह न योद्धव्यम् इति अत्र निदर्शनं दृष्टान्तः अस्ति, हि यतः घनः मेघः प्रतिवातं वातस्य प्रातिकूल्येनेति भावः कदाचित् न उपसर्पति न उद्गच्छति ॥ २२ ॥

(ण) साममन्त्रं साम्नः मन्त्रं सन्धिकारं सन्धिकरणोपयोगिनमित्यर्थः। क्लृप्तवान् रचितवान् वर्णयामासेत्यर्थः।

(त) एतत् साम इत्यर्थः न प्रतिभाति न स्फुरति न रोचते इति भावः।

शत्रुणेति। सुश्लिष्टेनापि सुघटितेनापि सन्धिना सन्धिनियमेनेत्यर्थः शत्रुणा सह न हि नैव सन्दध्यात् न सम्मिलनं कुर्य्यादित्यर्थः। पानीयं जलं सुतप्तमपि पावकम् अग्निं शमयत्येव निर्वापयत्येव। पानीयं पावकस्य शत्रु तत्तु पावकेन

सुतप्तमपि पानीयं शमयत्येव पावकम् ॥ २३ ॥

अपरं च स क्रूरोऽत्यन्तलुब्धो धर्मरहितः। तत् त्वया विशेषात् न सन्धेयः। उक्तञ्च यतः,

सत्यधर्मविहीनेन न सन्दध्यात् कथञ्चन।
सुसन्धितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ २४ ॥

तस्मात् तेन सह योद्धव्यमिति मे मतिः। उक्तञ्च यतः,

क्रूरो लुब्धोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः।
मूढो युद्धावमन्ता च सुखोच्छेद्यो भवेत् रिपुः ॥ २५ ॥

अपरं तेन पराभूता वयम्। तत् यदि सन्धानकीर्त्तनं (थ) करिष्यामः स भूयोऽत्यन्तं कोपं करिष्यति। उक्तञ्च,

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया।
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति ? ॥२६॥

---

नितरामनुप्रवेशेन उष्णीकृतमपि समयं प्राप्य तमेवाग्निं नाशयतीति तात्पर्य्यम् ॥ २३ ॥

सत्येति। सत्यधर्मविहीनेन जनेन सह कथञ्चन न सन्दध्यात् न सन्धिं कुर्य्यात्। स सुसन्धितोऽपि सुसन्धिना नियन्त्रितोऽपि असाधुत्वात् अचिरात् विक्रियां याति गच्छति ॥ २४ ॥

क्रूर इति। क्रूरः निष्ठुरः, लुब्धः, अलसः, असत्यः, मिथ्यावादी, प्रमादी, अनवधानवान्, भीरुः, भयशीलः, अस्थिरः, अधीरः, मूढः, निर्बोधः, युद्धावमन्ता, युद्धनिरुत्सुकः, रिपुः, शत्रुः, सुखोच्छेद्यः, सुखेन उन्मूलनीयः भवेत् ॥२५॥

(थ) सन्धानकीर्त्तनं सन्धिप्रस्तावम्।

चतुर्थोपायेति। चतुर्थेन उपायेन युद्धेन सामदानभेददण्डमित्युपायचतुष्टयम् इत्यनेन युद्धस्य चतुर्थत्वेन परिगणनादिति भावः साध्ये प्रतीकार्य्ये रिपौ शत्रौ सान्त्वं साम सामसान्त्वमुभे समे इत्यमरः। अपक्रिया अपकारः कोपवृद्धिकारणम् इत्यर्थः। कः प्राज्ञः स्वेद्यं घर्मनिःसरणयोग्यम् इत्यर्थः आमज्वरं नवज्वरम् अम्भसा जलेन परिषिञ्चति न कोऽपीत्यर्थः। तादृशशत्रौ सान्त्ववादी नवज्वरे जलसेक इव इति भावः। प्रतिवस्तूपमालङ्कारः। तदुक्तं दर्पणे,

सामवादाः सकोपस्य शत्रोः प्रत्युत दीपकाः।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः॥ २७॥

यदेव एतद्वदति रिपुर्बलवान्। तदपि अकारणम्। उक्तञ्च यतः,

सोत्साहशक्तिसम्पन्नो हन्याच्छत्रुं लघुर्गुरुम्।
यथा कण्ठीरवो नागं सुसाम्राज्यं प्रपद्यते॥ २८॥

मायया शत्रवो बध्या अबध्याः स्युर्बलेन ये।
यथा स्त्रीरूपमास्थाय हतो भीमेन कीचकः॥ २९॥

तथाच, मृत्योरिवोग्रदण्डस्य राज्ञो यान्ति वशं द्विषः।
शष्पतुल्यं हि मन्यन्ते दयालुं रिपवो नृपम्॥ ३०॥

---

प्रतिवस्तूपमा सा स्याद् वाक्ययोगम्यसाम्ययोः। एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथगिति॥ २६॥

सामेति। सामवादाः प्रतप्तस्य सर्पिषः घृतस्य सहसा तोयबिन्दव इव सकोपस्य शत्रोः प्रत्युत वैपरीत्ये दीपकाः उद्दीपयितारः॥ २७॥

सोत्साहेति। लघुः क्षुद्रो जनः सोत्साहा या शक्तिः तया सम्पन्नः समन्वितः उत्साहशक्तिसंयुक्तश्चेत् इत्यर्थः गुरुं महान्तमपि शत्रुं हन्यात्, यथा कण्ठीरवः कण्ठस्वर इत्यर्थः नागं हस्तिनं सर्पं वा सुसाम्राज्यं प्रपद्यते सुखेन साम्राज्यं करोति, सामान्योऽपि नरः मधुरस्वरेण महान्तं हस्तिनं भुजङ्गं वा बध्नातीति प्रसिद्धिरत्र अनुसन्धेया॥ २८॥

माययेति। ये शत्रवः बलेन अबध्याः स्युः, ते मायया छलेन बध्याः हन्तव्याः। यथा भीमेन स्त्रीरूपं सैरिन्ध्रीवेशम् आस्थाय अवलम्ब्य कीचकः विराटसेनापतिः द्रौपदीसतीत्वनाशोद्यत इति भावः हतः विनाशितः। पुरा अज्ञातवासावस्थायां पाण्डवाः सह पाञ्चाल्या छद्मवेशेन विराटनगरमधिवसन्ति स्म। तदा अन्तःपुरवर्त्तिनीं सैरिन्ध्रीवेशां पाञ्चालीं कीचको विराटसेनानीः कामयाञ्चक्रे। सा तु तद्वार्त्तां महानसाधिकृते भीमाय समाचचक्षे। तदाकर्ण्य भीमोऽपि तां प्रियां समाश्वास्य कीचकाय सङ्केतं कर्त्तुमादिदेश। अहमेव तव वेशेन तत्र गत्वा तं निपातयिष्यामीत्युक्त्वा तां विससर्ज च। ततश्च रात्रौ तद्वेशेन कीचकसकाशं गत्वा तं निहतवानिति भारतीया कथात्रानुसन्धेया॥ २९॥

मृत्योरिति। द्विषः शत्रवः मृत्योरिव उग्रदण्डस्य तीक्ष्णतेजसः वशं यान्ति, वश्या भवन्ति। रिपवः शत्रवः दयालुं नृपं शष्पतुल्यं तृणसमं मन्यन्ते हि॥ ३०॥

न याति शमनं यस्य तेजस्तेजस्विते जसा ।
वृथा जातेन किं तेन मातुर्यौवनहारिणा ? ॥ ३१ ॥
या लक्ष्मीर्नानुलिप्ताङ्गी वैरिशोणितकुङ्कुमैः ।
कान्तापि मनसः प्रीतिं न सा धत्ते मनस्विनाम् ॥ ३२ ॥
रिपुरक्तेन संसिक्तारिस्त्रीनेत्राम्बुभिस्तथा ।
न भूमिर्यस्य भूपस्य का श्लाघा तस्य जीवने ॥ ३३ ॥

एवं सञ्जीवी विग्रहमन्त्रं विज्ञापयामास। अथ तत् श्रुत्वा अनुजीविनम् अपृच्छत्। भद्र! त्वमपि स्वाभिप्रायं निवेदय। सोऽब्रवीत्। देव! दुष्टः स बलाधिको निर्मर्य्यादश्च (द) तत् तेन सह सन्धिविग्रहौ न युक्तौ केवलं यानम् अर्हं (ध) स्यात्। उक्तञ्च,

बलोत्कटेन दुष्टेन मर्य्यादारहितेन च ।
न सन्धिविग्रहौ नैव विना यानं प्रशस्यते ॥ ३४ ॥

---

नेति। यस्य तेजः तेजस्विनः तेजसा शमनं शान्तिं याति गच्छति पराभवं प्राप्नोतीति भावः। मातुः जनन्याः यौवनहारिणा तारुण्यक्षयकारिणा वृथा जातेन निरर्थकमुत्पन्नेन तेन किम्? न किमपि प्रयोजनम् इत्यर्थः॥ ३१ ॥

येति। या लक्ष्मीः वैरिणां शत्रूणां शोणितान्येव कुङ्कुमानि तैः अनुलिप्तम् अङ्गं यस्याः तादृशी सा कान्तापि मनस्विनां वीराणां मनसः चित्तस्य प्रीतिम् आनन्दं न धत्ते नोत्पादयति ॥ ३२ ॥

रिपुरक्तेनेति। यस्य भूपस्य राज्ञः भूमिः रिपूणां रक्तेन तथा अरीणां रिपूणां याः स्त्रियः तासां नेत्राम्बुभिः नयनजलैः न संसिक्ता न सम्यक् सेकं प्राप्ता तस्य जीवने का श्लाघा? न कापि इत्यर्थः ॥ ३३ ॥

(द) निर्मर्य्यादः अशिष्टाचार इत्यर्थः।

(ध) अर्हं योग्यम्।

बलोत्कटेनेति। बलोत्कटेन बलाधिकेन दुष्टेन अनार्य्येण मर्य्यादा शिष्टाचारः तद्रहितेन शत्रुणेति शेषः सह सन्धिविग्रहौ न कार्य्यौ इति शेषः। यानं विना अन्यदिति शेषः न प्रशस्यते न युज्यते यानमेव तत्र योग्यमिति भावः ॥ ३४ ॥

द्विधाकारं भवेत् यानं भयत्रस्तप्ररक्षणम् ।
एकमन्यज्जिगीषोश्च यात्रालक्षणमुच्यते ॥ ३५ ॥
कार्त्तिके वाथ चैत्रे वा विजिगीषोः प्रशस्यते ।
यानमुत्कृष्टवीर्य्यस्य शत्रुदेशे न चान्यदा ॥ ३६ ॥
अवस्कन्दप्रदानस्य सर्वे कालाः प्रकीर्त्तिताः ।
व्यसने वर्त्तमानस्य शत्रोश्छिद्रान्वितस्य च ॥ ३७ ॥
स्वस्थानं सुदृढ़ं कृत्वा शूरैश्चाप्तैर्महाबलैः ।
परदेशं ततो गच्छेत् प्रणिधिव्याप्तमग्रतः ॥ ३८ ॥
अज्ञातविविधासारतोयशस्यो व्रजेत् तु यः ।
परराष्ट्रं स नो भूयः स्वराष्ट्रमधिगच्छति ॥ ३९ ॥
तत् ते युक्तं कर्त्तुम् अपसरणम् (न) ।

---

द्विधेति । यानं द्विधाकारं द्विप्रकारं भवेत् । एकं तयोरिति शेषः भयत्रस्तप्ररक्षणं भयत्रस्तानां प्रकर्षेण रक्षणम् अन्यत् द्वितीयं जिगीषोः जयार्थिनः यात्रालक्षणं युद्धार्थं शत्रोः प्रति गमनस्वरूपम् उच्यते कथ्यते ॥ ३५ ॥

कार्त्तिके इति । उत्कृष्टवीर्य्यस्य अधिकतेजसः विजिगीषोः विजयार्थिनः राज्ञः कार्त्तिके वा अथवा चैत्रे अन्यदा अन्यस्मिन् काले न शत्रुदेशे यानं प्रशस्यते ॥ ३६ ॥

अवस्कन्देति । व्यसने स्त्रीमद्यादौ वर्त्तमानस्य प्रसक्तस्य अतएव छिद्रान्वितस्य दोषयुक्तस्य इत्यर्थः शत्रोः अवस्कन्दप्रदानस्य आक्रमणस्य इत्यर्थः सर्वे कालाः प्रकीर्त्तिताः कथिताः । तादृशः शत्रुः सर्वदैव वधमाप्नोतीति भावः ॥ ३७ ॥

स्वस्थानमिति । शूरैः वीरैः आप्तैः विश्वस्तैः महाबलैः पुरुषैः स्वस्थानं स्वं नगरं सुदृढ़ं शत्रुदुरासदमिति भावः कृत्वा सुसंरक्ष्येति भावः ततः अनन्तरम् अग्रतः पूर्वं प्रणिधिभिः चारैः स्वप्रेरितैरिति भावः व्याप्तम् आकीर्णं परदेशं शत्रुराज्यं गच्छेत् ॥ ३८ ॥

अज्ञातेति । अज्ञातानि अविदितानि चारैरिति भावः विविधानि बहुप्रकाराणि आसारः सुहृद्बलं तोयं जलं शस्यञ्च तानि आसारतोयशस्यानि येन तादृशः यः राजा परराष्ट्रं शत्रुदेशं व्रजेत् गच्छेत् सः भूयः पुनः स्वराष्ट्रं न अधिगच्छति नागच्छति, शत्रुभिः पराजीयते इति भावः ॥ ३९ ॥

(न) अपसरणं यानम् ।

अन्यच्च, न विग्रहं न सन्धानं बलिना तेन पापिना ।

कार्य्यलाभमपेक्ष्यापसरणं क्रियते बुधैः ॥ ४० ॥

उक्तञ्च यतः, यदपसरति मेषः कारणं तत् प्रहर्त्तुम्

मृगपतिरपि कोपात् सङ्कुचत्युत्पतिष्णुः ।

हृदयविहितवैरा गूढ़मन्त्रोपचाराः

किमपि विगणयन्तो बुद्धिमन्तः सहन्ते ॥ ४१ ॥

अन्यच्च, बलवन्तं रिपुं दृष्ट्वा देशत्यागं करोति यः ।

युधिष्ठिर इवाप्नोति पुनर्जीवन् स मेदिनीम् ॥ ४२ ॥

युद्ध्यतेऽहङ्कृतिं कृत्वा दुर्बलो यो बलीयसा ।

स तस्य वाञ्छितं कुर्य्यादात्मनश्च कुलक्षयम् ॥ ४३ ॥

तद्बलवताभियुक्तस्य अपसरणसमयोऽयं न सन्धेर्विग्रहस्य च, एवम् अनुजीविमन्त्रोऽपसरणस्य । अथ तस्य वाक्यं समाकर्ण्य प्रजीविनमाह । भद्र ! त्वमपि आत्मनोऽभिप्रायं

---

नेति । बलिना बलवता पापिना तेन विग्रहो न, सन्धानं सन्धिश्च न कर्त्तव्यमिति शेषः, कार्य्यलाभम् अपेक्ष्य विविच्य बुधैः विद्वद्भिः अपसरणं यानं क्रियते ॥ ४० ॥

यदिति । मेषः यत् अपसरति सिंहेनाक्रान्त इति शेषः तत् अपसरणं प्रहर्त्तुं कारणं सिंहं प्रति प्रहारार्थम् इत्यर्थः मृगपतिः सिंहोऽपि कोपात् उत्पतिष्णुः तदुपरीति शेषः सङ्कुचति सङ्कोचं प्राप्नोति, कथमयं मां प्रति बद्धलक्ष्यः क्रमेणापसरति प्रहारार्थमेवेत्याशङ्कया उत्पतनात् निवर्त्तते इति भावः । तथाहि बुद्धिमन्तो जनाः हृदये विहितं वैरं यैः तथोक्ताः अपि गूढ़ः अप्रकाशितः मन्त्रः मन्त्रणमेव उपचारः मनोवृत्तिविशेषः येषां तथाभूताः सन्तः किमपि विगणयन्तः विचारयन्तः सहन्ते शत्रूणामुपद्रवमिति शेषः । मालिनीवृत्तम् ॥ ४१ ॥

बलवन्तमिति । यः बलवन्तं रिपुं शत्रुं दृष्ट्वा देशत्यागं करोति, स पुनः जीवन् युधिष्ठिर इव मेदिनीं राज्यम् आप्नोति ॥ ४२ ॥

युध्यते इति । यः दुर्बलः अहङ्कृतिं गर्वं कृत्वा बलीयसा प्रबलेन सह युध्यते सः तस्य बलीयसः रिपोः वाञ्छितं मनोरथम् आत्मनः कुलक्षयञ्च कुर्य्यात् ॥ ४३ ॥

वद। सोऽब्रवीत्। देव! मम सन्धिविग्रहयानानि त्रीणि अपि न प्रतिभान्ति (प) विशेषतश्च आसनं प्रतिभाति। उक्तञ्च यतः,

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति।
स एव प्रच्युतः स्थानाच्छुनापि परिभूयते ॥ ४४ ॥

अन्यच्च,

अभियुक्तो बलवता दुर्गे तिष्ठेत् प्रयत्नवान्।
तत्रस्थः सुहृदाह्वानं प्रकुर्वीतात्ममुक्तये ॥ ४५ ॥

यो रिपोरागमं श्रुत्वा भयसन्त्रस्तमानसः।
स्वस्थानं सन्त्यजेत्तत्र न स भूयो वसेन्नरः ॥ ४६ ॥

दंष्ट्राविरहितः सर्पो मदहीनो यथा गजः।
स्थानहीनस्तथा राजा गम्यः स्यात् सर्वजन्तुषु ॥४७॥

निजस्थानस्थितोऽप्येकः शतं योद्धुं सहेन्नरः।
शक्तानामपि शत्रूणां तस्मात् स्थानं न सन्त्यजेत् ॥४८॥

---

(प) प्रतिभान्ति रोचन्ते। आसनं स्वस्थाने अवस्थितिः।

नक्र इति। नक्रः कुम्भीरः स्वस्थानम् आसाद्य स्वस्मिन् स्थाने स्थित्वेत्यर्थः गजेन्द्रमपि कर्षति, स एव नक्रः स्थानात् प्रच्युतः भ्रष्टः शुना कुक्कुरेणापि परिभूयते पराजीयते बध्यते इत्यर्थः ॥ ४४ ॥

अभियुक्त इति। बलवता प्रबलेन शत्रुणा अभियुक्तः आक्रान्तो जनः प्रयत्नवान् सन् दुर्गे तिष्ठेत् तत्रस्थः दुर्गस्थितः आत्ममुक्तये आत्मनस्त्राणाय सुहृदां मित्राणामाह्वानं प्रकुर्वीत ॥ ४५ ॥

य इति। यः रिपोः शत्रोः आगमं श्रुत्वा भयेन सन्त्रस्तं मानसं यस्य तथाभूतः सन् स्वस्थानं सन्त्यजेत् स नरः तत्र स्वस्थाने भूयः पुनः न वसेत् न वसतिं कर्त्तुं शक्नोतीत्यर्थः ॥ ४६ ॥

दंष्ट्रेति। यथा दंष्ट्राविरहितः दशनवर्जितः सर्पः, यथा मदहीनः मदस्रावशून्यः गजः तथा स्थानहीनः स्वस्थानात् भ्रष्टः राजा सर्वेषु जन्तुषु प्राणिषु मध्ये येन केनचिदिति शेषः। गम्यः सुधर्षणीयः स्यात् ॥ ४७ ॥

निजेति। एकोऽपि नरः निजस्थानस्थितः सन् शक्तानामपि शत्रूणां शतं योद्धुं शतेन वीरैः सह विग्रहं कर्त्तुमित्यर्थः सहेत् शक्नुयात्। तथा स्थानं न सन्त्यजेत् ॥ ४८ ॥

तस्माद्दुर्गं दृढं कृत्वा सुभटासारसंयुतम् ।
प्राकारपरिखायुक्तं शस्त्रादिभिरलङ्कृतम् ॥ ४९ ॥
तिष्ठ मध्यगतो नित्यं युद्धाय कृतनिश्चयः ।
जीवन् सम्प्राप्स्यसि क्ष्मान्तं मृतो वा स्वर्गमेष्यसि ॥५०॥

अन्यच्च, बलिनापि न बध्यन्ते लघवोऽप्येकसंश्रयाः ।
विपक्षेणापि मरुता यथैकस्थानवीरुधः ॥ ५१ ॥
महानप्येकजो वृक्षः बलवान् सुप्रतिष्ठितः ।
प्रसह्य इव वातेन शक्यो धर्षयितुं यतः ॥ ५२ ॥
अथ ये संहता वृक्षाः सर्वतः सुप्रतिष्ठिताः ।
न ते शीघ्रेण वातेन हन्यन्ते ह्येकसंश्रयात् ॥ ५३ ॥
एवं मनुष्यमेकञ्च शौर्य्येणापि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते हिंसन्ति च ततः परम् ॥५४॥

---

तस्मादिति । तस्मात् युद्धाय कृतनिश्चयः प्रतिज्ञामारूढ़ः सन् शत्रुभयमिति भावः सुभटैः सुयोधैः आसारैः सुहृद्बलैश्च संयुतं प्राकारैः प्राचीरैः परिखाभिश्च युक्तं शस्त्रादिभिः प्रहरणसाधनैः अलङ्कृतं सज्जितं दुर्गं कृत्वा मध्यगतः तन्मध्यवर्त्ती नित्यं सततं तिष्ठ । एवं कृते जीवन् क्ष्मान्तं पृथिव्यन्तं समग्रां पृथिवीं प्राप्स्यसि, मृतो वा युद्धे इति शेषः स्वर्गम् एष्यसि प्राप्स्यसि ॥ ४९ ॥ ५० ॥

बलिनेति । मरुता वायुना एकस्थानवीरुधः एकस्थानस्थिता व्रतत्यः यथा बलिनापि विपक्षेण शत्रुणा एकः संश्रयो येषां तथोक्ता एकस्थानस्थाः लघवोऽपि न बध्यन्ते न विनाश्यन्ते ॥ ५१ ॥

महानिति । महान् बलवान् सुप्रतिष्ठितः सुबद्धमूल इत्यर्थः अपि एकजः एक एव जायते इति एकजः एकमात्रजात इत्यर्थः वृक्षः यतः वातेन प्रसह्य इव बलादिव धर्षयितुं शक्यः तस्मात् एकाकी न सन्तिष्ठेदिति भावः ॥ ५२ ॥

अथेति । अथ पक्षान्तरे ये वृक्षाः संहताः मिलिताः सर्वतः समन्तात् सुप्रतिष्ठिताः सुबद्धमूलाः, ते शीघ्रेण वेगवतापि वातेन एकसंश्रयात् एकत्रावस्थानात् न हन्यन्ते हि नैव विनाश्यन्ते इत्यर्थः ॥ ५३ ॥

एवमिति । द्विषन्तः शत्रवः शौर्य्येणापि समन्वितम् एकम् असहायं परं शत्रुं मनुष्यम् एवम् एकं वृक्षं वायुरिवेति भावः शक्यम् अभिभवनीयं मन्यन्ते ततः तस्मात् अभिभवनीयत्वात् हिंसन्ति च ॥ ५४ ॥

एवं प्रजीविमन्त्र इदम् आसनसंज्ञकम्। एतत् समाकर्ण्य चिरञ्जीविनं प्राह, भद्र! त्वमपि स्वाभिप्रायं वद। सोऽब्रवीत् देव! षाड्गुण्यमध्ये (फ) मम संश्रयः सम्यक् प्रतिभाति। तत् तस्य अनुष्ठानं कार्य्यम्। उक्तञ्च,

असहायः समर्थोऽपि तेजस्वी किं करिष्यति?।
निर्वाते ज्वलितो वह्निः स्वयमेव प्रशाम्यति॥ ५५॥

सङ्गतिः श्रेयसी पुंसां स्वपक्षे च विशेषतः।
तुषैरपि परिभ्रष्टा न प्ररोहन्ति तण्डुलाः॥ ५६॥

तदत्रैव स्थितेन त्वया कश्चित् समर्थः (ब) समाश्रयणीयः। यो विपत्प्रतीकारं करोति। यदि पुनस्त्वं स्वस्थानं त्यक्त्वा अन्यत्र यास्यसि। तत् कोऽपि ते वाङ्मात्रेणापि सहायत्वं न करिष्यति। उक्तञ्च यतः,

वनानि दहतो वह्नेः सखा भवति मारुतः।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम्?॥५७॥

---

(फ) षाड्गुण्यमध्ये सन्धिविग्रहयानासनद्वैधीभावसमाश्रयमध्ये।

असहाय इति। समर्थोऽपि तेजस्वी अपि असहायः किं करिष्यति? न किमपि कर्त्तुं शक्नोतीत्यर्थः। निर्वाते वायुशून्यदेशे ज्वलितो वह्निः स्वयमेव प्रशाम्यति निर्वाणमेति सहायाभावादिति भावः॥ ५५॥

सङ्गतिरिति। पुंसां पुरुषाणां सङ्गतिः सम्मेलनं विशेषतः स्वपक्षे श्रेयसी अतिशयेन श्रेयस्करीत्यर्थः। तण्डुलाः तुषैः परिभ्रष्टाः विच्युताः सन्तः न प्ररोहन्ति नोत्पद्यन्ते॥ ५६॥

(ब) समर्थः शक्तिमान् शत्रुपराजयक्षम इत्यर्थः।

वनानीति। मारुतः वायुः वनानि दहतः भस्मीकुर्वतः वह्नेः सखा भवति, स एव मारुतः दीपनाशाय भवतीति शेषः, तथाहि कृशे क्षीणे सति कस्य सौहृदं सद्भावः अस्ति? न कस्यापीत्यर्थः॥ ५७॥

अथवा न एतत् एकान्तं (भ) यद्बलिनमेकं समाश्रयेत्। लघूनामपि संश्रयो रक्षाय एव भवति। उक्तञ्च यतः,

सङ्घातवान् यथा वेणुर्निविड़ो वेणुभिर्वृतः।
न शक्यः स समुच्छेत्तुं दुर्बलोऽपि तथा नृपः॥ ५८॥

यदि पुनरुत्तमसंश्रयो भवति तत्किमुच्यते? उक्तञ्च,

महाजनस्य सम्पर्कः कस्य नोन्नतिकारकः?।
पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम्॥ ५९॥

तदेवं संश्रयं विना न कश्चित् प्रतीकारो भवति। तस्मात् संश्रयः कार्य्यः इति मेऽभिप्रायः। एवं चिरञ्जीविमन्त्रः। अथ एवमभिहिते स मेघवर्णो राजा चिरन्तनं पितृसचिवं (म) दीर्घायुषं सकलनीतिशास्त्रपारङ्गतं स्थिरजीविनामानं प्रणम्य प्रोवाच। तात! यत् एते मया पृष्टाः सचिवाः तावदत्रस्थितस्यापि तव, तत् परीक्षार्थं, येन त्वं सकलं श्रुत्वा यदुचितं तन्मे समादिशसि। तत् यत् युक्तं भवति तत्समादेश्यम्। स आह, वत्स! सर्वैरपि एतैः नीतिशास्त्राश्रयमुक्तं (य) सचिवैः। तदुपयुज्यते स्वकालोचितं (र) सर्वमेव, परमेष द्वैधीभावस्य कालः। उक्तञ्च,

---

(भ) एकान्तं सिद्धान्तितमित्यर्थः।

सङ्घातवानिति। वेणुभिः वंशैः वृतः आकीर्णः सङ्घातवान् समूहालम्बनः अतएव निविड़ः घनः वेणुः यथा समुच्छेत्तुं न शक्यः, तथा दुर्बलोऽपि ससहायः नृपः न समुच्छेत्तुं शक्यते इति शेषः॥ ५८॥

महाजनस्येति। महाजनस्य महतो जनस्य सम्पर्कः कस्य जनस्य न उन्नतिकारकः? अपि तु सर्वस्यैवेत्यर्थः। पद्मपत्रस्थितं तोयं जलं मुक्ताफलस्य श्रियं कान्तिं धत्ते धारयति महत्संसर्गादिति भावः॥ ५९॥

(म) पितृसचिवं पितृमन्त्रिणम्।

(य) नीतिशास्त्राश्रयं नीतिशास्त्रयुक्तं वचनमिति शेषः।

(र) स्वकालोचितं स्वसमयोचितम्।

अविश्वासं सदा तिष्ठेत् सन्धिना विग्रहेण च ।
द्वैधीभावं समाश्रित्य नैव शत्रौ बलीयसि ॥ ६० ॥

तच्छत्रुं विश्वास्य अविश्वस्तैर्लोभं दर्शयद्भिः सुखेन उच्छिद्यते रिपुः । उक्तञ्च,

उच्छेद्यमपि विद्वांसो वर्द्धयन्त्यरिमेकदा ।
गुड़ेन वर्द्धितः श्लेष्मा सुखं वृद्ध्या निपात्यते ॥ ६१ ॥

तथाच, स्त्रीणां शत्रोः कुमित्रस्य पण्यस्त्रीणां विशेषतः ।
यो भवेदेकभावेन न स जीवति मानवः ॥ ६२ ॥

कृत्यं देवद्विजातीनामात्मनश्च गुरोस्तथा ।
एकभावेन कर्त्तव्यं शेषं द्वैधं समाश्रितम् ॥ ६३ ॥

एको भावः सदा शस्तो यतीनां भावितात्मनाम् ।
स्त्रीलुब्धानां न लोकानां विशेषेण महीभृताम् ॥ ६४ ॥

---

अविश्वासमिति । सन्धिना विग्रहेण च सदा अविश्वासं यथा तथा तिष्ठेत् किन्तु सन्धिविग्रहाभ्यां शत्रुप्रतिविधाने सर्वदा संशय एव अवतिष्ठते इति भावः । बलीयसि अतिप्रबले शत्रौ द्वैधीभावं समाश्रित्य नैव अविश्वासं तिष्ठेदिति शेषः । द्वैधीभावेन शत्रूणां जितत्वादिति भावः ॥ ६० ॥

उच्छेद्यमिति । विद्वांसः उच्छेद्यमपि अरिम् एकदा एकस्मिन् काले कदाचिदित्यर्थः वर्द्धयन्ति । तथाहि गुडेन वर्द्धितः वृद्धिं नीतः श्लेष्मा वृद्ध्या सुखम् अनायासेन निपात्यते निहन्यते । यथा गुड़ः श्लेष्मिणः श्लेष्माणं वर्द्धयित्वा पश्चात् तं श्लेष्माणं निपातयति तद्वत् प्रथमं विश्वासमुत्पाद्य शत्रुं वर्द्धयन् पश्चात् निपातयेदिति भावः ॥ ६१ ॥

स्त्रीणामिति । यः मानवः स्त्रीणां शत्रोः कुमित्रस्य विशेषतः । पण्यस्त्रीणां वेश्यानां प्रतीति शेषः एकभावेन एकभावमवलम्ब्य व्यवहरेत् विश्वासं दर्शयेदिति भावः स मानवः न जीवति ॥ ६२ ॥

कृत्यमिति । देवद्विजादीनाम् आत्मनः तथा गुरोः कृत्यम् एकभावेन वाह्याभ्यन्तरैक्येनेति भावः कर्त्तव्यं शेषम् अवशिष्टं कृत्यमिति शेषः द्वैधं द्विभावं समाश्रितं द्विभावेनैव कर्त्तव्यमित्यर्थः ॥ ६३ ॥

एक इति । भावितात्मनां सद्भावपूर्णानां यतीनां योगिनां प्रतीति शेषः सदा

तद् द्वैधीभावं संश्रितस्य तव स्वस्थाने वासो भविष्यति, लोभाश्रयाच्च शत्रुम् उच्चाटयिष्यसि (ल) अपरं यदि किञ्चित् छिद्रं तस्य पश्यसि तद्गत्वा व्यापादयिष्यसि। मेघवर्ण आह, तात! मया सोऽविदितसंश्रयः, (व) तत् कथं तस्य छिद्रं ज्ञास्यामि। स्थिरजीवी आह, वत्स! न केवलं स्थानं छिद्राण्यपि तस्य प्रकटीकरिष्यामि (श) प्रणिधिभिः। उक्तञ्च,

गावो गन्धेन पश्यन्ति वेदैः पश्यन्ति वै द्विजाः।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः॥ ६५॥

उक्तञ्चात्र विषये, यस्तीर्थानि निजे पक्षे परपक्षे विशेषतः।
गुप्तैश्चारैर्नृपो वेत्ति न स दुर्गतिमाप्नुयात्॥ ६६॥

मेघवर्ण आह, तात! कानि तीर्थानि उच्यन्ते कतिसङ्ख्यानि च, कीदृशाः गुप्तचराः, तत्सर्वं निवेद्यतामिति। स आह, अत्र विषये भगवता नारदेन युधिष्ठिरः प्रोक्तः। यत् शत्रुपक्षेऽष्टादशतीर्थानि स्वपक्षे पञ्चदश। त्रिभिः त्रिभिः गुप्तचरैः तानि ज्ञेयानि। तैः ज्ञातैः स्वपक्षः परपक्षश्च वश्यो भवति। उक्तञ्च नारदेन युधिष्ठिरं प्रति,

---

एकी भावः शस्तः प्रशंसनीयः। स्त्रीणां लुब्धानां लोकानां विशेषतः महीभृतां राज्ञां न एकी भावः शस्त इति शेषः॥ ६४॥

(ल) लोभाश्रयात् लोभपरवशत्वात् शत्रोरिति शेषः। उच्चाटयिष्यसि दूरीकरिष्यसि।

(व) अविदितसंश्रयः अज्ञातवासः।

(श) प्रकटीकरिष्यामि प्रकाशयिष्यामि। प्रणिधिभिः चारैः।

गाव इति। गावः गन्धेन पश्यन्ति द्विजाः ब्राह्मणाः वेदैः पश्यन्ति राजानः चारैः प्रणिधिभिः पश्यन्ति, इतरे जनाः चक्षुर्भ्यां पश्यन्ति॥ ६५॥

य इति। यः निजे पक्षे विशेषतः परपक्षे गुप्तैः चारैः तीर्थानि मन्त्राद्यष्टादशस्थानानि वेत्ति जानाति सः दुर्गतिं दुरवस्थाम् न आप्नुयात्॥ ६६॥

कच्चिदष्टादशान्येषु स्वपचे दशपञ्च च।
त्रिभिस्त्रिभिरविज्ञातैर्वेत्सि तीर्थानि चारकैः ॥६७॥

तीर्थशब्देन अयुक्तकर्माभिधीयते (घ) तद् यदि तेषां कुत्सितं भवति तत्स्वामिनोऽभिघाताय भवति। प्रधानं भवति तद्हृदये स्यादिति। तद्यथा—मन्त्री पुरोहितः सेनापतिः युवराजो दौवारिकोऽन्तर्वासिकः प्रशासकः (स) समाहर्तृसन्निधातृप्रदेष्टृज्ञापकाः साधनाध्यक्षो गजाध्यक्षः कोशाध्यक्षो दुर्गपालकरपालसीमापालप्रोत्काटभृत्याः (ह) एषां भेदेन द्राक् रिपुः साध्यते (च) स्वपक्षे च देवी जननी कञ्चुकी मालिकः शय्यापालकः (क) स्पर्शाध्यक्ष सांवत्सरिको (ख) भिषग्जलवाहकः ताम्बूलवाहक आचार्योऽङ्गरक्षकः

---

कच्चिदिति। त्रिभिः त्रिभिः अविज्ञातैः गूढैः चारकैः प्रणिधिभिः अन्येषु विपक्षेषु अष्टादश स्वपक्षे पञ्चदशतीर्थानि वेत्सि कच्चित्? जानासि किम्? ॥६७॥

(घ) अयुक्तकर्म शत्रुजयार्थं निभृतनिष्पाद्योपायरूपं कर्म मन्त्रादीत्यर्थः।

(स) अन्तर्वासिकः अन्तःपुरचरः। प्रशासकः प्रकर्षेण शासनकर्त्ता सर्वशासनाध्यक्ष इत्यर्थः। समाहर्त्रित्यादि। समाहर्त्ता करसंग्रहकर्त्ता, सन्निधाता सततसन्निहितः प्रदेष्टा प्रदर्शकः ज्ञापकः ज्ञापयिता संवादस्येति भावः।

(ह) साधनाध्यक्षः बलाध्यक्षः। कोशाध्यक्षः धनाध्यक्षः। दुर्गेत्यादि। दुर्गपालः दुर्गरक्षिता, करपालः राजस्वरक्षकः, सीमापालः सीमाध्यक्षः, प्रोत्काटभृत्यः प्रबलकर्मचारी।

(च) भेदेन मनोभङ्गेन। द्राक्झटिति। साध्यते पराजीयते।

(क) कञ्चुकी, अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयते इत्युक्तलक्षणः। मालिकः मालाकारः, राज्ञः अन्तःपुरे नित्यं माल्यदायकः, शय्यापालकः शय्यारक्षिता।

(ख) स्पर्शाध्यक्षः राज्ञः स्पर्शेन्द्रियग्राह्यवस्तूनां गन्धद्रव्यादीनाम् अधिपतिः। सांवत्सरिकः दैवज्ञः, भिषक् चिकित्सकः, जलवाहकः पानीयभारी।

स्थानचिन्तकः छत्रधरो विलासिनी (ग) एषां वैरद्वारेण (घ) स्वपक्षे विघातः। तथाच,

वैद्यसांवत्सरिकाचार्य्याः स्वपक्षेऽधिकृताश्चराः।
यथाहितुण्डिकोन्मत्ताः सर्वं जानन्ति शत्रुषु॥ ६८॥

तथाच, कृत्याकृत्यविदस्तीर्थेष्वन्तः प्रणिधयः पदम्।
विदांकुर्वन्तु महतस्तलं विद्विषदम्भसः॥ ६९॥

एवं मन्त्रिवाक्यम् आकर्ण्य अत्रान्तरे मेघवर्ण आह, तात! अथ किं निमित्तम् एवंविधं प्राणान्तिकं सदैव वायसोलूकानां वैरम्। स आह, वत्स! कदाचित् हंसशुकवककोकिलचातकोलूकमयूरकपोतपारावतविष्किरप्रभृतयः सर्वेऽपि पक्षिणः समेत्य सोद्वेगं मन्त्रयितुम् आरब्धाः। अहो! अस्माकं तावद् वैनतेयो (ङ) राजा—स च वासुदेवभक्तः न कामपि चिन्ताम् अस्माकं करोति। तत् किं तेन वृथास्वामिना यो लुब्धकपाशैः नित्यं निबध्यमानानां न रक्षां विधत्ते। उक्तञ्च,

यो न रक्षति वित्रस्तान् पीड्यमानान् परैः सदा।

---

(ग) आचार्य्यः गुरुः। अङ्गरक्षकः शरीरगोप्ता। स्थानचिन्तकः स्थानस्य सदसद्भावविवेचकः। विलासिनी वेश्या।

(घ) एषां देवीप्रभृतीनां वैरद्वारेण वैरविधानेन। एभिरेव प्रभुः रक्ष्यते, विरूपस्तु हन्यते इति भावः।

वैद्येति। वैद्यसांवत्सरिकाचार्य्याः स्वपक्षे अधिकृताः आहितुण्डिकोन्मत्ताः विषवैद्याः क्षिप्ताश्च यथा चराः गूढ़चारिणः सन्तः शत्रुषु सर्वं जानन्ति॥ ६८॥

कृत्वेति। कृत्यविदः कार्य्यज्ञाः प्रणिधयः गूढ़चराः तीर्थेषु उक्तेषु मन्त्र्याद्यष्टादशस्थानेषु अन्तः पदं कृत्वा महतः विद्विषदम्भसः वैरिजलस्य तलं विदाङ्कुर्वन्तु जानन्तु। शिशुपालं प्रति यात्रोत्सुकं कृष्णं प्रति उद्धवस्योक्तिरियम्॥ ६९॥

(ङ) वैनतेयः विनतानन्दनः गरुड़ इत्यर्थः।

य इति। यः परैः शत्रुभिः पीड्यमानान् अतएव सदा वित्रस्तान् विशेषेण

जन्तून् पार्थिवरूपेण स कृतान्तो न संशयः ॥ ७० ॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ ७१ ॥
षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे।
अप्रवक्तारमाचार्य्यमनधीयानमृत्विजम् ॥ ७२ ॥
अरक्षितारं राजानं भार्य्यां चाप्रियवादिनीम्।
ग्रामकामञ्च गोपालं वनकामञ्च नापितम् ॥ ७३ ॥

तत् सञ्चिन्त्य अन्यः कश्चित् राजा विहङ्गमानां क्रियतामिति अथ तैः भद्राकारम् (च) उलूकम् अवलोक्य सर्वैः अभिहितम्। यत् एष उलूको राजा अस्माकं भविष्यति, तत् आनीयन्तां नृपाभिषेकसम्बन्धिनः सम्भारा इति। अथ साधिते (छ) विविधतीर्थोदके (ज) प्रगुणीकृतेऽष्टोत्तरशतमूलिकासङ्घाते प्रदत्ते सिंहासने वर्त्तिते सप्तद्वीपसमुद्रभूधर-

---

शङ्कितान् जन्तून् प्राणिनः प्रजा इत्यर्थः पार्थिवः पार्थिवरूपेण राजरूपेण अवस्थायेति शेषः न रक्षति, स कृतान्तो यमः न संशयः सन्देहो नास्तीत्यर्थः ॥ ७० ॥

यदीति। यदि नरपतिः सम्यक् नेता नायकः राजकार्य्यदर्शीत्यर्थः न स्यात्, ततः तदा प्रजा अकर्णधारा नाविकशून्या नौः तरणिः जलधौ समुद्रे इव इह संसारे विप्लवेत विपर्य्यासं गच्छेत् म्रियेत इत्यर्थः ॥ ७१ ॥

षडिति। पुरुषः अर्णवे समुद्रे भिन्नां त्रुटितां नावमिव तरणिमिव अप्रवक्तारं प्रकृष्टवाक्यरहितम् आचार्य्यं गुरुम्, अनधीयानम् अध्ययनवर्जितम् ऋत्विजं पुरोहितम्, अरक्षितारं राजानम्, अप्रियवादिनीं भार्य्यां, ग्रामकामं ग्रामलुब्धं गोपालं गोपं, वनकामं जलाशयार्थिनम् अरण्यार्थिनं वा नापितम् इमान् षट् जह्यात् त्यजेत् ॥ ७२ ॥ ७३ ॥

(च) भद्राकारं शोभनावयवम्।

(छ) सम्भाराः द्रव्याणि। साधिते आहृते आनीते इत्यर्थः।

(ज) प्रगुणिते प्रकर्षेण संख्याते।

विचित्रे धरित्रीमण्डले प्रसारिते व्याघ्रचर्मणि, आपूरितेषु हेमकुम्भेषु दीपेषु वाद्येषु च सज्जीकृतेषु दर्पणादिषु माङ्गल्यवस्तुषु, पठत्सु वन्दिमुख्येषु वेदोच्चारणपरेषु समुदितमुखेषु ब्राह्मणेषु गीतपरे युवतीजने, आनीतायाम् अग्रमहिष्यां कृकालिकायाम् (झ) उलूकोऽभिषेकार्थं यावत् सिंहासने उपविशति तावत् कुतोऽपि वायसः समायातः। सोऽचिन्तयत्, अहो! किमेष सकलपक्षिसमागमो महोत्सवश्च। अथ ते पक्षिणः तं दृष्ट्वा मिथः प्रोचुः। पक्षिणां मध्ये वायसः चतुरः श्रूयते। उक्तञ्च,

नराणां नापितो धूर्त्तः पक्षिणां चैव वायसः।
दंष्ट्रिणाञ्च शृगालस्तु श्वेतभिक्षुस्तपस्विनाम्॥ ७४॥

तदस्यापि वचनं ग्राह्यम्। उक्तञ्च,

बहुधा बहुभिः सार्द्धं चिन्तिताः सुनिरूपिताः।
कथञ्चिन्न विलीयन्ते विद्वद्भिश्चिन्तिता नयाः॥ ७५॥

अथ वायसः समेत्य तान् आह, अहो! किं महाजनसमागमोऽयं परममहोत्सवश्च। ते प्रोचुः, भो! नास्ति कश्चित् विहङ्गमानां राजा। तदस्य उलूकस्य विहङ्गराज्याभिषेको निरूपितः तिष्ठति समस्तपक्षिभिः। तत् त्वमपि स्वमतं देहि, प्रस्तावे (ञ) समागतोऽसि। अथ असौ काको

---

(झ) अग्रमहिष्यां प्रधानमहिष्यां कृकालिकायां तदाख्यपेचकपत्न्याम्।

नराणामिति। नराणां मनुष्याणां मध्ये नापितः, पक्षिणां मध्ये वायसः काकः, दंष्ट्रिणां जन्तूनां मध्ये शृगालः तथा तपस्विनां मध्ये श्वेतभिक्षुः धूर्त्तः॥७४॥

बहुधेति। विद्वद्भिः विचक्षणैः जनैः चिन्तिताः बहुभिः सार्द्धं बहुधा चिन्तिताः भाविताः अतएव सुनिरूपिताः सुनिर्द्धारिताः नयाः नीतिकार्य्याणि कथञ्चित् न विलीयन्ते न विकृतिं गच्छन्ति॥ ७५॥

(ञ) प्रस्तावे प्रसङ्गे प्रारब्धे इति यावत्।

विहस्य आह। अहो! न युक्तमेतत् यन्मयूरहंसकोकिलचक्रवाकशुककारण्डवहारीतसारसादिषु पक्षिप्रधानेषु विद्यमानेषु दिवान्धस्य अस्य करालवक्त्रस्य (ट) अभिषेकः क्रियते। तन्न एतत् मम मतम्। यतः,

वक्रनासं सुजिह्माक्षं क्रूरमप्रियदर्शनम्।
अक्रुद्धस्येदृशं वक्त्रं भवेत् क्रुद्धस्य कीदृशम्॥ ७६॥

तथा च, स्वभावरौद्रमत्युग्रं क्रूरमप्रियवादिनम्।
उलूकं नृपतिं कृत्वा का नः सिद्धिर्भविष्यति॥ ७७॥

अपरं वैनतेये स्वामिनि स्थिते किमेष दिवान्धः (ठ) क्रियते राजा, तत् यद्यपि गुणवान् भवति तथापि एकस्मिन् स्वामिनि स्थिते नान्यो भूपः प्रशस्यते।

एक एव हितार्थाय तेजस्वी पार्थिवो भुवः।
युगान्त इव भास्वन्तो बहवोऽत्र विपत्तये॥ ७८॥

---

(ट) करालवक्त्रस्य भीषणवदनस्य।

वक्रनासमिति। अक्रुद्धस्य कोपमकुर्वतः अस्येति शेषः वक्त्रं वदनम् ईदृशं वक्रा नासा यस्य तथोक्तं कुटिलनासिकं सुजिह्मे सुवक्रे अक्षिणी नेत्रे यस्य तादृशं क्रूरं विकटं तथा अप्रियदर्शनं द्रष्टुमप्रीतिकरमित्यर्थः, क्रुद्धस्य कुप्यतः अस्य कीदृशं भवेत्? न जानामीति भावः॥ ७६॥

स्वभावेति। स्वभावेन रौद्रं भीषणम् अत्युग्रम् अतिदारुणं क्रूरं निष्ठुरम् अप्रियवादिनम् उलूकं पेचकं नृपतिं कृत्वा नः अस्माकं का सिद्धिर्भविष्यति॥७७॥

(ठ) दिवान्धः उलूकः।

एक इति। एक एव न तु द्वौ बहवो वा, तेजस्वी पार्थिवः नृपः भुवः पृथिव्याः हितार्थाय भवतीति शेषः। युगान्ते प्रलये बहवो द्वादशेत्यर्थः, भास्वन्तः सूर्या इव अत्र संसारे बहवो नृपाः विपत्तये भवन्तीति शेषः। बहूनां परस्परद्वेषात् प्रजानामेव उच्छेदः सम्पद्यते इति भावः॥ ७८॥

तत् तस्य नाम्नापि यूयं परेषाम् अगम्या (ड) भविष्यथ। उक्तञ्च,

गुरूणां नाममात्रेऽपि गृहीते स्वामिसम्भवे।
दुष्टानां पुरतः क्षेमं तत्क्षणादेव जायते॥ ७९॥

तथाच, व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्॥ ८०॥

ते ऊचुः, कथमेतत्? स आह,

## कथा ६।

कस्मिंश्चित् वने चतुर्दन्तो नाम महागजो यूथाधिपः प्रतिवसति स्म। तत्र कदाचित् महती अनावृष्टिः सञ्जाता प्रभूतवर्षाणि (ढ) यावत्। तया तड़ागह्रदपल्वलसरांसि शोषमुपगतानि (ण)। अथ तैः समस्तगजैः स गजराजः प्रोक्तः। देव! पिपासाकुला गजकलभा (त) मृतप्राया अपरे मृताश्च। तत् अन्विष्यतां कश्चित् जलाशयो यत्र जलपानेन स्वस्थतां व्रजन्ति, ततश्चिरं ध्यात्वा तेन अभिहितम्। अस्ति

---

(ड) तस्य वैनतेयस्य। परेषां शत्रूणाम्। अगम्याः दुर्धर्षा इत्यर्थः।

गुरूणामिति। स्वामिसम्भवे स्वामित्वसम्बन्धवति इत्यर्थः गुरूणां महतां नाममात्रे गृहीते अमुकस्य महामहिमशालिनः प्रजा वयमिति कीर्त्तितेऽपीति भावः। दुष्टानां शत्रूणां पुरतः तत्क्षणादेव नामग्रहणत एव क्षेमं मङ्गलं जायते॥७९॥

व्यपदेशेनेति। महतां व्यपदेशेन नामकीर्त्तनेन परा महती सिद्धिः सञ्जायते, तथाहि शशकाः शशिनः चन्द्रस्य व्यपदेशेन सुखं वसन्ति॥ ८०॥

(ढ) प्रभूतवर्षाणि बहून् वत्सरान् व्याप्यार्थे द्वितीया। तया अनावृष्ट्या। तड़ागेति। तड़ागः महत् सरः, ह्रदः अकृत्रिमजलाशयः, पल्वलं क्षुद्रजलाशयः सरः सरोवरः पुष्करिणीत्यर्थः तानि।

(ण) शोषमुपगतानि शुष्काणि।

(त) गजकलभाः करिशावकाः।

महान् ह्रदो विविक्ते (थ) प्रदेशे स्थलमध्यगतः पातालगङ्गा-जलेन सदैव पूर्णः। तत् तत्र गम्यतामिति। तथानुष्ठिते पञ्चरात्रम् उपसर्पद्भिः (द) समासादितः (ध) तैः स ह्रदः। तत्र स्वेच्छया जलमवगाह्य अस्तमनवेलायां निष्क्रान्ताः (न) तस्य च ह्रदस्य समन्तात् शशकविला असंख्याः सुकोमलभूमौ तिष्ठन्ति। तेऽपि समस्तैरपि तैः गजैः इतस्ततो भ्रमद्भिः परिभग्नाः। बहवः शशका भग्नपादशिरोग्रीवा विहिताः (प) केचिन्मृताः केचिज्जीवशेषा जाताः। अथ गते तस्मिन् गजयूथे (फ) शशकाः सोद्वेगा गजपादक्षुण्णसमावासाः केचि-द्भग्नपादा अन्ये जर्जरितकलेवरा रुधिरप्लुता अन्ये हतशिशवो वाष्पपिहितलोचनाः समेत्य मिथो मन्त्रं चक्रुः। अहो! विनष्टा वयम्, नित्यमेव एतद्गजयूथमागमिष्यति यतो नान्यत्र जलमस्ति। तत् सर्वेषां नाशो भविष्यति। उक्तञ्च,

स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजङ्गमः।
हसन्नपि नृपो हन्ति मानयन्नपि दुर्जनः॥ ८१॥

---

(थ) विविक्ते विजने।

(द) पञ्चरात्रं पञ्चानां रात्रीणां समाहारः पञ्चरात्रं व्याप्त्यर्थे द्वितीया। दिवा आतपतापात् गमनस्य अतीवक्लेशकरत्वादिति भावः। उपसर्पद्भिः गच्छद्भिः।

(ध) समासादितः प्राप्तः।

(न) अस्तमनवेलायां सन्ध्यासमये। निष्क्रान्ताः ह्रदात् निर्गताः। समन्तात् चतुर्दिक्षु।

(प) विहिताः कृताः। जीवशेषाः जीवनावशिष्टाः।

(फ) गजेति। गजानां पादैः क्षुण्णाः दलिताः समावासाः संश्रयाः येषां तथाभूताः।

स्पृशन्निति। गजः स्पृशन्नपि, भुजङ्गमः जिघ्रन्नपि, नृपः हसन्नपि, दुर्जनः मानयन्नपि हन्ति नाशयति॥ ८१॥

तच्चिन्त्यतां कश्चिदुपायः, तत्रैकः प्रोवाच। गम्यतां देशत्यागेन, किमन्यत्, उक्तञ्च मनुना व्यासेन च,

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत्॥ ८२॥
क्षेम्यां शस्यप्रदां नित्यं पशुवृद्धिकरीमपि।
परित्यजेन्नृपो भूमिमात्मार्थमविचारयन्॥ ८३॥
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि॥ ८४॥

ततश्च अन्ये प्रोचुः। भोः! पितृपैतामहं स्थानं न शक्यते सहसा त्यक्तुम्। तत् क्रियतां तेषां कृते काचित् विभीषिका (ब) यत् कथमपि दैवात् न समायान्ति (भ) उक्तञ्च,

निर्विषेणापि सर्पेण कर्त्तव्या महती फटा।

---

त्यजेदिति। कुलस्य वंशस्य अर्थे निमित्तम् एकं त्यजेत् एकत्यागे यदि कुलरक्षा स्यात् तदा तत्कर्त्तव्यमित्यर्थः। ग्रामस्य अर्थे कुलं त्यजेत् यदि कुले त्यक्ते ग्रामरक्षा स्यात् तदा तत्कर्त्तव्यमित्यर्थः। जनपदस्य देशस्य अर्थे ग्रामं त्यजेत् यदि ग्रामे त्यक्ते देशरक्षा स्यात् तदा तत् कर्त्तव्यमित्यर्थः। आत्मार्थे आत्मरक्षार्थं पृथिवीं त्यजेत् यदि पृथिवीपर्य्यन्तत्यागे आत्मरक्षा स्यात् तदा तदपि कार्य्यमित्यर्थः। सततमेवात्मानं गोपायीतेति श्रुतिरिति भावः॥ ८२॥

क्षेम्यामिति। नृपः अविचारयन् विचारमकुर्वन् आत्मार्थं स्वरक्षार्थं क्षेम्यां क्षेमकरीं नित्यं शस्यप्रदां बहुशस्यामित्यर्थः पशुवृद्धिकरीं बहुपशूत्पादनशालिनीम् अपि भूमिं परित्यजेत्॥ ८३॥

आपदर्थे इति। आपदर्थे विपन्निवारणार्थं धनं रक्षेत्, धनैः रक्षितैरिति भावः दारान् रक्षेत् दारैरपि धनैरपि आत्मानं सततं रक्षेत् यथाकथञ्चित् आत्मा रक्षणीय इति भावः॥ ८४॥

(ब) विभीषिका भयप्रदर्शनम्।

(भ) यदित्यव्ययं येन भयप्रदर्शनेनेत्यर्थः। दैवात् भाग्यात् अस्माकं भाग्यवशेनेति भावः। समायान्ति समागच्छन्ति।

विषं भवतु मा वास्तु फटाटोपो भयङ्करः॥ ८५॥

अथ अन्ये प्रोचुः। यदि एवं ततः तेषां महद्विभीषिकास्थानम् अस्ति येन न आगमिष्यन्ति। सा च चतुरदूतायत्ता (म) विभीषिका। यतो विजयदत्तो नाम राजा अस्मत्स्वामी शशकः चन्द्रमण्डले निवसति तत् प्रेष्यतां कश्चित् मिथ्यादूतो यूथाधिपसकाशं यत् चन्द्रः त्वाम् अत्र ह्रदे आगच्छन्तं निषेधयति यतोऽस्मत् (य) परिग्रहोऽस्य समन्ताद्वसति। एवम् अभिहिते अद्धेयवचनात् (र) कदापि निवर्त्तते। अथ अन्ये प्रोचुः, यदि एवं तदस्ति लम्बकर्णो नाम शशकः। स च वचनरचनाचतुरो दूतकर्मज्ञः। स तत्र प्रेष्यतामिति। उक्तञ्च,

साकारो निःस्पृहो वाग्मी नानाशास्त्रविचक्षणः।
परचित्तावगन्ता च राज्ञो दूतः स इष्यते॥ ८६॥

अन्यच्च, यो मूर्खं लौल्यसम्पन्नं राजद्वारिकमाचरेत्।
मिथ्यावादं विशेषेण तस्य कार्य्यं न सिद्ध्यति॥८७॥

---

निर्विषेति। सर्पेण निर्विषेणापि विषशून्येनापि महती फटा फणा कर्त्तव्या सर्पविषं भवतु वा, मा अस्तु, भवतु वा, फटाटोपः फणाविस्तारः भयङ्करः। भयदर्शनेनापि कदाचित् शत्रुजयः स्यादिति भावः॥ ८५॥

(म) चतुरेति। चतुरस्य विज्ञस्य दूतस्य आयत्ता अधीना तत्साध्या इत्यर्थः।

(य) अस्मत्परिग्रहः अस्मदाश्रित इत्यर्थः। अस्य ह्रदस्य।

(र) अद्धेयवचनात् विश्वासयोग्यवाक्यात्।

साकार इति। अत्र य इत्यध्याहार्य्यं तत् शब्देन परामर्शात्। यः साकारः शोभनावयवसम्पन्नः, निःस्पृहः अलुब्धः, वाग्मी वाक्पटुः, नानाशास्त्रेषु विचक्षणः अभिज्ञः, परचित्तावगन्ता परचित्तावबोधक्षमश्च, स राज्ञः दूत इष्यते॥ ८६॥

य इति। यः मूर्खं निर्बोधं, लौल्यसम्पन्नं लुब्धं, विशेषेण मिथ्यावादम् अलीकवादरतं जनं राजद्वारिकं दूतमित्यर्थः आचरेत् कुर्य्यात् तस्य कार्य्यं न सिद्ध्यति॥ ८७॥

तदन्विष्यतां यदि अस्माद् व्यसनात् आत्मनां (ल) सुनिर्मुक्तिः। अथ अन्ये प्रोचुः, अहो! युक्तमेतत्। न अन्यः कश्चिदुपायोऽस्माकं जीवितस्य, तथा एव क्रियताम्। अथ लम्बकर्णो गजयूथाधिपसमीपे निरूपितो (व) गतश्च। तथानुष्ठिते लम्बकर्णोऽपि गजमार्गम् आसाद्य अगम्यं स्थलम् आरुह्य तं गजम् उवाच। भो भो दुष्ट गज! किमिवं लीलया निःशङ्कतया अत्र चन्द्रह्रदे आगच्छसि। तत्र आगन्तव्यं निवर्त्यतामिति। तदाकर्ण्य विस्मितमना गज आह, भोः! कस्त्वम्? स आह, अहं लम्बकर्णो नाम शशकः चन्द्रमण्डले वसामि। साम्प्रतं भगवता चन्द्रमसा तव पार्श्वे प्रहितो दूतो जानाति एव भवान्, यथार्थवादिनो दूतस्य न दोषः करणीयः दूतमुखाः हि राजानः सर्वं एव, उक्तञ्च,

उद्यतेष्वपि शस्त्रेषु बन्धुवर्गबधेष्वपि।
परुषाण्यपि जल्पन्तो बध्या दूता न भूभुजा॥ ८८॥

तत् श्रुत्वा स आह, भोः शशक! तत्कथय भगवतः चन्द्रमसः सन्देशं, येन सत्वरं क्रियते। स आह, भवता अतीतदिवसे यूथेन सह आगच्छता प्रभूताः शशका निपातिताः। तत् किं न वेत्ति भवान्, यत् मम परिग्रहोऽयम्? (श)

---

(ल) व्यसनात् विपदः। आत्मनां स्वेषां शशकानामिति यावत् सुनिर्मुक्तिः सुखेन परित्राणम्।

(व) निरूपितः गमनार्थं सर्वैर्निर्द्धारित इत्यर्थः।

उद्यतेष्विति। शस्त्रेषु उद्यतेषु उत्तोलितेषु, बन्धुवर्गाणां बधेषु अपि सत्सु दूताः शत्रुप्रेरिता इति भावः। परुषाणि निष्ठुराणि जल्पन्तः कथयन्तोऽपि भूभुजा राज्ञा न बध्याः न हन्तव्याः॥ ८८॥

(श) परिग्रहः आश्रितः अयं शशकसमूह इत्यर्थः।

तद्यदि जीवितेन ते प्रयोजनं तदा केनापि प्रयोजनेन अत्र ह्रदे न आगन्तव्यमिति सन्देशः। गज आह, अथ क्व वर्त्तते भगवान् स्वामी चन्द्रः? स आह, अत्र ह्रदे साम्प्रतं शशकानां भवद्यूथमथितानां हतशेषाणां समाश्वासनाय समायातः तिष्ठति। अहं पुनः तवान्तिकं प्रेषितः। गज आह, यदि एवं तद्दर्शय मे तं स्वामिनं येन प्रणम्य अन्यत्र गच्छामि। शशक आह, भो! आगच्छ मया सह एकाकी येन दर्शयामि। तथानुष्ठिते शशको निशासमये तं गजं ह्रदतीरे नीत्वा जलमध्ये स्थितं चन्द्रबिम्बं अदर्शयत्। आह च, भो! एष नः स्वामी जलमध्ये समाधिस्थः तिष्ठति तत् निभृतं (ष) प्रणम्य सत्वरं व्रजेति, नोचेत् समाधिभङ्गात् भूयोऽपि प्रभूतं कोपं करिष्यति। अथ गजोऽपि त्रस्तमनाः तं प्रणम्य पुनर्गमनाय प्रस्थितः। शशकाश्च तद्दिनात् आरभ्य सपरिवाराः सुखेन स्वेषु स्थानेषु तिष्ठन्ति स्म। अतोऽहं ब्रवीमि।

व्यपदेशेन महतां सिद्धिः सञ्जायते परा।
शशिनो व्यपदेशेन वसन्ति शशकाः सुखम्॥ ८९॥

अपिच, क्षुद्रमलसं कापुरुषं व्यसनिनमकृतज्ञम्।
पृष्ठप्रलपनशील स्वामित्वेन नाभियोजयेज्जीवितकामः॥९०

---

(ष) समाधिस्थः ध्यानस्थः। निभृतं निःशब्दम्।

क्षुद्रमिति। जीवितकामः जीवनार्थी जनः क्षुद्रं नीचम्, अलसं कर्मांचमं कापुरुषम् असारं, व्यसनिनं मृगयाद्यासक्तम्, अकृतज्ञम् उपकाराविदं तथा पृष्ठे पश्चात् असमक्षमित्यर्थः प्रलपनशीलं परोक्षे कुत्सान्वितं पुरुषं स्वामित्वेन न अभियोजयेत् न स्वामिनं कुर्य्यादित्यर्थः॥ ९०॥

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ ९१ ॥

ते प्रोचुः, कथमेतत् ? स आह,

## कथा ७ ।

कस्मिंश्चिद्वृक्षे पुरा अहं अवसम् । तत्र अधस्तात् कोटरे कपिञ्जलो नाम चटकः प्रतिवसति स्म । अथ सदैव अस्तमनवेलायाम् आगतयोः द्वयोः (स) अनेकसुभाषितगोष्ठ्या देवर्षिब्रह्मर्षिराजर्षिपुराणचरितकीर्त्तनेन च पर्य्यटनदृष्टानेककौतूहलप्रकथनेन च परमसुखमनुभवतोः कालो व्रजति । अथ कदाचित् कपिञ्जलः प्राणयात्रार्थमन्यैः चटकैः सह अन्यं पक्वशालिप्रायं देशं गतः । ततो यावत् निशासमयेऽपि न आयातः तावदहं सोद्वेगमनाः तद्वियोगदुःखितः चिन्तितवान् । अहो ! किमद्य कपिञ्जलो न आयातः । किं केनापि पाशेन बद्धः ? उताहोस्वित् केनापि व्यापादितः ? सर्वथा यदि कुशलो भवति तन्मां विना न तिष्ठति । एवं मे चिन्तयतो बहूनि अहानि व्यतिक्रान्तानि । ततश्च तत्र कोटरे कदाचित् शीघ्रगो नाम शशकोऽस्तमनवेलायाम् आगत्य प्रविष्टः । मया अपि कपिञ्जलनिराशत्वेन न निवारितः । अथ अन्यस्मिन् अहनि कपिञ्जलः शालिभक्षणात् अतीवपीवरतनुः स्वम् आश्रयं स्मृत्वा भूयोऽपि तत्रैव समायातः । अथवा साधु इदमुच्यते ।

---

क्षुद्रमिति । पुरा पूर्वस्मिन् काले न्यायान्वेषणतत्परौ न्यायपरायणौ इत्यर्थः उभौ अपि शशकपिञ्जलौ क्षुद्रम् अर्थपतिं प्रभुं प्राप्य क्षयं निधनं प्राप्तौ गतौ ॥ ९१ ॥

(स) द्वयोः आवयोरिति शेषः ।

न तादृग् जायते सौख्यमपि स्वर्गे शरीरिणाम्।
दारिद्र्येऽपि हि यादृक् स्यात् स्वदेशे स्वपुरे गृहे ॥९२॥

अथ असौ कोटरान्तर्गतं शशकं दृष्ट्वा साक्षेपमाह, (छ) भो शशक! न त्वया सुन्दरं कृतं यत् मम आवसथस्थाने (च) प्रविष्टोऽसि, तत् शीघ्रं निष्क्रम्यताम्। शशक आह, न तव इदं गृहं किन्तु मम एव। तत् किं मिथ्या परुषाणि जल्पसि। उक्तञ्च,

वापीकूपतड़ागानां देवालयकुजन्मनाम्।
उत्सर्गात्परतः स्वाम्यमपि कर्त्तुं न शक्यते ॥ ९३ ॥

तथाच, प्रत्यक्षं यस्य यद्भुक्तं क्षेत्राद्यं दश वत्सरान्।
तत्र भुक्तिः प्रमाणं स्यान्न साक्षी नाक्षराणि वा ॥९४॥
मानुषाणामयं न्यायो मुनिभिः परिकीर्त्तितः।
तिरश्चाञ्च विहङ्गानां यावदेव समाश्रयः ॥ ९५ ॥

---

नेति। स्वदेशे, स्वपुरे, गृहे स्वे इति शेषः दारिद्र्येऽपि दरिद्रावस्थायामपि यादृक् सौख्यं स्यात्, स्वर्गेऽपि शरीरिणां तादृक् सौख्यं न जायते ॥ ९२ ॥

(छ) साक्षेपं सतिरस्कारम्।

(च) आवसथस्थाने आवसथे वासस्थाने इत्यर्थः।

वापीति। वापी दीर्घिका, कूपः प्रसिद्धः, तड़ागः सरोवरः तेषां तथा देवालयानां कुजन्मनां महीरुहाणाञ्च उत्सर्गात् दानात् परित्यागादिति भावः परतोऽपि स्वाम्यं प्रभुत्वं कर्त्तुं न शक्यते कैरपीति शेषः ॥ ९३ ॥

प्रत्यक्षमिति। दश वत्सरान् व्याप्य यस्य प्रत्यक्षं यत् क्षेत्राद्यं भूम्यादिकं वस्तु भुक्तम् अपरेणेति शेषः तत्र भुक्तिः भोगः दशवार्षिकीति भावः प्रमाणं प्रबलं स्वत्वकारणमित्यर्थः न साक्षी, अक्षराणि लेख्यमित्यर्थः वा न प्रमाणमिति शेषः। साक्षिलेख्यादिभ्योऽपि दशवर्षीया भुक्तिरधिकं स्वत्वे प्रमाणमिति भावः ॥ ९४ ॥

मानुषाणामिति। मुनिभिः मानुषाणाम् अयं न्यायः पूर्वोक्ता नीतिरित्यर्थः परीकीर्त्तितः। तिरश्चां पशूनां विहङ्गानाञ्च यावदेव समाश्रयः अवस्थितिः तावद्देव स्वामित्वमिति भावः ॥ ९५ ॥

तन्मम एतद्गृहं न तव इति। कपिञ्जल आह, भो! यदि स्मृतिं प्रमाणीकरोषि तदागच्छ मया सह येन स्मृतिपाठकं (क) पृष्ट्वा स यस्य ददाति स गृह्णातु। तथानुष्ठिते मया अपि चिन्तितम्। किमत्र भविष्यति। मया द्रष्टव्योऽयं न्यायः (ख)। ततः कौतुकात् अहमपि तावनु (ग) प्रस्थितः। अत्रान्तरे तीक्ष्णदंष्ट्रो नाम आरण्यमार्जारः तयोर्विवादं श्रुत्वा मार्गासन्नं नदीतटम् आसाद्य कृतकुशोपग्रहो (घ) निमीलितनयन ऊर्ध्वबाहुः अर्द्धपादस्पृष्टभूमिः श्रीसूर्य्याभिमुख इमां धर्मोपदेशनाम् (ङ) अकरोत् अहो! असारोऽयं संसारः (च)। क्षणभङ्गुराः प्राणाः। स्वप्नसदृशः प्रियसमागमः। इन्द्रजालवत् कुटुम्बपरिग्रहोऽयम्। तत् धर्मं मुक्त्वा नान्या गतिः अस्ति (छ)। उक्तञ्च,

अनित्यानि शरीराणि विभवो नैव शाश्वतः।
नित्यं सन्निहितो मृत्युः कर्त्तव्यो धर्मसंग्रहः॥ ८६॥

यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।

---

(क) स्मृतिं धर्मशास्त्रं स्मृतिस्तु धर्मसंहितेत्यमरः।

(ख) न्यायः विचारः।

(ग) तावनु तयोः पश्चात्।

(घ) कृतेति। कृतः कुशस्य उपग्रहः ग्रहणं येन तथोक्तः दर्भपाणिरित्यर्थः अतिपवित्रभावज्ञापनार्थमिति भावः।

(ङ) धर्मोपदेशनां धर्मशास्त्रालापमित्यर्थः।

(च) संसारः पुत्रकलत्रादिपरिवारमध्यस्थितिरित्यर्थः।

(छ) मुक्त्वा विहाय। गतिः उपायः।

अनित्यानीति। शरीराणि अनित्यानि नश्वराणि, विभवः सम्पद् नैव शाश्वतः न हि नित्यः। मृत्युः यमः नित्यं सततं सन्निहितः आसन्नः तस्मात् धर्मसंग्रहः धर्मस्य उपार्जनं कर्त्तव्यः॥ ८६॥

यस्येति। यस्य दिनानि धर्मविहीनानि धर्मशून्यानि सन्ति आयान्ति आग-

स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९७ ॥

आच्छादयति कौपीनं यो दंशमशकापहम् ।
शुनः पुच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम् ॥ ९८ ॥

अन्यच्च, पुलाका इव धान्येषु पूतिका इव पक्षिषु ।
मशका इव मर्त्त्येषु येषां धर्मो न कारणम् ॥९९॥

श्रेयः पुष्पं फलं वृक्षाद्दध्नः श्रेयो घृतं स्मृतम् ।
श्रेयस्तैलञ्च पिण्याकात् श्रेयान् धर्मस्तु मानुषात् ॥१००॥

सृष्टा मूत्रपुरीषार्थमाहाराय च केवलम् ।
धर्महीनाः परार्थाय पुरुषाः पशवो यथा ॥ १०१ ॥

स्थैर्य्यं सर्वेषु कृत्येषु शंसन्ति नयपण्डिताः ।
बह्वन्तरायुक्तस्य धर्मस्य त्वरिता गतिः ॥ १०२ ॥

---

च्छन्ति यान्ति गच्छन्ति च, लोहकारस्य कर्मकारस्य भस्त्रा अग्न्युद्दीपनयन्त्रविशेष इव श्वसन् श्वासं त्यजन्नपि न जीवति न प्राणिति ॥ ९७ ॥

नेति । यो जनः दंशमशकापहं कौपीनम् आच्छादयति, तत् धर्मवर्जितं पाण्डित्यं शुनः पुच्छमिव कुक्कुरलाङ्गूलमिव व्यर्थं विफलम् ॥ ९८ ॥

पुलाका इति । येषां मनुष्याणां धर्मः न कारणं न प्रमाणमित्यर्थः ये धर्मं प्रमाणीकृत्य न व्यवहरन्तीति भावः ते धान्येषु मध्ये पुलाका इव तुच्छधान्यविशेषा इव, पक्षिषु पूतिका इव, तदाख्यक्षुद्रपक्षिविशेषा इव मर्त्त्येषु मरणधर्मिषु मशका इव अतिहीना इति भावः ॥ ९९ ॥

श्रेय इति । वृक्षात् पुष्पं फलं श्रेयः श्रेष्ठं, दध्नः घृतं श्रेयः स्मृतम् । पिण्याकात् तिलचूर्णात् तैलं श्रेयः, मानुषात् धर्मस्तु धर्म एव श्रेयान् ॥ १०० ॥

सृष्टा इति । केवलं मूत्रपुरीषार्थं प्रस्रावमलार्थम् आहाराय च आहारार्थञ्च सृष्टाः निर्मिताः विधात्रेति शेषः पशवो यथा धर्महीनाः पुरुषाः परार्थाय परेषां प्रयोजनाय भवन्तीति शेषः ॥ १०१ ॥

स्थैर्य्यमिति । नयपण्डिताः नीतिज्ञा जनाः सर्वेषु कृत्येषु कार्य्येषु स्थैर्य्यं स्थिरतां विविच्य करणमिति भावः शंसन्ति कथयन्ति उपदिशन्तीत्यर्थः । किन्तु

सङ्क्षेपात् कथ्यते धर्मो जनाः ! किं विस्तरेण वः।
परोपकारः पुण्याय पापाय परपीड़नम् ॥ १०३ ॥
श्रूयतां धर्मसर्वस्वं श्रुत्वा चैवावधार्य्यताम्।
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥ १०४ ॥

अथ तस्य तां धर्मोपदेशनां श्रुत्वा शशक आह, भो भो कपिञ्जल ! एष नदीतीरे तपस्वी धर्मवादी तिष्ठति। तदेनं पृच्छावः। कपिञ्जल आह, ननु स्वभावतोऽस्माकं शत्रुभूतोऽयमस्ति। तद् दूरे स्थितौ पृच्छावः। कदाचित् अस्य व्रतवैकल्यं (ञ) सम्पद्यते। ततो दूरस्थितौ ऊचतुः। भो भोः तपस्विन् ! धर्मोपदेशक ! आवयोर्विवादो वर्त्तते। तद् धर्मशास्त्रद्वारेण अस्माकं निर्णयं कुरु यो हीनवादी स ते भक्ष्य इति। स आह, भद्रौ ! मा मैवं वदतम्। निवृत्तोऽहं नरकपातकमार्गात् (झ) अहिंसैव धर्ममार्गः। उक्तञ्च,

अहिंसापूर्वको धर्मो यस्मात् सद्भिरुदाहृतः।

---

वह्वन्तराययुक्तस्य बहुविघ्नसमन्वितस्य धर्मस्य गतिः त्वरिता सवेगा, कालविलम्बे विघ्नसम्भवात्, धर्मः, विना विचारमेव अनुष्ठातव्य इति भावः ॥ १०२ ॥

संक्षेपादिति। हे जनाः ! संक्षेपात् वः युष्मभ्यं धर्मः कथ्यते, विस्तरेण किम् ? बाहुल्येन न प्रयोजनमित्यर्थः। परोपकारः पुण्याय, परपीड़नं पापाय भवतीति शेषः ॥ १०३ ॥

श्रूयतामिति। धर्मस्य सर्वस्वं सर्वं धर्मं श्रूयतां श्रुत्वा च अवधार्य्यताम्। आत्मनः प्रतिकूलानि स्वस्य क्लेशकराणीत्यर्थः परेषां न समाचरेत् न कुर्य्यात् येन कर्मणा परकृतेन आत्मा क्लिश्यते तत् कर्म परेषां प्रति न प्रयुञ्ज्यात्। आत्मवत् सर्वभूतानि द्रष्टव्यानीति भावः ॥ १०४ ॥

(ञ) व्रतवैकल्यं व्रतभङ्गः।

(झ) नरकेति। नरके पातयतीति नरकपातकः स एव मार्गः पन्थाः तस्मात्।

अहिंसेति। यस्मात् सद्भिः साधुभिः अहिंसापूर्वकः अहिंसा पूर्वः प्रधानं यस्य

यूकमत्कुणदंशादींस्तस्मात्तानपि रक्षयेत्॥ १०५॥
हिंसकान्यपि भूतानि यो हिंसति स निर्घृणः।
स याति नरकं घोरं किं पुनर्यः शुभानि च॥ १०६॥

एतेऽपि ये याज्ञिका यज्ञकर्मणि पशून् व्यापादयन्ति ते मूर्खाः परमार्थं (ञ) श्रुतेः न जानन्ति। तत्र किल एतदुक्तम् अजैर्यष्टव्यम्। अजा व्रीहयः तावत् सप्तवार्षिकाः कथ्यन्ते न पुनः पशुविशेषाः। उक्तञ्च,

वृक्षांश्छित्वा पशून् हत्वा कृत्वा रुधिरकर्दमम्।
यद्येव गम्यते स्वर्गे—नरकं केन गम्यते?॥ १०७॥

तन्न अहं भक्षयिष्यामि। परं जयपराजयनिर्णयं करिष्यामि। किन्तु अहं वृद्धो दूरात् युवयोः भाषान्तरं (ट) सम्यक् न शृणोमि। एवं ज्ञात्वा मम समीपवर्त्तिनौ भूत्वा मम अग्रे न्यायं वदतम्। येन विज्ञाय विवादपरमार्थं वचो वदतो मे परलोकबाधो (ठ) न भवति। उक्तञ्च यतः,

---

तथाविधः धर्मः उदाहृतः उक्तः अहिंसैव प्रधानधर्म इति भावः। तस्मात् तान् क्षुद्रानिति भावः यूकमत्कुणदंशादीन् अपि रक्षयेत् न हिंस्यादिति भावः॥१०५॥

हिंसकानीति। यः हिंसकानि अपि भूतानि प्राणिनः हिनस्ति, स निर्घृणः निर्दयः। अपिशब्दोऽवाध्याहार्यः। घोरं नरकं याति, यः शुभानि अहिंसकानि इति भावः हिनस्तीति शेषः स किं पुनः वक्तव्य इति शेषः तेन अतिघोरे नरके गन्तव्यमिति भावः॥ १०६॥

(ञ) परमार्थं याथार्थ्यम्।

वृक्षानिति। वृक्षान् छित्त्वा यूपाद्यर्थमिति भावः, पशून् हत्वा रुधिरेण तेषां शोणितेन कर्दमं कृत्वा यदि एव यद्यपि स्वर्गं गम्यते लोकैरिति शेषः तदा केन नरकं गम्यते? न केनापीत्यर्थः पशुवधादिकं विधाय यत् यज्ञमनुतिष्ठन्ति लोकाः तत् केवलं नरकायेति भावः॥ १०७॥

(ट) भाषान्तरं वाक्यभेदम्।

(ठ) परलोकबाधः स्वर्गप्रतिरोधः।

मानाद्वा यदि वा लोभात् क्रोधाद्वा यदि वा भयात् ।
यो न्यायमन्यथा ब्रूते स याति नरकं नरः ॥ १०८ ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतं कन्यानृते हन्ति सहस्रं पुरुषानृते ॥ १०९ ॥
उपविष्टः सभामध्ये यो न वक्ति स्फुटं वचः ।
तस्माद्दूरेण स त्याज्यो न्यायो वा कीर्त्तयेदृतम् ॥११०॥

तस्मात् विश्रब्धौ (ड) मम कर्णोपान्तिके स्फुटं निवेदयतम् । किं बहुना, तेन क्षुद्रेण तथा तौ (ढ) तूर्णं विश्वासितौ, यथा तस्य उत्सङ्गवर्त्तिनौ सञ्जातौ । ततश्च तेनापि समकालम् एव एकः पादान्तेन आक्रान्तः, अन्यो दंष्ट्राक्रकचेन (ण) च । ततो गतप्राणौ भक्षितौ इति । अतोऽहं ब्रवीमि,

क्षुद्रमर्थपतिं प्राप्य न्यायान्वेषणतत्परौ ।
उभावपि क्षयं प्राप्तौ पुरा शशकपिञ्जलौ ॥ १११ ॥

भवन्तोऽपि एनं दिवान्धं क्षुद्रम् अर्थपतिम् आसाद्य रात्रन्धाः सन्तः शशकपिञ्जलमार्गेण यास्यन्ति । एवं ज्ञात्वा

---

मानादिति । यः मानात् सम्मानलाभात् वा, यदि वा लोभात् धनादीनाम् इति शेषः, क्रोधात् विद्वेषात् वा अथवा भयात् न्यायं विचारम् अन्यथा ब्रूते विरुद्धं वदति स नरः नरकं याति ॥ १०८ ॥

पञ्चेति । पश्वनृते पशुविषयकमिथ्याकथने पञ्च पुरुषानिति शेषः हन्ति नरके पातयतीति भावः, गवानृते गोविषयकमिथ्याकथने दश पुरुषान् हन्ति, कन्यानृते कन्याविषयकमिथ्याकथने शतं हन्ति, पुरुषानृते पुरुषविषकमिथ्याकथने सहस्रं पुरुषान् हन्ति ॥ १०९ ॥

उपविष्ट इति । यः सभामध्ये धर्माधिकरणसंसदि उपविष्टः सन् स्फुटं विशदं यथा तथा वचः न वक्ति, तस्मात् दूरेण स न्यायः त्याज्यः, वा ऋतं सत्यं कीर्त्तयेत् कथयेत् ॥ ११० ॥

(ड) विश्रब्धौ निःशङ्कौ ।

(ढ) क्षुद्रेण नीचेन पापाशयेनेति यावत् । तौ शशकपिञ्जलौ ।

(ण) दंष्ट्राक्रकचेन दन्तरूपेण अस्त्रविशेषेण ।

यदुचितं तद्विधेयम् अतःपरम्, अथ तस्य तत् वचनम् आकर्ण्य साधु अनेन अभिहितम् इति उक्त्वा भूयोऽपि पार्थिवार्थं समेत्य मन्त्रयिष्यामहे इति ब्रुवाणाः सर्वे पक्षिणो यथाभिमतं जग्मुः। केवलम् अवशिष्टो भद्रासनोपविष्टः (त) अभिषेकाभिमुखो दिवान्धः कृकालिकया सह आस्ते। आह च कः कोऽत्र भो भोः! किमद्यापि न क्रियते मम अभिषेकः? इति श्रुत्वा कृकालिकया अभिहितम्। भद्र! तव अभिषेके कृतोऽयं विघ्नो वायसेन। गताश्च सर्वेऽपि विहगा यथेप्सितासु दिक्षु केवलमेकोऽयं वायसोऽवशिष्टः केनापि हेतुना तिष्ठति तत् त्वरितमुत्तिष्ठ येन त्वां स्वाश्रयं प्रापयामि। तत् श्रुत्वा सविषादम् उलूको वायसम् आह, भो भो दुष्टात्मन्! किं मया ते अपकृतम्? यत् राज्याभिषेको मे विघ्नितः। तत् अद्य प्रभृति सान्वयम् (थ) आवयोर्वैरं सञ्जातम्। उक्तञ्च,

रोहति सायकैर्विद्धं छिन्नं रोहति चासिना।
वचो दुरुक्तं बीभत्सं न प्ररोहति वाक्क्षतम्॥११२॥

इति एवमभिधाय कृकालिकया सह स्वाश्रयं गतः। अथ भयव्याकुलो वायसो व्यचिन्तयत्। अहो! अकारणं वैरम् आसादितं मया। किमिदं व्याहृतम्। उक्तञ्च,

अदेशकालज्ञमनायतिक्षमं
यदप्रियं लाघवकारि चात्मनः।

---

(त) भद्रासनोपविष्टः शुभे आसने आसीनः।

(थ) सान्वयं सवंशं कुलक्रमायातमित्यर्थः।

रोहतीति। सायकैः शरैः विद्धं वृक्षादि इति शेषः रोहति पुनरुत्पद्यते, असिना तलवारेण छिन्नमपि रोहति। वाक्क्षतं वाचा विद्धं न प्ररोहति शत्रु-प्रयुक्तं दुर्वाक्यं न कदापि विस्मर्यते इति भावः। तस्मात् दुरुक्तं वचः बीभत्सम् अतिघृणितमित्यर्थः॥११२॥

योऽत्राब्रवीत् कारणवर्जितं वचो
न तद्वचः स्याद् विषमेव तद्वचः ॥ ११३ ॥

बलोपपन्नोऽपि हि बुद्धिमान्नरः
परं नयेन्न स्वयमेव वैरिताम् ।
भिषक् ममास्तीति विचिन्त्य भक्षयेत्
अकारणात् को हि विचक्षणो विषम् ॥११४॥

परपरिवादः परिषदि न कथञ्चित् पण्डितेन वक्तव्यः ।
सत्यमपि तन्न वाच्यं यदुक्तमसुखावहं भवति ॥११५॥

सुहृद्भिराप्तैरसकृद्विचारितं
स्वयञ्च बुद्ध्या प्रविचारिताश्रयम् ।
करोति कार्य्यं खलु यः स बुद्धिमान्
स एव लक्ष्म्याः यशसाञ्च भाजनम् ॥११६॥

एवं विचिन्त्य काकोऽपि प्रयातः । तदा प्रभृति अस्माभिः

---

अदेशेति । अत्र संसारे यः अदेशकालज्ञं देशकालज्ञानवर्जितम् अनायति-क्षमं परिणामकटु इत्यर्थः अप्रियम् अन्येषाम् अप्रीतिकरम् आत्मनः स्वस्य लाघव-कारि लघुत्वप्रकाशकं कारणवर्जितम् अकारणञ्च वचः अब्रवीत् तस्य वचः वचः न स्यात्, विषमेव स्यादित्यन्वयः । वंशस्थविलं वृत्तम् ॥ ११३ ॥

बलोपपन्न इति । बुद्धिमान् नरः बलोपपन्नोऽपि सबलोऽपि स्वयं परम् अन्यं वैरितां शत्रुतां न नयेत् प्रापयेत् । विचक्षणः को हि जनः मम भिषक् चिकित्सकः अस्ति इति विचिन्त्य अकारणात् विषं भक्षयेत् ? न कोऽपीत्यर्थः । वंशस्थविलं वृत्तम् ॥ ११४ ॥

परेति । परिषदि सभायां पण्डितेन विज्ञेन जनेन परपरिवादः परेषां निन्दा कथञ्चित् न वक्तव्यः । यत् उक्तं वचनम् असुखावहम् अप्रीतिकरं लोक-स्येति शेषः भवति, तत् सत्यमपि न वाच्यम् । आर्य्यावृत्तम् ॥ ११५ ॥

सुहृद्भिरिति । यः आप्तैः विश्वस्तैः सुहृद्भिः असकृत् पुनः पुनः विचारितं विशे-षेण कर्त्तव्यतया निर्द्धारितं, स्वयञ्च बुद्ध्या प्रविचारिताश्रयं प्रकृष्टविचारसङ्गतम् इत्यर्थः कार्य्यं करोति स खलु स एव बुद्धिमान्, स एव लक्ष्म्याः सम्पदः यश-साञ्च भाजनं पात्रं भवतीति शेषः ॥ ११६ ॥

सह कौशिकानाम् अन्वयगतं (द) वैरमस्ति। मेघवर्ण आह, तात! एवं गते अस्माभिः किं कृत्यम् अस्ति। स आह, वत्स! एवं गतेऽपि षाड़्गुण्यात् अपरः स्थूलोऽभिप्रायोऽस्ति(ध) तम् अङ्गीकृत्य स्वयमेव अहं तद्विजयाय यास्यामि रिपून् वञ्चयित्वा वधिष्यामि। उक्तञ्च यतः,

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव॥ ११७॥

मेघवर्ण आह, कथमेतत्? सोऽब्रवीत्।

## कथा ३।

कस्मिंश्चित् अधिष्ठाने मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्रपरिग्रहः (न) प्रतिवसति स्म। स कदाचित् माघमासे सौम्यानिले (प) प्रवाति, मेघाच्छादिते गगने मन्दं मन्दं प्रवर्षति पर्जन्ये (फ) पशुप्रार्थनाय किञ्चिद्ग्रामान्तरं गत्वा कश्चिद् यजमानो याचितः। भो यजमान! आगामिन्याम् अमावस्यायाम् अहं यक्ष्यामि यज्ञम्। तत् देहि मे पशुम् एकम्। अथ तेन तस्य शास्त्रोक्तः पीवरतनुः (ब) पशुः प्रदत्तः। सोऽपि

---

(द) कौशिकानां पेचकानाम्। अन्वयगतं पैत्रिकम्।

(ध) षाड्गुण्यात् सन्ध्यादिषट्कात् इत्यर्थः अपरः अन्यः। स्थूलः महान्। अभिप्रायः कौशलमिति यावत्। अङ्गीकृत्य अवलम्ब्य।

बह्विति। बहुबुद्धिसमायुक्ताः विविधमतिसम्पन्नाः सुविज्ञानाः सुविचक्षणाः जनाः धूर्त्ताः ब्राह्मणं छागलादिव बलोत्कटान् प्रबलान् शत्रूनिति शेषः वञ्चयितुं स्वाधिकारादिति शेषः शक्ताः समर्थाः भवन्तीति शेषः॥ ११७॥

(न) कृतेति। कृतः अग्निहोत्रपरिग्रहो येन तथोक्तः अग्निहोत्री इत्यर्थः।

(प) सौम्यानिले मन्दे मरुति।

(फ) पर्जन्ये मेघे।

(ब) पीवरतनुः स्थूलकायः।

तं समर्थम् इतश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्त्ताः क्षुत्क्षामकण्ठाः सम्मुखा बभूवुः। तैश्च तादृशं पीवरतनुं स्कन्धे आरूढ़म् अवलोक्य मिथोऽभिहितम्, अहो! अस्य पशोः भक्षणात् अद्यतनीयो हिमपातो (भ) व्यर्थतां नीयते। तत् एनं वञ्चयित्वा पशुम् आदाय शीतत्राणं (म) कुर्मः। अथ तेषाम् एकतमो वेशपरिवर्त्तनं विधाय सम्मुखो भूत्वा अपमार्गेण (य) तम् आहिताग्निम् ऊचे। भो! भो! बालाग्निहोत्रिन्! (र) किम् एवं जनविरुद्धं हास्यकार्य्यम् अनुष्ठीयते। यदेष सारमेयो(ल)ऽपवित्रः स्कन्धाधिरूढ़ो नीयते। उक्तञ्च यतः,

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्त्तिताः।
रासभोष्ट्रौ विशेषेण तस्मात् तान्नैव संस्पृशेत् ॥११८॥

ततश्च तेन कोपाभिभूतेन अभिहितम्। अहो! किमन्धो भवान्? यत् पशुं सारमेयं प्रतिपादयसि। सोऽब्रवीत् ब्रह्मन्! कोपः त्वया न कार्य्यः। यथेच्छया गम्यतामिति

---

(भ) अद्यतनीयः अद्यभवः। हिमपातः शीतागमः व्यर्थतां विफलतां मांसभक्षणे शरीरस्य उष्मा जायते तेन शीतनिवृत्तिरिति भावः।

(म) शीतत्राणं शीतात् त्राणं रक्षणम् आत्मन इति शेषः।

(य) अपमार्गेण कुमार्गेण आगत्य इति शेषः।

(र) आहिताग्निं कृताग्निहोत्रम्। बालाग्निहोत्रिन्! बालः शिशुः निर्बोध इत्यर्थः स चासौ अग्निहोत्री चेति तत्सम्बुद्धौ।

(ल) सारमेयः सरमा कुक्कुरी तस्या अपत्यं पुमान् सारमेयः सरमाशब्दादपत्यार्थे ण्य यप्रत्ययः।

श्वानेति। श्वा कुक्कुरः स एव श्वानः स्वार्थे षणप्रत्ययः ततः श्वानश्च कुक्कुटश्च चाण्डालश्च ते, विशेषेण रासभोष्ट्रौ समस्पर्शाः प्रकीर्त्तिताः कथिताः एतेषां स्पर्शस्य अपवित्रत्वेन तुल्यपातकजनकत्वमिति भावः। तस्मात् तान् श्वादीन् नैव संस्पृशेत् ॥११८॥

अथ यावत् किञ्चित् अध्वनो(व)ऽन्तरं गच्छति, तावत् द्वितीयो धूर्त्तः सम्मुखे समुपेत्य तमुवाच। भो ब्रह्मन्! कष्टं कष्टं यद्यपि वल्लभोऽयं ते मृतवत्सः, (श) तथापि स्कन्धम् आरोपयितुम् अयुक्तम्। उक्तञ्च यतः,

तिर्य्यञ्चं मानुषं वापि यो मृतं संस्पृशेत् कुधीः।
पञ्चगव्येन शुद्धिः स्यात् तस्य चान्द्रायणेन वा॥ ११९॥

अथ असौ सकोपमिदम् आह, भोः! किमन्धो भवान्? यत् पशुं मृतवत्सं वदसि। सोऽब्रवीत्। भगवन्! मा कोपं कुरु। अज्ञानात् मया अभिहितम्। तत् त्वमात्मरुचिं समाचरेति। अथ यावत् स्तोकं (ष) वनान्तरं गच्छति तावत् तृतीयोऽन्यवेशधारी धूर्त्तः सम्मुखः समुपेत्य तमुवाच। भो! अयुक्तम् एतत्। यत् त्वं रासभं (स) स्कन्धाधिरूढं नयसि। तत् त्यज्यताम् एष। उक्तञ्च,

यः स्पृशेद्रासभं मर्त्त्यो ज्ञानादज्ञानतोऽपि वा।
सचेलं स्नानमुद्दिष्टं तस्य पापप्रशान्तये॥ १२०॥

---

(व) अध्वनः पथः।

(श) वल्लभः प्रियः। मृतवत्सः मृतो गोशिशुः।

तिर्य्यञ्चमिति। यः कुधीः दुर्बुद्धिः नरः मृतं तिर्य्यञ्चं पशुं मानुषं वा संस्पृशेत् तस्य पञ्चगव्येन पञ्चानां गव्यानां समाहारः पञ्चगव्यं तेन दधिदुग्धघृतगोमयगोमूत्रेणेत्यर्थः भक्षितेनेति शेषः चान्द्रायणेन चन्द्रस्य अयनमिव अयनं गतिः यस्य तथाभूतेन वा चन्द्रे चन्द्रलोके अयनं गतिः वास इत्यर्थः येन तादृशेन माससाध्यव्रतविशेषेण इत्यर्थः कृष्णप्रतिपदम् आरभ्य पौर्णमासीपर्य्यन्तमनुष्ठेयेनेति यावत् एकैकं ह्रासयेत् पिण्डं कृष्णे शुक्ले च वर्द्धयेदिति शास्त्रादिति भावः। तस्य मृतस्पर्शस्य शुद्धिः तज्जनितपापात् मुक्तिरित्यर्थः स्यात्॥ ११९॥

(ष) स्तोकम् अल्पम्।

(स) रासभं गर्द्दभम्।

य इति। यः मर्त्त्यः ज्ञानात् अज्ञानतो वापि रासभं गर्दभं स्पृशेत्, तस्य

तत् त्यज एनं यावत् अन्यः कश्चित् न पश्यति। अथ असौ तं पशुं रासभं मन्यमानो भयात् भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः। ततः ते त्रयो मिलित्वा तं पशुम् आदाय यथेच्छया भक्षितुम् आरब्धाः। अतोऽहं ब्रवीमि।

बहुबुद्धिसमायुक्ताः सुविज्ञाना बलोत्कटान्।
शक्ता वञ्चयितुं धूर्त्ता ब्राह्मणं छागलादिव ॥ १२१ ॥

अथवा साधु इदम् उच्यते,

अभिनवसेवकविनयैः प्राघुणकोक्तैर्विलासिनीरुदितैः।
धूर्त्तजनवचननिकरैरिह कश्चिदवञ्चितो नास्ति ॥१२२॥

किञ्च, दुर्बलैः अपि बहुभिः सह विरोधो न युक्तः।

उक्तञ्च, बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥ १२३ ॥

मेघवर्ण आह, कथमेतत् ? स्थिरजीवी कथयति।

## कथा ४।

अस्ति कस्मिंश्चित् वल्मीके महाकायः कृष्णसर्पोऽतिदर्पो नाम। स कदाचित् विलानुसारमार्गमुत्सृज्य अन्येन लघु-

---

पापप्रशान्तये रासभस्पर्शजनितपातकोपशमायेत्यर्थः सचेलं स्वपरिधेयोत्तरीयवस्त्रसहितं स्नानम् उद्दिष्टं कथितम् ॥ १२० ॥

अभिनवेति। इह अस्मिन् जगति कश्चित् कोऽपि जनः अभिनवस्य नवागतस्य सेवकस्य विनयैः शिष्टव्यवहारैः प्राघुणकोक्तैः आगन्तुकवचनैः, विलासिनीनां नारीणां रुदितैः तथा धूर्त्तजनानां वचननिकरैः वाक्प्रपञ्चैः अवञ्चितः अप्रतारितः नास्ति सर्व एव प्रतारितो भवतीत्यर्थः। आर्य्यावृत्तम् ॥ १२२ ॥

बहव इति। बहवः सङ्घवृत्तय इत्यर्थः न विरोद्धव्याः न विरोधनीयाः, हि यतः महाजनाः महान्तः बहवः समवेता इति भावः, जनाः दुर्जया जेतुमशक्याः। तथाहि पिपीलिकाः स्फुरन्तं विराजमानं स्वतेजसेति भावः अपि नागेन्द्रं भुजगेन्द्रं भक्षयन्ति ॥ १२३ ॥

द्वारेण निष्क्रामितुमारब्धः। निष्क्रामतश्च तस्य महाकायत्वात् दैववशतया लघुविवरत्वाच्च शरीरे व्रणः समुत्पन्नः। अथ व्रणशोणितगन्धानुसारिणीभिः पिपीलिकाभिः सर्वतो व्याप्तो व्याकुलीकृतश्च। कति व्यापादयति कति वा ताड़यति। अथ प्रभूतत्वात् विस्तारितबहुव्रणः चतसर्वाङ्गोऽतिदर्पः पञ्चत्वमुपागतः। अतोऽहं ब्रवीमि।

बहवो न विरोद्धव्या दुर्जया हि महाजनाः।
स्फुरन्तमपि नागेन्द्रं भक्षयन्ति पिपीलिकाः ॥१२४॥

तत् अत्रास्ति किञ्चिद् मे वक्तव्यमेव। तदवधार्य्य यथोक्तम् अनुष्ठीयताम्। मेघवर्ण आह, तत् समादेशय—तवादेशो नान्यथा कर्त्तव्यः। स्थिरजीवी प्राह, वत्स! समाकर्णय तर्हि सामादीनतिक्रम्य यो मया पञ्चम उपायो निरूपितः। तन्मां विपक्षभूतं (ङ) कृत्वा, अतिनिष्ठुरवचनैः निर्भर्त्स्य, यथा विपक्षप्रणिधीनां (च) प्रत्ययो भवति, तथा समाहृतरुधिरैः (क) आलिप्य, अस्यैव न्यग्रोधस्य (ख) अधस्तात् प्रक्षिप्य मां, गम्यतां पर्वतम् ऋष्यमूकं प्रति, तत्र सपरिवारस्तिष्ठ। यावदहं समस्तान् सपत्नान् सुप्रणीतेन विधिना (ग) विश्वास्य अभिमुखान् कृत्वा कृतार्थो ज्ञातदुर्गमध्यः दिवसे तान् अन्धतां प्राप्तान् ज्ञात्वा व्यापादयामि, ज्ञातं मया सम्यक्,

(ङ) विपक्षभूतं शत्रुभूतम्।

(च) विपक्षप्रणिधीनां शत्रुपक्षीयचाराणाम्।

(क) समाहृतरुधिरैः कुतश्चित् आनीतैः रक्तैः।

(ख) न्यग्रोधस्य वटस्य।

(ग) सुप्रणीतेन सुचरितेन। विधिना उपायेन।

(घ) सिद्धिः कार्य्यस्येति शेषः।

नान्यथा अस्माकं सिद्धिरिति (घ)। यतो दुर्गम् एतत् अपसाररहितं (ङ) केवलं बधाय भविष्यति। उक्तञ्च यतः,

अपसारसमायुक्तं नयज्ञै र्दुर्गमुच्यते।
अपसारपरित्यक्तं दुर्गं व्याजेन बन्धनम् ॥१२५॥

न च त्वया मदर्थं कृपा कार्य्या। उक्तञ्च,

अपि प्राणसमानिष्टान् पालितान् लालितानपि।
भृत्यान् युद्धे समुत्पन्ने पश्येच्छुष्कमिवेन्धनम् ॥१२६॥

तथाच, प्राणवद्रक्षयेद् भृत्यान् स्वकायमिव पोषयेत्।
सदैकदिवसस्यार्थे यत्र स्याद्रिपुसङ्गमः ॥ १२७ ॥

तत् त्वया अहं न अत्रविषये प्रतिषेधनीयः (च)। इत्युक्त्वा तेन सह शुष्ककलहं कर्त्तुमारब्धः। अथ अन्ये तस्य भृत्याः स्थिरजीविनमुच्छृङ्खलवचनैर्जल्पन्तम् (छ) अवलोक्य तस्य बधाय उद्यताः मेघवर्णेन अभिहिताः। अहो! निवर्त्तध्वं यूयम्। अहमेव अस्य शत्रुपक्षपातिनो दुरात्मनः स्वयं निग्रहं करि-

---

(ङ) एतत् दुर्गम् अस्माकमावास इति भावः अपसाररहितं निर्गमोपायशून्यमित्यर्थः।

अपसारेति। नयज्ञैः नीतिकुशलैः जनैः दुर्गम् अपसारसमायुक्तं निर्गमोपायसमन्वितम् उच्यते प्रशस्यते इति भावः। अपसारपरित्यक्तं निर्गमरहितं दुर्गं व्याजेन छलेन बन्धनं कारावास इव इत्यर्थः। १२५॥

अपीति। युद्धे समुत्पन्ने समुपस्थिते सति, प्राणसमान् इष्टान् प्रियान् पालितान् लालितान् अपि भृत्यान् परिजनानित्यर्थः शुष्कम् इन्धनमिव काष्ठमिव पश्येत् यथा शुष्कं काष्ठमग्नौ क्षिपति तथा तादृशानपि जनान् समरानले प्रेरयेत् इति भावः॥ १२६ ॥

प्राणेति। एकस्य दिवसस्य अर्थे निमित्तं यत्र रिपुसङ्गमः शत्रुसम्मिलनं तस्य अर्थे विपदुद्धारार्थमिति भावः सदा भृत्यान् प्राणवत् स्वान् प्राणानिव रक्षयेत् तथा स्वकायमिव पोषयेत् प्रतिपालयेत्॥ १२७॥

(च) प्रतिषेधनीयः निवारणीयः।

(छ) उच्छृङ्खलवचनैः अश्लिष्टवाक्यैः। जल्पन्तं प्रलपन्तम्।

ष्यामि। इत्यभिधाय तस्योपरि समारुह्य, लघुभिश्चञ्चुप्रहारैस्तं प्रहृत्य, आहतरुधिरेण प्लावयित्वा, तदुपदिष्टम् ऋष्यमूकपर्वतं सपरिवारो गतः। एतस्मिन्नन्तरे कृकालिकया द्विषत्प्रणिधीभूतया (ज) तत् सर्वं मेघवर्णस्य अमात्यस्य व्यसनम् उलूकराजस्य निवेदितम्। तत् तव अरिः सम्प्रति भीतः क्वचित् प्रचलितः सपरिवार इति। अथ उलूकाधिपः तदाकर्ण्य अस्तमनवेलायां सामात्यः सपरिजनो वायसबधार्थं प्रचलितः। प्राह च, त्वर्य्यताम् त्वर्य्यताम्। भीतः शत्रुः पलायनपरः पुण्यैर्लभ्यते। उक्तञ्च,

शत्रोः प्रचलने छिद्रमेकमन्यच्च संश्रयम्।
कुर्वाणो जायते वश्यो व्यग्रत्वे राजसेविनाम्॥ १२८॥

एवं ब्रुवाणः समन्तात् न्यग्रोधपादपमधः परिवेष्ट्य व्यवस्थितः। यावत् न कश्चिद् वायसो दृश्यते। तावत् शाखाग्रम् अधिरूढो हृष्टमना वन्दिभिः अभिष्टूयमानोऽरिमर्दनः तान् परिजनान् प्रोवाच। अहो! ज्ञायतां तेषां मार्गः। कतमेन मार्गेण प्रनष्टाः (झ) काकाः। तत् यावत् न दुर्गं समाश्रयन्ति, तावत् एव पृष्ठतो गत्वा व्यापादयामि। उक्तञ्च,

वृतिमप्याश्रितः शत्रुरवध्यः स्याज्जिगीषुणा।
किं पुनः संश्रितो दुर्गं सामग्र्या परया युतम्॥ १२९॥

---

(ज) द्विषत्प्रणिधीभूतया शत्रुपक्षीयचारकर्मणि नियुक्तयेति भावः।

शत्रोरिति। शत्रोः प्रचलने पलायने एकं छिद्रम् अन्यच्च छिद्रं संश्रयम् अवलम्बनं कुर्वाणः नृप इति शेषः राजसेविनां राजभृत्यानां व्यग्रत्वे शत्रोश्छिद्रानुसरणे तत्परत्वे, यदि भृत्याः शत्रोश्छिद्रानुसरणार्थं तत्परा भवन्ति तदेति भावः वश्यः वशं गतः तेषामिति भावः जायते राजप्रियकार्य्यकारिणामेव राजा वश्यतां गच्छतीति भावः॥ १२८॥

(झ) प्रनष्टाः पलायिताः।

वृतिमिति। वृतिम् आवरणविशेषम् आश्रितोऽपि शत्रुः जिगीषुणा

अथ एतस्मिन् प्रस्तावे स्थिरजीवी चिन्तयामास। यत् एते अस्मत् शत्रवोऽनुपलब्धास्मद्वृत्तान्ता (ज) यथागतमेव यान्ति। ततो मया न किञ्चित् कृतं भवति। उक्तञ्च,

अनारम्भो हि कार्य्याणां प्रथमं बुद्धिलक्षणम्।
प्रारब्धस्यान्तगमनं द्वितीयं बुद्धिलक्षणम् ॥ १३० ॥

तद्वरम् अनारम्भो न च आरम्भविघातः। तदहमेतान् शब्दं संश्राव्य आत्मानं दर्शयामि इति विचार्य्य मन्दं मन्दं शब्दमकरोत्। तत् श्रुत्वा ते सकला अपि उलूकाः तद्वधाय प्रजग्मुः। अथ तेनोक्तम्, अहो! अहं स्थिरजीवी नाम मेघवर्णस्य मन्त्री। मेघवर्णेन एव ईदृशीम् अवस्थां नीतः। तन्निवेदयत आत्मस्वाम्यग्रे, तेन सह बहु वक्तव्यम् अस्ति। अथ तैः निवेदितः स उलूकराजो विस्मयाविष्टस्तत्क्षणात् तस्य सकाशं गत्वा प्रोवाच। भो भोः! किमेतां दशां गतस्त्वम्? तत् कथ्यताम्। स्थिरजीवी प्राह, देव! श्रूयतां तदवस्थाकारणम्। अतीतदिने स दुरात्मा मेघवर्णो युष्मद्व्यापादितप्रभूतवायसानां पीड़या युष्माकम् उपरि कोपशोकग्रस्तो युद्धार्थं प्रचलित आसीत्। ततो मया अभिहितं स्वामिन्! न युक्तं भवतस्तदुपरि गन्तुं बलवन्त एते, बलहीनाश्च वयम्। उक्तञ्च,

---

नृपेण अवध्यः स्यात् परया महत्या सामग्र्या प्रहरणाद्युपायेन युतं दुर्गं संश्रितः किं पुनः वक्तव्यम् इति शेषः तादृशः शत्रुरजेय एवेति भावः ॥ १२६ ॥

(ज) अनुपलब्धेति। अनुपलब्धः अज्ञातः अस्माकं वृत्तान्तः यैः तथाभूताः मद्वृत्तान्तमजानन्त इत्यर्थः।

अनारम्भ इति। कार्य्याणाम् अनारम्भः आरम्भाकरणं हि प्रथमम् आद्यं बुद्धिलक्षणं प्रज्ञाचिह्नं प्रारब्धस्य कृतारम्भस्य अन्तगमनं पारगमनं सम्यक् साधनम् इत्यर्थः द्वितीयं बुद्धिलक्षणम्। बुद्धिमन्तः प्रथमं कार्य्यं नारभन्ते एव, यदि आरभेरन् तर्हि तत् निष्पादयेयुरिति भावः ॥ १३० ॥

बलीयसा हीनबलो विरोधं
न भूतिकामो मनसापि वाञ्छेत्।
न बध्यतेऽत्यन्तबलो हि यस्मात्
व्यक्तं प्रणाशोऽस्ति पतङ्गवृत्तेः॥ १३१॥

तत् तस्य उपायनप्रदानेन (ट) सन्धिरेव युक्तः। उक्तञ्च,

बलवन्तं रिपुं दृष्ट्वा सर्वस्वमपि बुद्धिमान्।
दत्त्वा हि रक्षयेत् प्राणान् रक्षितैस्तैर्धनं पुनः॥१३२॥

तच्छ्रुत्वा तेन दुर्जनप्रकोपितेन त्वत्पक्षपातिनं माम् आशङ्कमानेन इमां दशां नीतः। तत् तव पादौ साम्प्रतं मे शरणम्, किं बहुना विज्ञप्तेन। यावत् अहं प्रचलितुं शक्नोमि, तावत् त्वां तस्य आवासे नीत्वा सर्ववायसक्षयं विधास्यामि इति। अथ अरिमर्दनः तदाकर्ण्य पितृपितामहक्रमागतमन्त्रिभिः सार्द्धं मन्त्रयाञ्चक्रे। तस्य च पञ्च मन्त्रिणः। तद्यथा रक्ताक्षः क्रूराक्षो दीप्ताक्षो वक्रनासः प्राकारकर्णश्चेति। तत्रादौ रक्ताक्षम् अपृच्छत्। भद्र! एष तावत् तस्य रिपोर्मन्त्री मम हस्तगतः। तत् किं क्रियतामिति। रक्ताक्ष

---

बलीयसेति। भूतिकामो मङ्गलार्थी हीनबलो दुर्बलो जनः बलीयसा बलवत्तरेण सह मनसापि विरोधं न वाञ्छेत् नेच्छेत्। यस्मात् अत्यन्तबलः अतिप्रबलः न बध्यते हि नैव नीयते इत्यर्थः किन्तु पतङ्गस्य वृत्तिरिव वृत्तिर्यस्य तादृशस्य दुर्बलस्येत्यर्थः व्यक्तं निश्चितं प्रणाशः अस्ति, अग्नौ पतङ्गवत् प्रबले दुर्बल इति भावः। उपजातिवृत्तम्॥ १३१॥

(ट) उपायनप्रदानेन उपहारदानेन प्रीतिजननेनेति भावः।

बलवन्तमिति। बुद्धिमान् जनः बलवन्तं बलोत्कटं रिपुं शत्रुं दृष्ट्वा सर्वस्वमपि दत्त्वा तस्मै इति शेषः प्राणान् रक्षयेत् हि यतः तैः प्राणैः रक्षितैः सद्भिः पुनः धनं भवतीति शेषः॥ १३२॥

आह, देव! किमत्र चिन्त्यते? अविचारितमयं हन्तव्यः। यतः,

हीनः शत्रुर्निहन्तव्यो यावन्न बलवान् भवेत्।
प्राप्तस्वपौरुषबलः पश्चाद्भवति दुर्जयः॥ १३३॥

किञ्च स्वयम् उपागता श्रीस्त्यज्यमाना शपतीति लोके प्रवादः (ठ)। उक्तञ्च,

कालो हि सकृदभ्येति यन्नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तेन कालकर्माचिकीर्षता॥ १३४॥

श्रूयते च यथा,

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते॥ १३५॥

अरिमर्दनः प्राह, कथमेतत्? रक्ताक्षः कथयति।

---

हीन इति। यावत् बलवान् न भवेत् तावदेव हीनः शत्रुः निहन्तव्यः निःशेषेण बध्यः। यतः प्राप्तं स्वं पराक्रमः बलं सैन्यं सहाय इत्यर्थः येन तादृशः सः पश्चात् परिणामे दुर्जयः जेतुमशक्यः॥१३३॥

(ठ) उपागता उपस्थिता। श्रीः लक्ष्मीः सम्पदित्यर्थः शपति अभिसम्पातेन भाविविध्वंससूचकेन योजयतीत्यर्थः। प्रवादः प्रसिद्धिः।

काल इति। यत् यतः कालः समयः सौभाग्यस्येति भावः कालकाङ्क्षिणं सुसमयार्थिनं नरं सकृत् एकवारम् अभ्येति प्राप्नोति, काले समये कर्म योग्यमिति भावः अचिकीर्षता कर्त्तुमनिच्छता तेन नरेण स कालः सुसमय इत्यर्थः पुनर्दुर्लभः दुष्प्रापः। सुसमये गते पुनस्तत् प्राप्तिर्दुर्घटेति भावः॥ १३४॥

चितिकामिति। हे ब्राह्मणेति अध्याहार्य्यं चितिकां चितां श्मशानाग्निमिति भावः दीपितां ज्वलन्तीमित्यर्थः तथा मम फटां फणामित्यर्थः भग्नाञ्च पश्य अवलोकय, तव पुत्रो मां शिरसि आहतवान् तेन मम फणा भग्ना, तव पुत्रश्चाहं ततो दष्टवानिति स चिताग्नौ दह्यते इति भावः। अतः भिन्ना चासौ श्लिष्टा चेति तथोक्ता खण्डिता पुनर्योजितेत्यर्थः या प्रीतिः सा स्नेहेन न बर्द्धते, न तत्र प्रीतिर्भवतीति भावः॥ १३५॥

## कथा ५।

अस्ति कस्मिंश्चित् अधिष्ठाने हरिदत्तो नाम ब्राह्मणः। तस्य च कृषिं कुर्वतः सदा एव निष्फलः कालोऽतिवर्त्तते (ड)। अथ एकस्मिन् दिवसे स ब्राह्मण उष्णकालावसाने घर्मार्त्तः स्वक्षेत्रमध्ये वृक्षच्छायायां प्रसुप्तः अनतिदूरे वल्मीकोपरि (ढ) प्रसारितं बृहत्फटायुक्तं भीषणं भुजङ्गमं दृष्ट्वा चिन्तयामास। नूनमेषा क्षेत्रदेवता मया कदाचिदपि न पूजिता। तेन इदं मे कृषिकर्म विफलीभवति। तदस्या अहं पूजाम् अद्य करिष्यामि इति अवधार्य्य कुतोऽपि क्षीरं याचित्वा, शरावे निक्षिप्य वल्मीकान्तिकमुपागम्य उवाच। भो क्षेत्रपाल! मया एतावन्तं (ण) कालं न ज्ञातं यत् त्वम् अत्र वससि, तेन पूजा न कृता, तत् साम्प्रतं क्षमस्व इत्येवमुक्त्वा, दुग्धञ्च निवेद्य, गृहाभिमुखं प्रायात्। अथ प्रातः यावत् आगत्य पश्यति, तावत् दीनारम् (त) एकं शरावे दृष्टवान्। एवं च प्रतिदिनमेकाकी समागत्य तस्मै क्षीरं ददाति, एकैकञ्च दीनारं गृह्णाति। अथ एकस्मिन् दिवसे वल्मीके क्षीरनयनाय पुत्रं निरूप्य (थ) ब्राह्मणो ग्रामान्तरं जगाम। पुत्रोऽपि क्षीरं तत्र नीत्वा संस्थाप्य च पुनर्गृहं समायातः। दिनान्तरे तत्र गत्वा दीनारमेकञ्च दृष्ट्वा गृहीत्वा च चिन्तितवान्।

---

(ड) निष्फलः कृषेः फलविरहादिति भावः। अतिवर्त्तते अतिक्रामति।

(ढ) वल्मीकोपरि वल्मीकं तदाख्यकीटविशेषः तेनोत्थापितमृत्कूटोऽपि तदाख्यया अभिधीयते, तस्योपरि।

(ण) एतावन्तं कालमिति व्याप्त्यर्थे द्वितीया।

(त) दीनारं स्वर्णमुद्राभेदम्।

(थ) निरूप्य नियुज्य।

नूनं सौवर्णदीनारपूर्णोऽयं वल्मीकः। तत् एनं हत्वा सर्वमेकवारं ग्रहीष्यामि इत्येवं सम्प्रधार्य्य अन्येद्युः चीरं ददता ब्राह्मणपुत्रेण सर्पो लगुड़ेन शिरसि ताड़ितः ततः कथमपि दैववशात् अमुक्तजीवित (द) एव रोषात् तमेव तीव्रविषदशनैः तथा अदशत्, यथा सद्यः पञ्चत्वमुपागतः। स्वजनैश्च नातिदूरे चेत्रस्य काष्ठसञ्चयैः संस्कृतः (ध)। अथ द्वितीयदिने तस्य पिता समायातः। स्वजनेभ्यः सुतविनाशकारणं श्रुत्वा तथैव समर्थितवान् (न)। अब्रवीच्च,

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा॥ १३६॥

पुरुषैरुक्तम्, कथमेतत्? ब्राह्मणः कथयति।

## कथा ६।

अस्ति कस्मिंश्चित् अधिष्ठाने (प) चित्ररथो नाम राजा। तस्य योधैः (फ) सुरक्ष्यमाणं पद्मसरो नाम सरस्तिष्ठति। तत्र च प्रभूता जाम्बूनदमया (ब) हंसास्तिष्ठन्ति। षण्मासे षण्मासे पिच्छमेकैकं परित्यजन्ति। अथ तत्र सरसि

---

(द) अमुक्तजीवितः अत्यक्तप्राणः।

(ध) संस्कृतः दग्धः।

(न) समर्थितवान् सम्बुबुधे।

भूतानिति। यः आत्मनः स्वस्य शरणागतान् आश्रयप्राप्तान् भूतान् प्राणिनः न अनुगृह्णाति न दयते, तस्य भूतार्थाः निश्चितार्थाः पद्मवने हंसा यथा नश्यन्ति नाशं प्राप्नुवन्ति॥ १३६॥

(प) अधिष्ठाने स्थाने।

(फ) योधैः सैन्यैः।

(ब) प्रभूता बहवः। जाम्बुनदमया हिरण्मयाः।

सौवर्णो (भ) वृहत् पक्षी समायातः तैश्चोक्तः। अस्माकं मध्ये त्वया न वस्तव्यम्। येन कारणेन अस्माभिः षण्मासान्ते पिच्छैकैकदानं कृत्वा गृहीतमेतत् सरः। एवं च किं बहुना परस्परं द्वैधम् (म) उत्पन्नम्। स च राज्ञः शरणं गतोऽब्रवीत्, देव! एते पक्षिण एवं वदन्ति, यत् अस्माकं राजा किं करिष्यति? न कस्यापि आवासं दद्मः। मया च उक्तं, न शोभनं युष्माभिः अभिहितम्। अहं गत्वा राज्ञे निवेदयिष्यामि। एवं स्थिते देवः प्रमाणम्। ततो राजा भृत्यान् अब्रवीत्, भो भो! गच्छत, सर्वान् पक्षिणो गतासून् (य) कृत्वा शीघ्रमानयत। राजादेशानन्तरमेव प्रचेलुः ते। अथ लगुड़हस्तान् राजपुरुषान् दृष्ट्वा तत्र एकेन पक्षिणा वृद्धेन उक्तं भोः स्वजना! न शोभनम् (र) आपतितम्। ततः सर्वैः एकमतीभूय शीघ्रमुत्पतितव्यम् (ल)। तैश्च तथा अनुष्ठितम्। अतोऽहं ब्रवीमि।

भूतान् यो नानुगृह्णाति ह्यात्मनः शरणागतान्।
भूतार्थास्तस्य नश्यन्ति हंसाः पद्मवने यथा॥ १३७॥

इत्युक्त्वा पुनरपि ब्राह्मणः प्रत्यूषे क्षीरं गृहीत्वा, तत्र गत्वा तारस्वरेण सर्पमस्तौत्। तथा सर्पश्चिरं वल्मीकद्वारान्तर्लीन एव ब्राह्मणं प्रत्युवाच, त्वं लोभादत्र आगतः पुत्रशोक-

---

(भ) सौवर्णः स्वर्णमयः।

(म) द्वैधं विरोधः।

(य) गतासून् गतप्राणान् निहतानित्यर्थः। प्रचेलुः प्रस्थिताः।

(र) शोभनं भद्रम्। आपतितम् उपस्थितम्। ततः तस्मात् कारणात्। एकमतीभूय एकमतमवलम्ब्येत्यर्थः।

(ल) उत्पतितव्यम् उड्डयनीयम्।

मपि विहाय। अतः परं तव मम च प्रीतिर्नोचिता। तव पुत्रेण यौवनोन्मदेन अहं ताड़ितः। मया स दष्टः। कथं मया लगुड़प्रहारो विस्मर्त्तव्यः, त्वया पुत्रशोकदुःखं कथं विस्मर्त्तव्यम्। इत्युक्ता बहुमूल्यं हीरकमणिं तस्मै दत्त्वा अतः परं पुनस्त्वया न आगन्तव्यम् इति पुनरुक्त्वा विवरान्तर्गतः। ब्राह्मणश्च मणिं गृहीत्वा पुत्रबुद्धिं निन्दन् स्वगृहम् आगतः। अतोऽहं ब्रवीमि।

चितिकां दीपितां पश्य फटां भग्नां ममैव च।
भिन्नश्लिष्टा तु या प्रीतिर्न सा स्नेहेन वर्द्धते ॥ १३८ ॥

तदस्मिन् हते यत्नादेव राज्यमकण्टकं भवतो भवति। तस्य एतद्वचनं श्रुत्वा क्रूराक्षं पप्रच्छ, भद्र! त्वं तु किं मन्यसे? सोऽब्रवीत्, देव! निर्दयम् एतत्, यदनेन अभिहितम्। यत् कारणं शरणागतो न वध्यते। सुष्ठु खलु इदम् आख्यातम्।

श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः ॥ १३९ ॥

अरिमर्दनोऽब्रवीत् कथमेतत्? क्रूराक्षः कथयति।

## कथा।

कश्चित् क्षुद्रसमाचारः प्राणिनां कालसन्निभः।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥ १४० ॥

---

श्रूयते इति। श्रूयते अस्माभिरिति शेषः कपोतेन पारावतेन केनचिदिति शेषः शरणमागतः आश्रयं प्राप्तः शत्रुः यथान्यायं यथार्हं पूजितश्च, स्वैः निजैः मांसैः निमन्त्रितः तर्पितश्च चिशब्दोऽवधारणे ॥ १३९ ॥

कश्चिदिति। क्षुद्रः समाचरः व्यवहारः यस्य तथोक्तः प्राणिनां कालसन्निभः यमसदृशः घोरः दारुणः कश्चित् शकुनिलुब्धकः व्याधः महारण्ये विचचार बभ्राम ॥ १४० ॥

नैव कश्चित् सुहृत् तस्य न सम्बन्धी न बान्धवः।
स तैः सर्वैः परित्यक्तस्तेन रौद्रेण कर्मणा ॥ १४१ ॥

अथवा, ये नृशंसा दुरात्मानः प्राणिनां प्राणनाशकाः।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥ १४२ ॥

स पञ्जरकमादाय पाशं च लगुडं तथा।
नित्यमेव वनं याति सर्वप्राणिविहिंसकः ॥ १४३ ॥

अन्येद्युर्भ्रमतस्तस्य वने कापि कपोतिका।
जाता हस्तगता तां स प्राक्षिपत् पञ्जरान्तरे ॥ १४४ ॥

अथ कृष्णा दिशः सर्वा वनस्थस्याभवन् घनैः।
वातवृष्टिश्च महती क्षयकाल इवाभवत् ॥ १४५ ॥

ततः सन्त्रस्तहृदयः कम्पमानो मुहुर्मुहुः।
अन्वेषयन् परित्राणमाससाद वनस्पतिम् ॥ १४६ ॥

---

नैवेति। तेन रौद्रेण दारुणेन कर्मणा हेतुना कश्चित् जनः तस्य व्याधस्य न सुहृत्, न सम्बन्धी, न बान्धवः आसीदिति शेषः स व्याधः तैः सर्वैः सुहृदादिभिः परित्यक्तश्च अभवदिति शेषः ॥ १४१ ॥

ये इति। ये जनाः नृशंसाः निष्ठुराः दुरात्मानः दुराचाराः प्राणिनां प्राणनाशकाः ते व्याला इव हिंस्रजन्तव इव भूतानाम् उद्वेजनीयाः उद्वेगजनका भवन्ति उत्पूर्वाद् विजतेः कर्त्तरि अनीयप्रत्ययः प्रयोगादेव साधुर्बोध्यः ॥ १४२ ॥

स इति। सर्वप्राणिविहिंसकः स व्याधः पञ्जरकं पाशं रज्जुं तथा लगुडम् आदाय गृहीत्वा नित्यमेव प्रतिदिनमेव वनं याति ॥ १४२ ॥

अन्येद्युरिति। अन्येद्युः अन्यस्मिन् दिने कापि कपोतिका वने भ्रमतस्तस्य व्याधस्य हस्तगता जाता, स व्याधः तां कपोतिकां पञ्जरान्तरे पञ्जरमध्ये प्राक्षिपत् निचिक्षेप ॥ १४४ ॥

अथेति। वनस्थस्य वने तिष्ठत एव तस्य सर्वा दिशः घनैः मेघैः कृष्णा नीलवर्णाः आच्छन्ना इत्यर्थः अभवन् तथा क्षयकाल इव प्रलयकाल इव महती वातवृष्टिः वायुना सह वृष्टिः अभवत् ॥ १४५ ॥

तत इति। ततः अनन्तरं स व्याधः सम्यक्त्रस्तं भीतं हृदयं यस्य तथोक्तः तथा मुहुः मुहुः पुनः पुनः कम्पमानः कम्पान्वितकलेवर इत्यर्थः सन् परित्राणं

मुहूर्त्तं पश्यते यावद्वियद् विमलतारकम्।
प्राप्य वृक्षं वदत्येव योऽत्र तिष्ठति कश्चन ॥ १४७ ॥
तस्याहं शरणं प्राप्तः स परित्रातु मामिति।
शीतेन भिद्यमानञ्च क्षुधया गतचेतसम् ॥ १४८ ॥
अथ तस्य तरोः स्कन्धे कपोतः सुचिरोषितः।
भार्य्याविरहितस्तिष्ठन् विललाप सुदुःखितः ॥ १४९ ॥
वातवर्षो महानासीन्न चागच्छति मे प्रिया।
तया विरहितं ह्येतत् शून्यमद्य गृहं मम ॥ १५० ॥
पतिव्रता पतिप्राणा पत्युः प्रियहिते रता।
यस्य स्यादीदृशी भार्य्या धन्यः स पुरुषो भुवि ॥१५१॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते।

---

स्वरक्षाम् अन्वेषयन् वाञ्छन् वनस्पतिं महातरुविशेषम् अपुष्पाः फलवन्तो ये ते वनस्पतयः स्मृता इति मनुः। आससाद प्राप ॥ १४६ ॥

मुहूर्त्तमिति। मुहूर्त्तम् अल्पक्षणमात्रेण इत्यर्थः यावत् विमलाः तारका यत्र तादृशं वियत् अन्तरीक्षं पश्यते दृष्टवानित्यर्थः मेघाद्यभावादिति भावः तावत् वृक्षं तं वनस्पतिं प्राप्य वदति उवाच इत्यर्थः। किमित्याह य इति। अत्र वनस्पतौ यः कश्चन प्राणीति शेषः तिष्ठति, अहं तस्य शरणम् आश्रयं प्राप्तः, स शीतेन भिद्यमानम् अत्यर्थं पीड्यमानं तथा क्षुधया गतचेतसम् अचेतनतामापन्नमित्यर्थः मां परित्रातु रक्षतु शीतात् क्षुधानलाच्चेति शेषः ॥ १४७ ॥ १४८ ॥

अथेति। अथ अनन्तरं तस्य तरोः स्कन्धे सुचिरोषितः बहुकालकृतनिवासः कपोतः कश्चिदिति शेषः भार्य्याविरहितः कपोतिकावियुक्तः अतएव सुदुःखितः अतिदुःखितः तिष्ठन् विललाप ॥ १४९ ॥

वातवर्ष इति। महान् वातवर्षः वायुना सह वृष्टिः आसीत्, मे मम प्रिया न च आगच्छति, अद्य तया विरहितं मे एतत् गृहं शून्यं प्रतिभातीति शेषः ॥ १५० ॥

पतिव्रतेति। ईदृशी पतिव्रता पतिप्राणा पत्युः प्रियहिते रता यस्य भार्य्या स्यात् स पुरुषः भुवि पृथिव्यां धन्यः ॥ १५१ ॥

नेति। गृहं निकेतनं गृहम् इति न आहुः न कथयन्ति विद्वांस इति शेषः,

गृहं हि गृहिणीहीनमरण्यसदृशं मतम् ॥ १५२ ॥
पञ्जरस्था ततः श्रुत्वा भर्त्तुर्दुःखान्वितं वचः ।
कपोतिका सुसन्तुष्टा वाक्यञ्चेदमथाह सा ॥ १५३ ॥
न सा स्त्रीत्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति ।
तुष्टे भर्त्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥ १५४ ॥
दावाग्निना विदग्धेव सपुष्पस्तवका लता ।
भस्मीभवतु सा नारी यस्यां भर्त्ता न तुष्यति ॥१५५॥
मितं ददाति हि पिता मितं भ्राता मितं सुतः ।
अमितस्य हि दातारं भर्त्तारं का न पूजयेत् ? ॥ १५६ ॥

पुनश्च अब्रवीत्,

शृणुष्वावहितः कान्त ! यत् ते वक्ष्याम्यहं हितम् ।
प्राणैरपि त्वया नित्यं संरक्ष्यः शरणागतः ॥ १५७ ॥

---

गृहिणी एव गृहम् उच्यते कथ्यते । हि यतः गृहिणीहीनं गृहम् अरण्यसदृशं काननतुल्यं मतम् उक्तं पण्डितैरिति शेषः ॥ १५२ ॥

पञ्जरस्थेति । ततः पञ्जरस्था व्याधस्येति शेषः सा कपोतिका भर्त्तुः स्वामिनः दुःखान्वितं वचः श्रुत्वा सुसन्तुष्टा अतीव प्रीता सती इदं वाक्यम् आह च कथयामास च ॥ १५३ ॥

नेति । यस्यां स्त्रियां भर्त्ता न तुष्यति, सा स्त्री न अभिमन्तव्या स्त्रीति न वाच्या इत्यर्थः । भर्त्तरि पत्यौ तुष्टे सति नारीणां सर्वदेवताः तुष्टाः स्युः ॥ १५४ ॥

दावेति । भर्त्ता यस्यां न तुष्यति, सा नारी दावाग्निना वनवह्निना विशेषेण दग्धा सपुष्पस्तवका पुष्पस्तवकवती लतेव भस्मीभवतु ॥ १५५ ॥

मितमिति । पिता मितं हि परिमितमेव ददाति, कन्यायै इति शेषः, भ्राता मितं ददाति भगिन्यै इति शेषः, सुतः पुत्रः मितं ददाति मात्रे इति शेषः का नारी अमितस्य अपरिमितस्य धनस्येति शेषः दातारं भर्त्तारं न पूजयेत् ? सर्वैव पूजयेदित्यर्थः स्वामिनः स्त्रीषु अदेयं किमपि नास्ति, अतः सर्वथा स्त्रीणां स्वामी एव परं पूजनीय इति भावः ॥ १५६ ॥

शृणुष्वेति । हे कान्त ! अहं ते तुभ्यं यत् हितं वक्ष्यामि, तत् अवहितः

एष शाकुनिकः शेते तवावासं समाश्रितः।
शीतार्त्तश्च क्षुधार्त्तश्च पूजामस्मै समाचर ॥ १५८ ॥
श्रूयते च, सायमतिथिं प्राप्तं यथाशक्ति न पूजयेत्।
तस्यासौ दुष्कृतं दत्त्वा सुकृतं चापकर्षति ॥ १५९ ॥
मा चास्मै त्वं कृथा द्वेषं बद्धानेनेति मत्प्रिया।
स्वकृतैरेव बद्धाहं प्राक्तनैः कर्मबन्धनैः ॥ १६० ॥
दारिद्र्यरोगदुःखानि बन्धनव्यसनानि च।
आत्मापराधवृक्षस्य फलान्येतानि देहिनाम् ॥ १६१ ॥
तस्मात् त्वं द्वेषमुत्सृज्य मद्बन्धनसमुद्भवम्।
धर्मे मनः समाधाय पूजयैनं यथाविधि ॥ १६२ ॥
तस्यास्तद्वचनं श्रुत्वा धर्मयुक्तिसमन्वितम्।

---

सन् शृणुष्व, त्वया शरणागतः जनः नित्यं सततं प्राणैरपि संरक्ष्यः परित्रातव्यः ॥ १५७ ॥

एष इति। एषः शाकुनिकः व्याधः तव आवासम् आलयं समाश्रितः शीतार्त्तश्च क्षुधार्त्तश्च शेते अवसीदति इत्यर्थः, अस्मै शाकुनिकाय पूजां समाचर विधेहि ॥ १५८ ॥

य इति। यः जनः सायं प्राप्तं सन्ध्याकालोपस्थितम् अतिथिं यथाशक्ति न पूजयेत्, असौ अतिथिः तस्य जनस्य दुष्कृतं स्वमिति शेषः दत्त्वा सुकृतं पुण्यं तस्माज्जनादिति शेषः अपकर्षति च आहृत्य गच्छति इत्यर्थः ॥ १५९ ॥

नेति। अनेन मम प्रिया बद्धा पञ्जरे इति शेषः इति हेतोः अस्मै द्वेषं कोपं मा च कृथाः न कुरु, अहं स्वकृतैरेव निजकृतैरेव प्राक्तनैः पूर्वकालीनैः कर्माण्येव बध्यन्ते एभिरिति बन्धनानि तैः बद्धा ॥ १६० ॥

दारिद्र्येति। एतानि दारिद्र्यं निर्धनत्वं रोगः दुःखञ्च तानि तथा बन्धनानि एव व्यसनानि विपदः देहिनाम् आत्मापराधवृक्षस्य निजदोषतरोः फलानि। स्वकर्मफलभुक् प्राणीति भावः ॥ १६१ ॥

तस्मादिति। तस्मात् कारणात् त्वं मम बन्धनसमुद्भवं द्वेषं कोपम् उत्सृज्य त्यक्त्वा धर्मे मनः समाधाय निवेश्य एनं शाकुनिकं यथाविधि यथाशास्त्रं पूजय ॥ १६२ ॥

तस्या इति। ततः अनन्तरं कपोतः तस्याः स्वकान्तायाः कपोतिकायाः तत्

उपगम्य ततोऽधृष्टः कपोतः प्राह लुब्धकम्॥ १६३॥
भद्र! सुखागतं तेऽस्तु ब्रूहि किं करवाणि ते।
सन्तापश्च न कर्त्तव्यः स्वगृहे वर्त्तते भवान्॥ १६४॥
तस्य तद्वचनं श्रुत्वा प्रत्युवाच विहङ्गमम्।
कपोत! खलु शीतं मे हिमत्राणं विधीयताम्॥१६५॥
स गत्वाङ्गारकं नीत्वा पातयामास पावकम्।
ततः शुष्केषु पर्णेषु तमाशु समदीपयत्॥ १६६॥
सुसन्दीप्तं ततः कृत्वा तमाह शरणागतम्।
सन्तापयस्व विश्रब्धं स्वगात्राण्यत्र निर्भयः।
न चास्ति विभवः कश्चिन्नाशये येन ते क्षुधम्॥१६७॥
सहस्रं भरते कश्चिच्छतमन्यो दशापरः।

---

धर्मयुक्तिसमन्वितं धर्म्यं युक्तियुक्तञ्च इत्यर्थः वचनं श्रुत्वा लुब्धकं व्याधम् उपगम्य अभ्येत्य अधृष्टः विनीतः सन् प्राह॥ १६३॥

भद्रेति। हे भद्र! ते तव सुखागतं सुमङ्गलम् अस्तु, किं ते तव करवाणि ब्रूहि कथय, सन्तापः उद्वेगः न कर्त्तव्यः, भवान् स्वगृहे वर्त्तते, स्वगृह इवात्र निरुद्वेगेन वस इत्यर्थः॥ १६४॥

तस्येति। तस्य कपोतस्य तद्वचनं श्रुत्वा विहङ्गमं तं कपोतं प्रत्युवाच व्याध इति शेषः, हे कपोत! मे मम शीतं खलु अतिमात्रमित्यर्थः, तस्मात् हिमत्राणं शीतात् परित्राणं विधीयतां यथा शीतापनयनं भवेत् तथा क्रियताम् इत्यर्थः॥ १६५॥

स इति। सः कपोतः गत्वा कुत्रचिदिति शेषः अङ्गारकं ज्वलन्तदारुखण्डविशेषं नीत्वा कुतश्चिदिति शेषः ततः शुष्केषु पर्णेषु पत्रेषु पावकम् अग्निं पातयामास, आशु शीघ्रं तम् अग्निं समदीपयच्च ज्वालयामास च॥ १६६॥

सुसन्दीप्तमिति। ततः अनन्तरं सुसन्दीप्तं प्रज्वलितम् अग्निमिति शेषः कृत्वा तं शरणागतम् आह, हे शाकुनिक! त्वं निर्भयः सन् अत्र प्रज्वलितेऽग्नौ स्वगात्राणि निजानि अङ्गानि विश्रब्धं सविश्वासं यथा तथा सन्तापयस्व उष्णीकुरु। कश्चित् विभवः सम्पद् न चास्ति ममेति शेषः येन विभवेन ते तव क्षुधं नाशये अपनयामि॥ १६७॥

मम त्वकृतपुण्यस्य क्षुद्रस्यात्मापि दुर्भरः ॥ १६८ ॥
एकस्याप्यतिथेरन्नं यः प्रदातुं न शक्तिमान् ।
तस्यानेकपरिक्लेशे गृहे किं वसतः फलम् ? ॥ १६९ ॥
तत्तथा साधयाम्येतच्छरीरं दुःखजीवितम् ।
यथा भूयो न वक्ष्यामि नास्तीत्यर्थिसमागमे ॥ १७० ॥
स निनिन्द किलात्मानं न तु तं लुब्धकं पुनः ।
उवाच तर्पयिष्ये त्वां मुहूर्त्तं प्रतिपालय ॥ १७१ ॥
एवमुक्त्वा स धर्मात्मा प्रहृष्टेनान्तरात्मना ।
तमग्निं सम्परिक्रम्य प्रविवेश स्ववेश्मवत् ॥ १७२ ॥
ततस्तं लुब्धको दृष्ट्वा कृपया पीड़ितो भृशम् ।
कपोतमग्नौ पतितं वाक्यमेतदभाषत ॥ १७३ ॥

---

सहस्रमिति । कश्चित् जनः सहस्रं जनान्, अन्यः शतं जनान्, अपरः दश जनान् भरते प्रतिपालयति, अकृतपुण्यस्य क्षुद्रस्य मम तु आत्मापि दुर्भरः भरितुमशक्यः अहम् आत्मानमपि प्रतिपालयितुं न शक्नोमि का कथा अन्येषामिति भावः ॥ १६८ ॥

एकस्येति । यः एकस्यापि अतिथेः गृहागतस्य अन्नं प्रदातुं न शक्तिमान् न समर्थः, तस्य अनेकपरिक्लेशे बहुक्लेशसङ्कुले गृहे वसतः फलं किम् ? न किमपि इत्यर्थः ॥ १६९ ॥

तदिति । तत् तस्मात् एतत् दुःखजीवितं क्लेशबहुलजीवनं शरीरं तथा साधयामि करोमि, यथा अर्थिसमागमे याचकसमीपे नास्तीति भूयः पुनः न वक्ष्यामि । देहं पातयामीति भावः ॥ १७० ॥

स इति । स कपोतः आत्मानं किल केवलं निनिन्द, न तु तं लुब्धकं व्याधं पुनः निनिन्द इत्यनुषङ्गः जायाया बन्धनादिति भावः । ततः सः कपोतः उवाच, हे लुब्धक ! त्वां तर्पयिष्ये भोजयिष्ये, मुहूर्त्तं क्षणं प्रतिपालय अपेक्षस्व ॥ १७१ ॥

एवमिति । स धर्मात्मा कपोतः एवमुक्त्वा प्रहृष्टेन प्रीतेन अन्तरात्मना मनसा तम् अग्निं परिक्रम्य प्रदक्षिणीकृत्य स्ववेश्मवत् स्वं गृहमिव प्रविवेश ॥१७२॥

तत इति । ततः अनन्तरं लुब्धकः तम् अग्नौ पतितं कपोतं दृष्ट्वा कृपया अनुकम्पया अतिमात्रं पीड़ितः आक्रान्तः सन् एतत् वाक्यम् अभाषत उक्तवान् ॥ १७३ ॥

यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मना हि कृतं पापमात्मनैव हि भुज्यते ॥ १७४ ॥
सोऽहं पापमतिश्चैव पापकर्मरतः सदा ।
पतिष्यामि महाघोरे नरके नात्र संशयः ॥ १७५ ॥
नूनं मम नृशंसस्य प्रत्यादर्शः सुदर्शितः ।
प्रयच्छता स्वमांसानि कपोतेन महात्मना ॥ १७६ ॥
अद्य प्रभृति देहं स्वं सर्वभोगविवर्जितम् ।
तोयं स्वल्पं यथा ग्रीष्मे शोषयिष्याम्यहं पुनः ॥ १७७ ॥
शीतवातातपसहः कृशाङ्गो मलिनस्तथा ।
उपवासैर्बहुविधैश्चरिष्ये धर्ममुत्तमम् ॥ १७८ ॥
ततो यष्टिं शलाकाञ्च जालकं पञ्जरं तथा ।
बभञ्ज लुब्धको दीनां कपोतीञ्च मुमोच ताम् ॥ १७९ ॥

---

य इति । यः नरः पापं करोति, ध्रुवमुत्प्रेक्षे तस्य आत्मा प्रियः न, स आत्मानं नाद्रियते इत्यर्थः आत्मना कृतमेव पापम् आत्मना एव स्वयमेव भुज्यते ॥ १७४ ॥

स इति । पापमतिः सदा पापकर्मरतः सोऽहं महाघोरे नरके पतिष्यामि, अत्र संशयो नास्ति ॥ १७५ ॥

नूनमिति । नूनं निश्चितम् अनेन महात्मना कपोतेन स्वमांसानि प्रयच्छता प्रददता सता नृशंसस्य निर्दयस्य मम प्रत्यादर्शः शिक्षाविशेष इति यावत् सुदर्शितः ॥ १७६ ॥

अद्येति । अहं पुनः अद्य प्रभृति अस्मात् दिनादारभ्य सर्वेभ्यः भोगेभ्यः विवर्जितं विहीनं स्वं देहं ग्रीष्मे स्वल्पं तोयं जलं यथा शोषयिष्यामि ॥ १७७ ॥

शीतेति । शीतवातातपसहः शीतं वातम् आतपं सूर्य्यातपञ्च सहते इति तथोक्तः कृशाङ्गः शीर्णदेहः तथा मलिनः संस्कारराहित्यात् मलव्याप्तशरीरः सन् बहुविधैः उपवासैः उत्तमं धर्मं चरिष्ये तपश्चरिष्यामि इत्यर्थः ॥ १७८ ॥

तत इति । ततः अनन्तरं लुब्धकः यष्टिं लगुडं शलाकां जालकं पाशं तथा पञ्जरं बभञ्ज तां दीनां कातरां भर्त्तृशोकेनेति भावः कपोतीं मुमोच तत्याज च ॥ १७९ ॥

लुब्धकेन ततो मुक्ता दृष्ट्वाग्नौ पतितं पतिम्।
कपोती विललापार्त्ता शोकसन्तप्तमानसा ॥ १८० ॥
न कार्य्यमद्य मे नाथ! जीवितेन त्वया विना।
दीनायाः पतिहीनायाः किं नार्य्या जीविते फलम्? ॥ १८१
मनोदर्पस्त्वहङ्कारः कुलपूजा च बन्धुषु।
दासभृत्यजनेष्वाज्ञा वैधव्येन प्रणश्यति ॥ १८२ ॥
एवं विलप्य बहुशः कृपणं भृशदुःखिता।
पतिव्रता सुसन्दीप्तं तमेवाग्निं विवेश सा ॥ १८३ ॥
ततो दिव्याम्बरधरा दिव्याभरणभूषिता।
भर्त्तारं सा विमानस्थं ददर्श खं कपोतिका ॥ १८४ ॥
सोऽपि दिव्यतनुर्भूत्वा यथार्थमिदमब्रवीत्।

---

लुब्धकेनेति। ततः अनन्तरं लुब्धकेन मुक्ता परित्यक्ता कपोती अग्नौ पतितं पतिं कपोतं दृष्ट्वा आर्त्ता कातरा तथा शोकेन सन्तप्तं मानसं यस्याः तथाभूता सती विललाप ॥ १८० ॥

नेति। हे नाथ! अद्य त्वया विना मे मम जीवितेन न कार्य्यं न प्रयोजनं, पतिहीनायाः अतएव दीनायाः दुःखिन्याः नार्य्याः जीविते किं फलम्? न किमपि इत्यर्थः ॥ १८१ ॥

मन इति। वैधव्येन पतिवियोगेन मनोदर्पः मनस उष्मा बन्धुषु ज्ञातिषु अहङ्कारः गौरवमित्यर्थः कुलपूजा कुले पूजा पितृमातृसम्बन्धिनीति भावः पूजा समादरः तथा दासेषु किङ्करेषु तथा भृत्यजनेषु पोष्यवर्गेषु आज्ञा कार्य्ये नियोगः प्रणश्यति नारीणामिति शेषः पतिगौरवेणैव नारीणां गौरवं तदभावे किमपि नास्तीति भावः ॥ १८२ ॥

एवमिति। भृशदुःखिता अतिमात्रमार्त्ता सा पतिव्रता कपोती एवं बहुशः पुनः पुनः कृपणं दीनं यथा तथा विलप्य तमेव सुसन्दीप्तं प्रज्वलितम् अग्निं विवेश ॥ १८३ ॥

तत इति। ततः अनन्तरं सा कपोतिका दिव्याम्बरधरा दिव्याभरणभूषिता च सती विमानस्थं देवयानस्थं खं भर्त्तारं ददर्श ॥ १८४ ॥

अहो ! मामनुगच्छन्त्या कृतं साधु शुभे ! त्वया ॥१८५॥
तिस्रः कोट्योऽर्द्धकोटी च यानि रोमाणि मानुषे।
तावत् कालं वसेत् स्वर्गे भर्त्तारं यानुगच्छति ॥१८६॥
कपोतदेवः सूर्य्यास्ते प्रत्यहं सुखमन्वभूत्।
कपोतदेहवत् सासीत् प्राक्पुण्यप्रभवं हि तत् ॥१८७॥
हर्षाविष्टस्ततो व्याधो विवेश च वनं घनम्।
प्राणिहिंसां परित्यज्य बहुनिर्वेदवान् भृशम् ॥१८८॥
तत्र दावानलं दृष्ट्वा विवेश विरताशयः।
निर्दग्धकल्मषो भूत्वा स्वर्गसौख्यमवाप्तवान् ॥१८९॥

अतोऽहं ब्रवीमि, श्रूयते हि कपोतेन शत्रुः शरणमागतः।
पूजितश्च यथान्यायं स्वैश्च मांसैर्निमन्त्रितः॥ १९० ॥

तत् श्रुत्वा अरिमर्दनो दीप्ताक्षं पृष्टवान्। एवमवस्थिते किं भवान् मन्यते ? सोऽब्रवीत्, देव ! न हन्तव्य एवायम्। यतः, या ममोद्विजते नित्यं सा मामद्यावगूहते।

---

स इति। सोऽपि कपोतः दिव्यतनुर्भूत्वा इदं यथार्थमब्रवीत् अहो शुभे ! त्वया मामनुगच्छन्त्या साधु कृतम् ॥ १८५ ॥

तिस्र इति। या भर्त्तारम् अनुगच्छति अनुम्रियते, सा मानुषे मानवशरीरे यानि तिस्रः कोट्यः अर्द्धकोटी च सार्द्धत्रिकोटीनीत्यर्थः रोमाणि सन्तीति शेषः तावत्कालं वत्सरमित्यर्थः स्वर्गे वसेत् ॥ १८६ ॥

कपोतदेव इति। स कपोतदेवः सूर्य्यास्ते सायं प्रत्यहं सुखमन्वभूत सुखं बुभुजे। सा कपोती कपोतस्य देहवत् शरीरभूता आसीत् शेषः तत् तयोरीदृगैश्वर्य्यमिति भावः प्राक्पुण्यप्रभवं हि प्राक्तनपुण्यफलमेव ॥ १८७ ॥

हर्षाविष्ट इति। ततः अनन्तरं व्याधः हर्षाविष्टः तयोस्तादृग्विभूति-दर्शनात् इति भावः भृशम् अत्यन्तं बहुनिर्वेदवान् अतिमात्रवैराग्ययुक्तः सन् प्राणिहिंसां परित्यज्य घनं निविड़ं वनं विवेश च ॥ १८८ ॥

तत्रेति। तत्र वने दावानलं दृष्ट्वा विरताशयः जीवि[illegible]:स्पृह इत्यर्थः विवेश, तथा निःशेषेण दग्धं कल्मषं पापं येन तथाभूतः भूत्वा स्वर्गसौख्यम् अवाप्तवान् प्राप ॥ १८९ ॥

प्रियकारक ! भद्रं ते यन्ममास्ति हरस्व तत् ॥ १९१ ॥

चौरेण च अपि उक्तम् ।

हर्त्तव्यं ते न पश्यामि हर्त्तव्यं चेद्भविष्यति ।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १९२ ॥

अरिमर्दनः पृष्टवान्, का च नावगूहते । कस्य अयं चौर इति विस्तरतः श्रोतुमिच्छामि । दीप्ताक्षः कथयति ।

## कथा ८ ।

अस्ति कस्मिंचित् अधिष्ठाने कामातुरो नाम वृद्धवणिक्, तेन च कामोपहतचेतसा मृतभार्य्येण काचिन्निर्द्धनवणिक्सुता प्रभूतं धनं दत्त्वा उद्वाहिता। अथ सा दुःखाभिभूता तं वृद्धवणिजं द्रष्टुमपि न शशाक । युक्तञ्चैतत् ।

श्वेतं पदं शिरसि यत्तु शिरोरुहाणाम्
स्थानं परं परिभवस्य तदेव पुंसाम् ।
आरोपितास्थिशकलं परिहृत्य यान्ति
चाण्डालकूपमिव दूरतरं तरुण्यः ॥ १९३ ॥

---

येति । या मम नित्यं सततम् उद्विजते मां क्लिश्नाति इत्यर्थः अद्य सा माम् अवगूहते आलिङ्गति, हे प्रियकारक ! ते तव भद्रं कुशलमस्तु इति शेषः मम यत् अस्ति तत् हरस्व । चौरं प्रति गृहिण उक्तिरियम् ॥ १९१ ॥

हर्त्तव्यमिति । ते तव हर्त्तव्यं न पश्यामि, चेत यदि हर्त्तव्यं भविष्यति, तदा पुनरपि आगमिष्यामि, यदि इयं नारी न अवगूहते नालिङ्गति ॥ १९२ ॥

श्वेतमिति । शिरसि मस्तके शिरोरुहाणां केशानां यत्तु श्वेतं पदं धावल्यम् इत्यर्थः तदेव पुंसां परिभवस्य अवमानस्य परं स्थानम् । तरुण्यः युवत्यः चाण्डालकूपमिव चाण्डालखातं जलाशयविशेषमिव तस्य अपेयजलत्वादिति भावः आरोपितानि बहिष्कृतानि अस्थ्नां कङ्कालानां शकलानि खण्डाः यस्य तादृशं शीर्णदेहमिति भावः पुमांसमिति शेषः परिहृत्य परित्यज्य दूरतरम् अतिदूरं यान्ति गच्छन्ति वृद्धं पतिं परित्यजन्तीति भावः ॥ १९३ ॥

तथाच, गात्रं सङ्कुचितं गतिर्विगलिता दन्ताश्च नाशं गताः

दृष्टिर्भ्राम्यति रूपमप्युपहतं वक्त्रञ्च लालायते।
वाक्यं नैव करोति बान्धवजनः पत्नी न शुश्रूषते
धिक् कष्टं जरयाभिभूतपुरुषं पुत्रोऽप्यवज्ञायते ॥१९४॥

अथ कदाचित् सा तेन सह एकशयने पराङ्मुखी यावत् तिष्ठति, तावद्गृहे चौरः प्रविष्टः। सा अपि तं चौरं दृष्ट्वा भयव्याकुलिता वृद्धमपि तं पतिं गाढ़ं समालिलिङ्ग। सोऽपि विस्मयात् पुलकाङ्कितसर्वगात्रः चिन्तयामास। अहो! किम् एषा माम् अद्य अवगूहते। यावत् निपुणतया पश्यति, तावत् गृहकोणैकदेशे चौरं दृष्ट्वा व्यचिन्तयत्। नूनम् एषा अस्य भयात् माम् आलिङ्गतीति ज्ञात्वा तं चौरम् आह,

या ममोद्विजते नित्यं सा मामद्यावगूहते।
प्रियकारक! भद्रं ते यन्ममास्ति हरस्व तत् ॥ १९५ ॥

तत् श्रुत्वा चौरोऽपि आह,

हर्त्तव्यं ते न पश्यामि हर्त्तव्यं चेद्भविष्यति।
पुनरप्यागमिष्यामि यदीयं नावगूहते ॥ १९६ ॥

तस्मात् चौरस्यापि उपकारिणः श्रेयः (व) चिन्त्यते, किं पुनर्न शरणागतस्य। अपि च अयं तैः विप्रकृतोऽस्माकमेव

---

गात्रमिति। गात्रं शरीरं वृद्धस्येति शेषः सङ्कुचितं सङ्कोचमाप्तं गतिः विगलिता, गमनशक्तिर्नास्तीति भावः दन्ताः नाशं गताः पतिता इत्यर्थः। दृष्टिः भ्राम्यति, भ्रान्तवत् पश्यतीत्यर्थः रूपं सौन्दर्य्यमपि उपहतं विनष्टं, वक्त्रं मुखं लालायते लालमुद्वमति। बान्धवजनः वाक्यं न करोति न शृणोतीत्यर्थः पत्नी न शुश्रूषते न सेवते। धिक् कष्टं पुत्रोऽपि जरया अभिभूतम् आक्रान्तं पुरुषम् अवज्ञायते अवमन्यते। शार्दूलविक्रीड़ितं वृत्तम् ॥ १९४ ॥

(व) श्रेयः मङ्गलम्।

पुष्टये (श) भविष्यति तदीयस्नुदर्शनाय चेति। अनेन कारणेन अयम् अवध्य इति। एतदाकर्ण्य अरिमर्दनोऽन्यं सचिवं वक्रनासं पप्रच्छ, भद्र! साम्प्रतमेवं स्थिते किं कर्त्तव्यं, सोऽब्रवीत्, देव! अवध्योऽयम्।

यतः, शत्रवोऽपि हितायैव विवदन्तः परस्परम्।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्॥ १९७॥

अरिमर्दनः प्राह, कथमेतत्? वक्रनासः कथयति।

## कथा ९।

अस्ति कस्मिंश्चिद् अधिष्ठाने दरिद्रो द्रोणनामा ब्राह्मणः प्रतिग्रहधनः (ष) सततं विशिष्टवस्त्रानुलेपनगन्धमाल्यालङ्कारताम्बूलादिभोगपरिवर्जितः प्ररूढ़केशश्मश्रुनखरोमोपचितः (स) शीतोष्णवातवर्षादिभिः परिशोषितशरीरः। तस्य च केनापि यजमानेन अनुकम्पया शिशुगोयुगं (ह) दत्तम्। ब्राह्मणेन च बालभावात् आरभ्य याचितघृततैलयवसादिभिः (च) संवर्द्ध्य सुपुष्टं कृतम्। तच्च दृष्ट्वा सहसा एव कश्चित् चौरः चिन्तितवान्, अहमस्य ब्राह्मणस्य गोयुगमिदम्

---

(श) पुष्टये वृद्धये। विप्रकृतः निपीड़ितः।

शत्रव इति। परस्परं विवदन्तः विवादं कुर्वन्तः शत्रवोऽपि हितायैव भवन्तीति शेषः, तथाहि चौरेण जीवितं दत्तं राक्षसेन तु गोयुगं गोद्वयं दत्तमित्युपषङ्गः॥ १९७॥

(ष) प्रतिग्रहधनः प्रतिग्रहमात्रजीवि इत्यर्थः।

(स) प्ररूढ़ेति। प्ररूढ़ैः प्रकर्षेण वृद्धिं गतैरित्यर्थः केशैः श्मश्रुभिः नखैः रोमभिश्च उपचितः व्याप्तः अर्थविरहेण क्षौरकर्माभावादिति भावः।

(ह) शिशुगोयुगं वत्सद्वयम् इत्यर्थः।

(च) बालभावात् तयोः वत्सयोः शैशवात्। याचितैः भिक्षितैः घृतैः तैलैः यवसादिभिः घासादिभिश्च।

अपहरिष्यामि। इति निश्चित्य निशायां बन्धनपाशं (क) गृहीत्वा यावत् प्रस्थितः, तावत् अर्द्धमार्गे प्रविरलतीक्ष्ण-दन्तपङ्क्तिः उन्नतनासावंशो प्रकटरक्तान्तनयनोपचितस्नायु-सन्ततिर्नतगात्रः शुष्ककपोलः सुहुतहुतवहपिङ्गलश्मश्रुकेश-शरीरः (ख) कश्चिद् दृष्टः। दृष्ट्वा च तं तीव्रभयत्रस्तोऽपि चौरोऽब्रवीत्, को भवानिति ? स आह, सत्यवचनोऽहं, ब्रह्म-राक्षसः। भवान् अपि आत्मानं निवेदयतु। सोऽब्रवीत्, अहं क्रूरकर्मा चौरः। दरिद्रब्राह्मणस्य गोयुगं हर्त्तुं प्रस्थितो-ऽस्मि। अथ जातप्रत्ययो राक्षसोऽब्रवीत्, भद्र! षष्ठाङ्ग-कालिकोऽहं, (ग) अतः तमेव ब्राह्मणम् अद्य भक्षयिष्यामि। तत् सुन्दरमिदम्, एककार्य्यौ (घ) एव आवाम्। अथ तौ तत्र गत्वा एकान्ते कालमन्वेषयन्तौ (ङ) स्थितौ। प्रसुप्ते च ब्राह्मणे तद्भक्षणार्थं प्रस्थितं राक्षसं दृष्ट्वा चौरोऽब्रवीत्, भद्र! नैष न्यायः, (च) यतो गोयुगे मया अपहृते पश्चात्

---

(क) बन्धनपाशं बन्धनरज्जुम्।

(ख) प्रविरलेति। प्रविरला अल्पाल्पा तीक्ष्णा दन्तपङ्क्तिर्यस्य तथोक्तः। उन्नतनासावंशः उत्तुङ्गनासिकः। प्रकटेति। प्रकटे उज्ज्वले रक्तान्ते ये नयने ताभ्याम् उपचिता पुष्टत्वेनानुमिता स्नायुसन्ततिः धमनीसमूहो यस्य तथाभूतः। सुहुतेति। सुष्ठु हुतः हुतवहोऽग्निर्येन तथाभूतः यथाविधि कृताग्निहोत्र इत्यर्थः अतएव पिङ्गलानि कपिशानि श्मश्रुकेशशरीराणि यस्य तथाविधः।

(ग) षष्ठाङ्गकालिकः अङ्गः षष्ठो भागः षष्ठाङ्गः स एव कालः षष्ठाङ्गकालः तत्र भुङ्क्ते इति षष्ठाङ्गकालिकः भुक्त्यर्थे ष्णिकप्रत्ययः। अष्टप्रहरपरिमाणमहः तत्र पञ्चमे प्रहरे गते नियतभोजन इत्यर्थः रात्रेः प्रहरे गते द्विप्रहरसमये भोजन-निरत इति यावत्।

(घ) एककार्य्यौ एकं गोब्राह्मणहरणरूपं कार्य्यं ययोस्तौ।

(ङ) अन्वेषयन्तौ अपेक्षमाणौ।

(च) न्यायः विचारः औचित्यमिति यावत्।

त्वम् एनं ब्राह्मणं भक्षय। सोऽब्रवीत्, कदाचित् अयं ब्राह्मणो गोशब्देन बुध्येत, तदा अनर्थकोऽयं मम आरम्भः स्यात्। चौरोऽपि अब्रवीत्, तव अपि यदि भक्षणाय उपस्थितस्यान्तर एकोऽपि अन्तरायः (छ) स्यात् तदाहमपि न शक्नोमि गोयुगम् अपहर्त्तुम्। अतः प्रथमं मया अपहृते गोयुगे पश्चात् त्वया ब्राह्मणो भक्षयितव्यः। इत्थं च अहमहमिकया तयोर्विवदतोः समुत्पन्ने द्वैधे (ज) प्रतिरववशाद् ब्राह्मणो जजागार। अथ तं चौरोऽब्रवीत् ब्राह्मण! त्वामेव अयं राक्षसो भक्षयितुमिच्छति। राक्षसोऽपि आह, ब्राह्मण! चौरोऽयं, गोयुगं ते अपहर्तुमिच्छति। एवं श्रुत्वा उत्थाय ब्राह्मणः सावधानो भूत्वा इष्टदेवतामन्त्राध्यायेन (झ) आत्मानं राक्षसादुद्गूर्णलगुडेन (ञ) चौरात् गोयुगं ररक्ष। अतोऽहं ब्रवीमि,

शत्रवोऽपि हितायैव विवदन्तः परस्परम्।
चौरेण जीवितं दत्तं राक्षसेन तु गोयुगम्॥ १९८॥

अथ तस्य वचनम् अवधार्य अरिमर्दनः पुनरपि प्राकारकर्णम् अपृच्छत, कथय किमत्र मन्यते भवान्? सोऽब्रवीत्, देव! अवध्य एवायं, यतो रक्षितेन अनेन कदाचित् परस्परप्रीत्या कालः सुखेन गच्छति। उक्तञ्च,

परस्परस्य मर्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्॥ १९९॥

---

(छ) अन्तरायः विघ्नः।
(ज) द्वैधं कलहे। प्रतिरववशात् कलहस्य प्रतिध्वनिकारणात्।
(झ) इष्टेति। इष्टाया देवतायाः मन्त्राध्यायेन मन्त्रोच्चारणेन।
(ञ) उद्गूर्णलगुडेन उत्तोलितेन दण्डेन।
परस्परस्येति। ये जन्तवः प्राणिनः परस्परस्य अन्योन्यस्य मर्माणि जीवना-

अरिमर्दनोऽब्रवीत् कथमेतत्? प्राकारकर्णः कथयति।

## कथा १०।

अस्ति कस्मिंश्चित् नगरे देवशक्तिर्नाम राजा, तस्य च पुत्रो जठरवल्मीकाश्रयेण (ट) उरगेण प्रतिदिनं प्रत्यङ्गं क्षीयते। अनेकोपचारैः सद्वैद्यैः सच्छास्त्रोपदिष्टौषधयुक्त्यापि चिकित्स्यमानो न स्वास्थ्यमाप्नोति। अथ असौ राजपुत्रो निर्वेदात् देशान्तरं गतः। कस्मिंश्चित् नगरे भिक्षाटनं (ड) कृत्वा महति देवालये कालं यापयति। अथ तत्र नगरे बलिर्नाम राजा आस्ते, तस्य च द्वे दुहितरौ यौवनस्थे तिष्ठतः। ते च प्रतिदिवसमादित्योदये पितुः पादान्तिकमागत्य नमस्कारं चक्रतुः। तत्र च एका अब्रवीत् विजयस्व महाराज! यस्य प्रसादात् सर्वं सुखं लभ्यते। द्वितीया तु विहितं (ढ) भुङ्क्ष्व महाराज! इति ब्रवीति। तच्छ्रुत्वा प्रकुपितो राजा अब्रवीत्, भो मन्त्रिन्! एनां दुष्टभाषिणीं कुमारिकां कस्यचिद् वैदेशिकस्य (ण) प्रयच्छत (त)। येन निजविहितम् इयमेव भुङ्क्ते। अथ तथेति (थ) प्रतिपद्य अल्पपरिवारा सा कुमारिका मन्त्रिभिः तस्य देवकुलाश्रितराजपुत्रस्य प्रतिपादिता।

---

वल्मीकोदरसर्पवन्निधनं यान्ति म्रियन्ते मीति भावः न रक्षन्ति त एव इत्यर्थः ॥ १९९ ॥

(ट) जठरेति। जठरमुदरमेव वल्मीकं जठरवल्मीकं तत् आश्रयो यस्य तेन उदरस्थेन इत्यर्थः। उरगेण सर्पेण। क्षीयते दृश्यते।

(ठ) अनेकोपचारैः नानाविधाभिः प्रक्रियाभिः।

(ड) भिक्षाटनं भिक्षार्थं पर्य्यटनम्।

(ढ) विहितं स्वकर्मोपार्जितम्।

(ण) वैदेशिकस्य विदेशीयस्य जनस्य।

(त) प्रयच्छत प्रदत्त, निजविहितं स्वकृतं कर्मफलमिति भावः।

(थ) प्रतिपद्य स्वीकृत्य।

सा अपि प्रहृष्टमानसा तं पतिं देववत् प्रतिपद्य आदाय च अन्यविषयं गता। ततः कस्मिंश्चिद् दूरतरनगरप्रदेशे तड़ागतटे राजपुत्रम् आवासरक्षायै निरूप्य, (द) स्वयं च घृततैललवणतण्डुलादिक्रयनिमित्तं सपरिवारा गता। कृत्वा च क्रयविक्रयं यावत् आगच्छति, तावत् स राजपुत्रो वल्मीकोपरिकृतमूर्ध्वा प्रसुप्तः। तस्य च मुखात् भुजगः फणां निष्क्राम्य वायुमश्नाति। तत्र एव च वल्मीकेऽपरः सर्पो निष्क्रम्य तथा एव आसीत्। अथ तयोः परस्परदर्शनेन क्रोधसंरक्तलोचनयोः मध्यात् वल्मीकस्थेन सर्पेण उक्तं, भो भो दुरात्मन्! कथं सुन्दरसर्वाङ्गं राजपुत्रमित्थं कदर्थयसि (ध)। मुखस्थोऽहिरब्रवीत्, भो भो! त्वया अपि दुरात्मना अस्य वल्मीकस्य मध्ये कथमिदं दूषितं हाटकपूर्णं (न) कलशयुगलमिति एवं परस्परस्य मर्माणि उद्घाटितवन्तौ पुनः वल्मीकस्थोऽहिरब्रवीत्। भो दुरात्मन्! भेषजमिदं ते किं कोऽपि न जानाति? यत् जीर्णोत्कालितकञ्जिकाराजिकापानेन (प) भवान् विनाशम् उपयाति अथ उदरस्थोऽहिरब्रवीत्। तवापि एतत् भेषजं किं कश्चिदपि न वेत्ति? यत् उष्णतैलेन वा महोष्णोदकेन तव विनाशः स्यादिति। एवञ्च सा राजकन्या विटपान्तरिता (फ) तयोः परस्परालापान् मर्ममयान् आकर्ण्य तथा एव अनुष्ठितवती। विधाय (ब) अव्यङ्गं

---

(द) निरूप्य रक्षित्वा।

(ध) कदर्थयसि क्लेशयसि।

(न) हाटकपूर्णं सुवर्णपूर्णम्। कलसयुगलं कुम्भद्वयम्।

(प) जीर्णेति। जीर्णायाः पुरातन्याः उत्कालितायाः आलोड़िताया: कञ्जिकाराजिकायाः काँजीति प्रसिद्धायाः पानेन।

(फ) विटपान्तरिता शाखान्तरालस्थिता।

(ब) विधाय कृत्वा। निधिं वल्मीकाभ्यन्तरस्थितं महामूल्यं धनम् इत्यर्थः।

नीरोगं भर्त्तारं निधिञ्च परमम् आसाद्य स्वदेशाभिमुखं प्रायात्। पितृमातृस्वजनैः प्रतिपूजिता विहितोपभोगं प्राप्य सुखेन अवस्थिता। अतोऽहं ब्रवीमि।

परस्परस्य मर्म्माणि ये न रक्षन्ति जन्तवः।
त एव निधनं यान्ति वल्मीकोदरसर्पवत्॥ २००॥

तच्च श्रुत्वा स्वयम् अरिमर्दनोऽपि एवं समर्थितवान् (भ)। तथाच अनुष्ठितं दृष्ट्वान्तर्लीनं(म) विहस्य रक्ताक्षः पुनरब्रवीत्, कष्टम्! विनाशितोऽयं भवद्भिः अन्यायेन स्वामी। उक्तञ्च,

अपूज्या यत्र पूज्यन्ते पूज्यानान्तु विमानना।
त्रीणि तत्र प्रवर्त्तन्ते दुर्भिक्षं मरणं भयम्॥ २०१॥

तथाच, प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।
रथकारः स्वकां भार्य्यां सजारां शिरसावहत्॥२०२॥

मन्त्रिणः प्राहुः। कथमेतत्? रक्ताक्षः कथयति,

## कथा ११।

अस्ति कस्मिंश्चित् अधिष्ठाने वीरधरो नाम रथकारः, तस्य भार्य्या कामदमिनी। सा च पुंश्चली जनापवादसंयुक्ता।

---

(भ) समर्थितवान् शरणागतस्य शत्रोः रक्षणं कर्त्तव्यमिति स्थिरीचकार इत्यर्थः।

(म) अनुष्ठितं कृतं शरणागतं काकं रक्षितमित्यर्थः। अन्तर्लीनम् अस्पष्टम् इत्यर्थः।

अपूज्या इति। यत्र देशे अपूज्या अपूजनीया जनाः पूज्यन्ते, पूज्यानाञ्च पूजार्हाणाञ्च विमानना अवमानना, तत्र दुर्भिक्षं मरणं भयम् एतानि त्रीणि प्रवर्त्तन्ते सम्भवन्ति॥ २०१॥

प्रत्यक्षे इति। मूर्खो जनः प्रत्यक्षे पापे कृतेऽपि साम्ना विनयेन पापकारिणि इति शेषः प्रशाम्यति अक्रोधी भवति, तथाहि रथकारः सूत्रधरः सजारां सोपपतिकां स्वकां निजां भार्य्यां शिरसा अवहत्॥ २०२॥

सोऽपि तस्याः परीक्षणार्थं व्यचिन्तयत्, अथ मया अस्याः परीक्षणं कर्त्तव्यम्। उक्तञ्च यतः।

यदि स्यात् पावकः शीतः प्रोष्णो वा शशलाञ्छनः।
स्त्रीणां तदा सतीत्व स्याद् यदि स्याद् दुर्जनो हितः॥२०३॥

जानामि च एनां लोकवचनात् असतीम्। उक्तञ्च,

यच्च वेदेषु शास्त्रेषु न दृष्टं न च संश्रुतम्।
तत् सर्वं वेत्ति लोकोऽयं यत् स्याद् ब्रह्माण्डमध्यगम्॥२०४॥

एवं सम्प्रधार्य्य भार्य्याम् अवोचत्, प्रिये! प्रभातेऽहं ग्रामान्तरं यास्यामि। तत्र कतिचिद्दिनानि लगिष्यन्ति। तत् त्वया किमपि पाथेयं मम योग्यं विधेयम्। सापि तद्वचनं श्रुत्वा हर्षितचित्ता औत्सुक्यात् सर्वकार्य्याणि सन्त्यज्य सिद्धमन्नं घृतशर्कराप्रायमकरोत्। अथवा साधु इदमुच्यते,

दुर्दिवसे घनतिमिरे वर्षति जलदे महाटवीप्रभृतौ।
पत्युर्विदेशगमने परमसुखं जघनचपलायाः॥ १०५॥

अथ असौ प्रत्यूषे उत्थाय स्वगृहात् निर्गतः। सापि तं प्रस्थितं विज्ञाय प्रहसितवदना अङ्गसंस्कारं (य) कुर्वाणा

---

यदीति। यदि पावकः अग्निः शीतः शीतलः, शशलाञ्छनश्चन्द्रः प्रोष्णः प्रकर्षेण उष्णो वा स्यात् यदि वा दुर्जनः हितः सुजनः स्यात् तदा स्त्रीणां सतीत्वं स्यात् स्त्रियः प्रायेणासत्य इति भावः॥ २०३॥

यदिति। वेदेषु शास्त्रेषु पुराणादिषु यत् न दृष्टं यच्च न संश्रुतम्, अयं लोकः सांसारिकजनः ब्रह्माण्डमध्यगं जगतीस्थं यत् स्यात् तत् सर्वं वेत्ति जानाति। लोकेषु किमपि गुप्तं न तिष्ठतीति भावः॥ २०४॥

दुर्दिवसे इति। दुर्दिवसे दुर्दिने घनतिमिरे सान्द्रतमसि, जलदे मेघे वर्षति तथा महाटवीप्रभृतौ महारण्यप्रभृतिप्रदेशे तथा पत्युर्विदेशगमने जघनचपलायाः कामुक्या इत्यर्थः परमसुखं महती प्रीतिः भवतीति शेषः॥ २०५॥

(य) अङ्गसंस्कारं शरीरशोधनपूर्वकमङ्गरागादिधारणम्।

कथञ्चित् तद्दिवसमत्यवाहयत्। अथ पूर्वपरिचितविटगृहे (र) गत्वा तं प्रत्युक्तवती। स दुरात्मा मे पतिर्ग्रामान्तरं गतः। तत् त्वया अस्मद्गृहे प्रसुप्ते जने समागन्तव्यम्। तथा अनुष्ठिते (ल) स रथकारोऽरण्ये दिनम् अतिवाह्य प्रदोषे स्वगृहेऽपरद्वारेण (व) प्रविश्य शय्याधस्तले निभृतो भूत्वा स्थितः। एतस्मिन्नन्तरे स देवदत्तः (श) समागत्य तत्र शयने उपविष्टः। तं दृष्ट्वा रोषाविष्टचित्तो रथकारो व्यचिन्तयत् किम् एनम् उत्थाय हन्मि, अथवा हेलया एव प्रसुप्तौ (ष) द्वौ अपि एतौ व्यापादयामि। परं पश्यामि तावदस्याः चेष्टितम्। शृणोमि च अनेन सह आलापान्। अत्रान्तरे सा गृहद्वारं निभृतं (स) विधाय शयनतलम् आरूढ़ा। अथ तस्याः तत्र आरोहन्त्या रथकारशरीरे पादो विलग्नः। ततः सा व्यचिन्तयत् नूनम् एतेन दुरात्मना रथकारेण मत्परीक्षणार्थं भाव्यम्। ततः स्त्रीचरित्रविज्ञानं (ह) किमपि करोमि। एवं तस्याः चिन्तयन्त्याः स देवदत्तः स्पर्शोत्सुको बभूव। अथ तया कृताञ्जलिपुटया अभिहितम्। भो महानुभाव! न मे शरीरं त्वया स्पर्शनीयं, यतोऽहं पतिव्रता महासती च। न चेत् शापं दत्त्वा

---

(र) अत्यवाहयत् यापयामास। पूर्वेति पूर्वपरिचितस्य प्राक् संस्तुतस्य विटस्य जारस्य गृहे।

(ल) तथानुष्ठिते तथाविधे व्यापारे अनुष्ठिते कृते व्यवस्थापिते इति भावः तया कुलटयेति शेषः।

(व) अतिवाह्य गमयित्वा प्रदोषे रजनीमुखे। अपरद्वारेण पश्चद्वारेण।

(श) निभृतः निस्तब्धः। देवदत्तः तदाख्यो जारः।

(ष) हेलया अनायासेन प्रसुप्तत्वादिति भावः।

(स) निभृतं बद्धम्।

(ह) भाव्यं स्थातव्यम् इत्यर्थः। स्त्रीति। स्त्रीणां चरित्रस्य विज्ञानं विशेषेण ज्ञानं विशिष्टकौशलम् इत्यर्थः।

त्वां भस्मसात् करिष्यामि। स आह, यदि एवं तर्हि त्वया किमहम् आहूतः ? सा अब्रवीत्, भोः ! शृणुष्व एकाग्रमनाः। अहमद्य प्रत्यूषे देवतादर्शनार्थं चण्डिकायतनं गता, तत्र अकस्मात् खे वाणी सञ्जाता। पुत्रि ! किं करोमि, भक्तासि मे त्वं, परं षण्मासाभ्यन्तरे विधिनियोगाद् (च) विधवा भविष्यसि। ततो मया अभिहितं भगवति ! यथा त्वम् आपदं वेत्सि, तथा तत्प्रतीकारमपि जानासि। तत् अस्ति कश्चित् उपायो येन मे पतिः शतसंवत्सरजीवी भवति। ततः तया अभिहितम्। वत्से ! सन्नपि नास्ति, यतः तव आयत्तः (क) स प्रतीकारः, तच्छ्रुत्वा मया अभिहितम्, देवि ! यदि तत् मम प्राणैर्भवति, तत् आदेशय येन करोमि। अथ देव्या अभिहितम्, यदि अद्यदिने परपुरुषेण सह एकस्मिन् शयने समारुह्य आलिङ्गनं करोषि, तत् तव भर्तृसक्तोऽपमृत्युः तस्य सञ्चरति, (ख) भर्त्तापि पुनः वर्षशतं जीवति। तेन त्वं मया अभ्यर्थितः। तद्यत् किञ्चित् कर्त्तुमनाः तत् कुरुष्व। न हि देवतावचनम् अन्यथा भविष्यति इति निश्चयः, ततोऽन्तर्हासविकाशमुखः स तदुचितम् आचचार। सोऽपि रथकारो मूर्खः तस्याः तद्वचनमाकर्ण्य पुलकाङ्किततनुः (ग) शय्याधस्तलात् निष्क्रम्य तामुवाच, साधु पतिव्रते ! साधु कुलनन्दिनि ! (घ)

---

(च) विधिनियोगात् दैवनिर्बन्धात्।

(क) सन् अपि विद्यमानोऽपि प्रतीकार इति शेषः। आयत्तः अधीनः।

(ख) भर्तृसक्तः पतिलग्नः पत्यौ नियत इत्यर्थः। तस्य परपुरुषस्य सञ्चरति भवति इत्यर्थः तव भर्त्तुरपमृत्युस्तस्मिन् परपुरुषे सञ्चरति इत्यर्थः।

(ग) पुलकेति। पुलकैः रोमाञ्चैरङ्किता व्याप्ता तनुः शरीरं यस्य तथाभूतः रोमाञ्चितशरीर इत्यर्थः।

(घ) कुलनन्दिनि ! वंशानन्ददायिनि !।

अहं दुर्जनवचनशङ्कितहृदयः त्वत्परीक्षानिमित्तं ग्रामान्तर-व्याजं (ङ) कृत्वा अत्र खट्वाधस्तले निभृतं लीनः (च)। तत् एहि आलिङ्गय मां, त्वं स्वभर्तृभक्तानां मुख्या नारीणां यत् एव ब्रह्मव्रतं परसङ्गेऽपि (छ) पालितवती। मदायुर्वृद्धिकृते-(ज)ऽपमृत्युविनाशार्थञ्च त्वमेवं कृतवती। तामेव मुक्त्वा सस्नेहम् आलिङ्गितवान्। स्वस्कन्धे ताम् आरोप्य तमपि देवदत्तम् उवाच, भो महानुभाव! मत्पुण्यैः त्वमिह आगतः, त्वत्-प्रसादात् मया प्राप्तं वर्षशतप्रमाणमायुः। तत् त्वमपि माम् आलिङ्ग्य मत्स्कन्धे समारोह। इति जल्पन् अनिच्छन्तमपि देवदत्तमालिङ्ग्य बलात् स्वकीयस्कन्धे आरोपितवान्। ततश्च नृत्यं कृत्वा, हे ब्रह्मव्रतधराणां धुरीण! (झ) त्वयापि मयि उपकृतम् इत्यादि उक्त्वा स्कन्धात् उत्तार्य्य, यत्र यत्र स्वजनगृह-द्वारादिषु बभ्राम, तत्र तत्र तयोः उभयोरपि तद्गुणवर्णनम् अकरोत्। अतोऽहं ब्रवीमि,

प्रत्यक्षेऽपि कृते पापे मूर्खः साम्ना प्रशाम्यति।
रथकारः स्वकां भार्य्यां सजारां शिरसावहत्॥ २०६॥

तत् सर्वथा मूलोत्खाता (ञ) वयं विनष्टाः स्मः। सुष्ठु खलु इदमुच्यते,

---

(ङ) ग्रामान्तरव्याजं ग्रामान्तरगमनरूपं छलम्।

(च) लीनः स्थितः।

(छ) ब्रह्मव्रतं तपोरूपं व्रतं नियमः। परसङ्गे परपुरुषसहवासे। पालितवती रक्षितवती।

(ज) मदिति मम आयुर्वृद्धिकृते परमायुर्वर्द्धनाय।

(झ) धुरीण! अग्रणीः।

(ञ) मूलोत्खाताः मूलेन सह उत्खाता उन्मूलिताः।

मित्ररूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये हितं वाक्यमुत्सृज्य विपरीतोपसेविनः॥ २०७॥

तथा च, सन्तोऽप्यर्था विनश्यन्ति देशकालविरोधिनः।
अप्राज्ञान् मन्त्रिणः प्राप्य तमः सूर्योदये यथा॥ २०८॥

ततः तद्वचोऽनादृत्य सर्वे ते स्थिरजीविनमुत्क्षिप्य (ट) स्वदुर्गमानेतुमारब्धाः। अथ आनीयमानः स्थिरजीवी आह, देव! अद्य अकिञ्चित्करेण एतदवस्थेन किं मया उपसंगृहीतेन (ठ) यत्कारणमिच्छामि दीप्तं वह्निमनुवेष्टुम् (ड)। तत् अर्हसि मामग्निप्रदानेन समुद्धर्तुम् (ढ)। अथ रक्ताक्षः तस्य अन्तर्गतभावं ज्ञात्वा अब्रवीत्, किमर्थम् अग्निपतनमिच्छसि। सोऽब्रवीत्, अहं तावद् युष्मदर्थे इमाम् आपदं मेघवर्णेन प्रापितः। तदिच्छामि तेषां वैरयातनार्थम् उलूकत्वमिति (ण)। तच्च श्रुत्वा राजनीतिकुशलो रक्ताक्षः प्राह, भद्र! कुटिलस्त्वं कृतकवचनचतुरश्च। तत् त्वम् उलूकयोनिगतोऽपि

---

मित्रेति। ये जनाः हितं वाक्यम् उत्सृज्य परित्यज्य विपरीतम् उपसेवन्ते इति तथोक्ताः विरुद्धमाचरन्ति इत्यर्थः, विचक्षणैः विद्वद्भिः ते मित्ररूपा बन्धुरूपधारिणः रिपवः यथार्थाः शत्रवः सम्भाव्यन्ते हि मन्यन्ते एव॥ २०७॥

सन्त इति। सूर्योदये तमः अन्धकारं यथा देशकालविरोधिनः देशकालविरुद्धबुद्धीनित्यर्थः अप्राज्ञान् अविचक्षणान् मन्त्रिणः प्राप्य सन्तोऽपि अर्थाः वस्तूनि विनश्यन्ति विनाशं यान्ति॥ २०८॥

(ट) उत्क्षिप्य उत्तोल्य।

(ठ) अकिञ्चित्करेण किमपि कर्तुमक्षमेण इत्यर्थः एतदवस्थेन एतामवस्थां प्राप्तेन। उपसंगृहीतेन सयत्नं गृहीतेन।

(ड) दीप्तं प्रज्वलितम्। अनुवेष्टुं प्रवेष्टुम्।

(ढ) समुद्धर्तुं सम्यक् परित्रातुम् इत्यर्थः।

(ण) उलूकत्वं पेचकत्वम् इच्छामि मृतः सन् उलूकीभूय स्ववैरिणं निर्यातयितुमभिलषामि इत्यर्थः।

स्वकीयामेव वायसयोनिं बहुमन्यसे। श्रूयते च एतदाख्यानकम् (त)।

सूर्य्यं भर्त्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा ॥२०९॥

मन्त्रिणः प्रोचुः, कथमेतत्? रक्ताक्षः कथयति।

## कथा १२।

अस्ति विषमशिलातल-स्खलिताम्बुनिर्घोष-श्रवणसन्त्रस्त-मत्स्यपरिवर्त्तनसञ्जनितश्वेतफेनशवलतरङ्गाया (थ) गङ्गायाः तटे जपनियमतपःस्वाध्यायोपवासयोगक्रियानुष्ठानपरायणैः परिपूतपरिमितजलजिघृक्षुभिः (द) कन्दमूलफलशैवलाभ्यवहारकदर्थितशरीरैः (ध) वल्कलकृतकौपीनमात्रप्रच्छादनैः तप-

---

(त) आख्यानकम् इतिवृत्तम्।

सूर्य्यमिति। मूषिका सूर्य्यं पर्जन्यं मेघं मारुतं वायुं गिरिं पर्वतं भर्त्तारम् उत्सृज्य विहाय स्वजातिं प्राप्ता यतः स्वजातिः दुरतिक्रमा दुस्त्यजा नैव स्वा जातिस्त्यक्तुं शक्यते इत्यर्थः ॥ २०९ ॥

(थ) विषमेति। विषमेषु उन्नतानतेषु शिलातलेषु स्खलितानां पतितानाम् अम्बूनां जलानां निर्घोषस्य कलकलरवस्य श्रवणात् सन्त्रस्ताः सम्यक् भीता ये मत्स्याः तेषां परिवर्त्तनेन उल्लम्फनप्रलम्फनेन सञ्जनिता ये श्वेताः शुक्लाः फेनाः तैः शवलाः चित्रिताः मिश्रा इत्यर्थः तरङ्गा यस्याः तथाभूतायाः।

(द) जपेति। जपः मनसा मन्त्रोच्चारणं, नियमः इन्द्रियनिग्रहः तपश्चान्द्रायणादि, स्वाध्यायः वेदाध्ययनम् उपवासः अहोरात्राभोजनरूपः योगः समाधिः जीवब्रह्मणोरैक्यचिन्तनमित्यर्थः क्रिया होमादिका एतासाम् अनुष्ठानम् आचरणं परं श्रेष्ठम् अयनम् आश्रयो येषां तैः। परिपूतेति परिपूतानां विशुद्धानां पवित्राणामित्यर्थः परिमितानाम् अल्पानां जलानां जिघृक्षुभिः ग्रहीतुमिच्छुभिः यत्किञ्चिज्जलपायिभिरिति भावः।

(ध) कन्देति। कन्दानां मूलविशेषाणां मूलानां मूलकादीनां फलानां कदल्यादीनां शैवलानाञ्च अभ्यवहारेण कदर्थितानि क्लेशितानि शरीराणि यैः तथाभूतैः।

भिभिः आकीर्णमाश्रमपदम् (न)। तत्र याज्ञवल्क्यो नाम कुलपतिः (प) आसीत्। तस्य जाह्नव्यां स्नात्वा उपस्प्रष्टुम् आरब्धस्य करतले श्येनमुखात् (फ) परिभ्रष्टा मूषिका पतिता। तां दृष्ट्वा न्यग्रोधपत्रेऽवस्थाप्य, (ब) पुनः स्नात्वा उपस्पृश्य च, प्रायश्चित्तादिक्रियां (भ) कृत्वा च, मूषिकां तां स्वतपोबलेन कन्यकां कृत्वा समादाय स्वाश्रमम् आनिनाय। अनपत्याञ्च जायामाह, (म) भद्रे! गृह्यतामियं तव दुहितोत्पन्ना प्रयत्नेन संवर्द्धनीयेति। ततः तया (य) संवर्द्धिता लालिता पालिता च यावत् द्वादशवर्षा संजज्ञे। अथ विवाहयोग्यां तां दृष्ट्वा भर्त्तारमेव जाया उवाच, भो भर्त्तः! किमिदं न अवबुध्यसे यथा अस्याः स्वदुहितुर्विवाहसमयातिक्रमो भवति, असौ आह, साधु उक्तम्। उक्तञ्च,

स्त्रियः पूर्वं सुरैर्भुक्ताः सोमगन्धर्ववह्निभिः।
भुञ्जते मानुषाः पश्चात् तस्माद्दोषो न विद्यते ॥२१०॥

---

(न) वल्कलेति। वल्कलेन तरुत्वचा कृतं यत् कौपीनं तदेव तन्मात्रं प्रच्छादनम् आच्छादनं वसनमित्यर्थः येषां तथोक्तैः। आकर्णं व्याप्तम्। आश्रमपदं धर्मचैवं तपोवनम् इत्यर्थः।

(प) कुलपतिः बहूनां तापसानामधिपतिः इत्यर्थः।

(फ) जाह्नव्यां गङ्गायाम्। उपस्प्रष्टुम् आचमितुम्। श्येनमुखात् श्येनस्य पक्षिविशेषस्य मुखात्।

(ब) न्यग्रोधपत्रे वटपत्रे। अवस्थाप्य संस्थाप्य।

(भ) पुनः स्नात्वा अपवित्रस्पर्शादिति भावः। उपस्पृश्य आचम्य। प्रायश्चित्तादिक्रियाम् अपवित्रस्पर्शजनितदुरदृष्टशान्त्यादिव्यापारम्।

(म) अनपत्यां निःसन्तानाम्।

(य) तया याज्ञवल्क्यपत्न्या।

स्त्रिय इति। पूर्वं पुरा स्त्रियः सोमगन्धर्ववह्निभिः सुरैः देवैः भुक्ताः, पश्चात् मानुषाः भुञ्जते, तस्मात् सुरैः पूर्वभोगादित्यर्थः दोषः तासामिति शेषः न विद्यते ॥ २१० ॥

सोमस्तासां ददौ शौचं गन्धर्वाः शिक्षितां गिरम्।
पावकः सर्वमेध्यत्वं तस्मान्निष्कल्मषाः स्त्रियः ॥२११॥
असम्प्राप्तरजा गौरी प्राप्ते रजसि रोहिणी।
अव्यञ्जना भवेत् कन्या कुचहीना च नग्निका ॥ ११२॥
व्यञ्जनैस्तु समुत्पन्नैः सोमो भुङ्क्ते हि कन्यकाम्।
पयोधराभ्यां गन्धर्वा रजस्यग्निः प्रतिष्ठितः ॥ २१३ ॥
तस्माद्विवाहयेत् कन्यां यावन्नर्त्तुमती भवेत्।
विवाहश्चाष्टवर्षीयाः कन्यायास्तु प्रशस्यते ॥ २१४ ॥
व्यञ्जनं हन्ति वै पूर्वं परं चैव पयोधरौ।
रतिरिष्टांस्तथा लोकान् हन्याच्च पितरं रजः ॥ २१५ ॥
ऋतुमत्यां तु तिष्ठन्त्यां स्वेच्छादानं विधीयते।
तस्मादुद्वाहयेन्नग्नां मनुः स्वायम्भुवोऽब्रवीत् ॥ २१४ ॥

---

सोम इति। सोमश्चन्द्रः तासां भुक्तानां स्त्रीणामित्यर्थः शौचं शुद्धिं पवित्रता-मित्यर्थः ददौ भोगेन प्रीतः सन् यूयं पवित्रा भवत इति वरमदादित्यर्थः अतः स्त्रियः सर्वाः पवित्रा इति भावः। गन्धर्वाः तासां शिक्षितां स्वभावतः कृतशिक्षा-मिवेत्यर्थः मतिं बुद्धिं भोगसन्तुष्टतया वरत्वेन ददुरित्यनुषङ्गः। पावकः अग्निः सर्वमेध्यत्वं सर्वाङ्गेषु पवित्रत्वं भोगप्रीततया वरत्वेन प्रादादित्यनुषज्यते। तस्मात् स्त्रियः निष्कल्मषाः निष्पापाः ॥ २११ ॥

असम्प्राप्तेति। असम्प्राप्तम् अनुदितं रजः आर्त्तवं यस्याः सा गौरी. रजसि प्राप्ते आगते जाते इत्यर्थः रोहिणी अविद्यमानं व्यञ्जनं चिह्नं यस्याः तादृशी कन्या, कुचहीना अनुदितकुचेत्यर्थः नग्निका भवेत् ॥ २१२ ॥

व्यञ्जनैरिति। सोमश्चन्द्रः व्यञ्जनैः चिह्नैः समुत्पन्नैः उपलक्षितामिति शेषः कन्यकां भुङ्क्ते हि साम्प्रतमपि भुङ्क्ते इत्यर्थः। पयोधराभ्यां स्तनाभ्याम् उप-लक्षितां गन्धर्वा भुञ्जते इति शेषः। रजसि जाते इति शेषः अग्निः प्रतिष्ठितः भोक्तुं प्रवृत्तः भवतीति शेषः ॥ २१३ ॥

तस्मादिति। तस्मात् यावत् न ऋतुमती भवेत् तावत् कन्यां विवाहयेत् उद्वाहयेत्। अष्टवर्षीयास्तु कन्यायाः तुशब्दोऽवधारणार्थः विवाहः प्रशस्यते ॥ २१४ ॥

पितृवेश्मनि या कन्या रजः पश्यत्यसंस्कृता।
अविवाह्या तु सा कन्या जघन्या वृषली स्मृता ॥२१७॥
श्रेष्ठेभ्यः सदृशेभ्यश्च जघन्येभ्यो रजस्वला।
पित्रा देया विनिश्चित्य यतो दोषो न विद्यते ॥ २१८॥

अतोऽहमेनां सदृशाय प्रयच्छामि न अन्यस्मै। उक्तञ्च,

यथोरेव समं वित्तं ययोरेव समं कुलम्।
तयोर्विवाहः सख्यं च न तु पुष्टविपुष्टयोः ॥ २१९ ॥

तथाच, कुलञ्च शीलञ्च सनाथता च
विद्या च वित्तञ्च वपुर्वयश्च।

---

व्यञ्जनमिति। व्यञ्जनं स्त्रीचिह्नविशेषः प्रकटितमिति भावः पूर्वं प्राक्तनं पुण्यमिति शेषः हन्ति नाशयति, पयोधरौ स्तनौ परं परत्रलभ्यं पुण्यमिति शेषः हत इति शेषः, रतिः सुरतः इष्टान् लोकान् स्वर्गादीन् तथा रजः पितरं हन्यात् पातयेदित्यर्थः। स्त्रीव्यञ्जनादीनां सम्भवात् प्राक् कन्यादानं कर्त्तव्यमिति भावः ॥ २१५ ॥

ऋतुमत्यामिति। ऋतुमत्यां रजस्वलायां कन्यायामिति शेषः तिष्ठन्त्यां सत्यां स्वेच्छादानं कन्याया इच्छानुसारेण दानं विधीयते न तदानीं पित्रादीनां पात्रापात्रपरीक्षणं कर्त्तव्यं कन्या यमभिलषेत् तस्मै एव दातव्यमिति भावः। तस्मात नग्नाम् अरजस्कामित्यर्थः नग्निका नागतार्त्तवेत्यमरः। उद्वाहयेत्। सायम्भुवः ब्रह्मसुतः मनुः अब्रवीत् इति शेषः ॥ २१६ ॥

पितृवेश्मनीति। या कन्या पितृवेश्मनि पितृगृहे स्थितेति शेषः असंस्कृता अविवाहिता सती रजः आर्त्तवं पश्यति, सा कन्या अविवाह्या न उद्वाह्या, जघन्या अधमा तथा वृषली शूद्रा स्मृता ॥ २१७ ॥

श्रेष्ठेभ्य इति। यतो यथा दोषो न विद्यते तथा विनिश्चित्य विचार्य्य पित्रा सा रजस्वला जघन्येभ्यः अधमेभ्यः अपि श्रेष्ठेभ्यः सदृशेभ्यः सवर्णेभ्यः जघन्येषु मध्ये ये श्रेष्ठाः सदृशाश्च तेभ्य इत्यर्थः देया ॥ २१८ ॥

ययोरिति। ययोर्जनयोः समं तुल्यं वित्तं धनं ययोरेव समं कुलम्, तयोः विवाहः सख्यं मैत्री च शस्तमिति शेषः पुष्टविपुष्टयोः सधननिर्धनयोः न तु नैव शस्तमिति शेषः ॥ २१९ ॥

एतान् गुणान् सप्त विचिन्त्य देया
कन्या बुधैः शेषमचिन्तनीयम्॥ २२०॥

तत् यदि अस्या रोचते तदा भगवन्तम् आदित्यमाहूय तस्मै प्रयच्छामि। सा प्राह, इह को दोषः? क्रियताम् एतत्। अथ मुनिना रविराहूतः। वेदमन्त्रामन्त्रणप्रभावात्(र) तत्क्षणादेवाभ्युपगम्यादित्यः प्रोवाच, भगवन्! किमहम् आहूतः? सोऽब्रवीत्, एषा मदीया कन्यका तिष्ठति। यदि एषा त्वां वृणोति तर्हि उद्वहस्वेति। एवमुक्त्वा स्वदुहितरम् उवाच, पुत्रि! किं तव रोचते एष भगवान् त्रैलोक्यदीपको (ल) भानुः? पुत्रिका अब्रवीत्, तात! अतिदहनात्मकोऽयम्। न अहमेनम् अभिलषामि। तदस्मात् अन्यः प्रकृष्टतरः (व) कश्चित् आहूयताम्। अथ तस्याः तद्वचनं श्रुत्वा मुनिः भास्करमुवाच, भगवन्! त्वत्तोऽधिको(श)ऽस्ति कश्चित्? भास्करः प्राह, अस्ति मत्तोऽपि अधिको मेघो येन आच्छादितोऽहमदृश्यो भवामि। अथ मुनिना मेघमपि आहूय कन्या अभिहिता, पुत्रिके! अस्मै त्वां प्रयच्छामि। सा प्राह,

---

कुलञ्चेति। बुधैः विद्वद्भिः कुलञ्च, शीलञ्च चरित्रञ्च, सनाथता च सहायवत्त्वञ्च विद्या च वित्तञ्च धनञ्च, वपुः शरीरं सौष्ठवान्वितमिति शेषः वयश्च यौवनञ्च एतान् सप्त गुणान् विचिन्त्य विचार्य्य कन्या देया, पूर्वोक्तगुणसप्तकशालिने वराय दातव्येत्यर्थः शेषम् अतःपरं यत् भवितव्यमिति शेषः तत् अचिन्तनीयं न भावनीयं भाग्यायत्तत्वादिति भावः॥ २२०॥

(र) वेदमन्त्रेति। वेदमन्त्रेण यत् आमन्त्रणम् आह्वानं तस्य प्रभावात् बलात्।

(ल) त्रैलोक्यदीपकः त्रिलोकप्रकाशक इत्यर्थः। भानुः सूर्य्यः।

(व) प्रकृष्टतरः अत्युत्कृष्टः।

(श) अधिकः अधिकशक्तिमान्।

कृष्णवर्णोऽयं जड़ात्मा (ष) च। तदस्मात् अन्यस्य प्रधानस्य कस्यचित् मां प्रयच्छ। अथ मुनिना मेघोऽपि पृष्टः। भो भो मेघ! त्वत्तोऽपि अधिकोऽस्ति कश्चित्? मेघेनोक्तं, मत्तोऽपि अधिकोऽस्ति वायुः। वायुना हतो(स)ऽहं सहस्रधा यामि। तच्छ्रुत्वा मुनिना वायुराहूतः। आह च, पुत्रिके! किम् एष वायुस्ते विवाहाय उत्तमः प्रतिभाति? सा अब्रवीत्! तात! अतिचपलोऽयं तदस्मादपि अधिकः कश्चित् आनीयताम्। मुनिराह, वायो! त्वत्तोऽपि अधिकोऽस्ति कश्चित्? पवनेन उक्तं, मत्तोऽपि अधिकोऽस्ति पर्वतो येन संस्तभ्य (ह) बलवानपि अहं ध्रिये। अथ मुनिः पर्वतमाहूय कन्यामुवाच। पुत्रिके! त्वाम् अस्मै प्रयच्छामि। सा प्राह, तात! कठिनात्मकोऽयं स्तब्धश्च (च)। तत् अन्यस्मै देहि मां, मुनिना पर्वतः पृष्टः। भो पर्वतराज! त्वत्तोऽपि अधिकोऽस्ति कश्चित्, गिरिणा उक्तम्। मत्तोऽपि अधिकाः सन्ति मूषिका ये मच्छरीरं बलात् विदारयन्ति। ततो मुनिः मूषिकमाहूय तस्या अदर्शयत्। आह च पुत्रिके! त्वाम् अस्मै प्रयच्छामि किम् एष प्रतिभाति ते मूषिकराजः? सापि तं दृष्ट्वा स्वजातीय एष इति मन्यमाना (क) पुलकोद्भूषितशरीरोवाच। तात! मां मूषिकां कृत्वा अस्मै प्रयच्छ। येन स्वजातिविहितं गृह-

---

(ष) जड़ात्मा अचेतन इत्यर्थः।

(स) हतः खण्डितः।

(ह) येन पर्वतेन। संस्तभ्य निर्जित्य इत्यर्थः।

(च) स्तब्धः निश्चलः।

(क) पुलकेति। पुलकेन आनन्दजनितरोमाञ्चेन उद्भूषितम् अलङ्कृतं शरीरं यस्याः तथाभूता।

धर्मम् अनुतिष्ठामि। ततः सोऽपि स्वतपोबलेन तां मूषिकां कृत्वा तस्मै प्रादात्। अतोऽहं ब्रवीमि।

सूर्य्यं भर्त्तारमुत्सृज्य पर्जन्यं मारुतं गिरिम्।
स्वजातिं मूषिका प्राप्ता स्वजातिर्दुरतिक्रमा॥ २२१॥

अथ रक्ताक्षवचनम् अनादृत्य तैः स्ववंशविनाशाय स स्वदुर्गम् उपनीतः। नीयमानश्च अन्तर्लीनमवहस्य स्थिरजीवी व्यचिन्तयत्।

हन्यतामिति येनोक्तं स्वामिनो हितवादिना।
स एवैकोऽत्र सर्वेषां नीतिशास्त्रार्थतत्त्ववित्॥२२२॥

तद्यदि तस्य वचनम् अकरिष्यन् एते, ततो न स्वल्पोऽपि अनर्थोऽभविष्यत् एतेषाम्। अथ दुर्गद्वारं प्राप्य अरिमर्दनोऽब्रवीत्, भो! भो! हितैषिणोऽस्य स्थिरजीविनो यथासमीहितं स्थानं प्रयच्छत, तच्च श्रुत्वा स्थिरजीवी व्यचिन्तयत्, मया तावत् एतेषां बधोपायः चिन्तनीयः, स मया मध्यस्थेन (ख) न साध्यते। यतो मदीयम् इङ्गितादिकं (ग) विचारयन्तः तेऽपि सावधाना भविष्यन्ति, तद्दुर्गद्वारम् अधिश्रितोऽभिप्रेतं साधयामि। इति निश्चित्य उलूकपतिमाह, देव! युक्तमिदं यत् स्वामिना प्रोक्तं परमहमपि नीतिज्ञस्ते अहितश्च। यद्यपि अनुरक्तः (घ) शुचिस्तथापि दुर्गमध्ये आवासो (ङ) न अर्हः।

---

हन्यतामिति। स्वामिनो हितवादिना येन रक्ताक्षेण हन्यताम् इति उक्तम् अत्र सर्वेषां मध्ये स एव एकः केवलः नीतिशास्त्रार्थस्य तत्त्वं याथार्थ्यं वेत्तीति तथोक्तः॥ २२२॥

(ख) मध्यस्थेन उदासीनेन अयत्नवता इत्यर्थः।

(ग) इङ्गितादिकं चेष्टादिकम्।

(घ) अनुरक्तः भक्तः शुचिः निर्दोषः अहमिति शेषः।

(ङ) आवासः अवस्थानं ममेति शेषः। अर्हः योग्यः उचित इत्यर्थः।

तत् अहमत्र एव दुर्गद्वारस्थः प्रत्यहं भवत्पादपद्मरजःपवित्रीकृततनुः सेवां करिष्यामि। तथेति प्रतिपन्ने (च) प्रतिदिनम् उलूकपतिसेवकास्ते प्रकाममाहारं कृत्वा उलूकराजादेशात् प्रकृष्टमांसाहारं स्थिरजीविने प्रयच्छन्ति। अथ कतिपयैः एव अहोभिः मयूर इव स बलवान् संवृत्तः। अथ रक्ताक्षः स्थिरजीविनं पोष्यमाणं दृष्ट्वा सविस्मयो मन्त्रिजनं राजानञ्च प्रत्याह, अहो ! मूर्खोऽयं मन्त्रिजनो भवांश्च इति, एवमहम् अवगच्छामि। उक्तञ्च,

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम् ॥ २२३ ॥

ते प्राहुः, कथमेतत् ? रक्ताक्षः कथयति,

## कथा १३।

अस्ति कस्मिंश्चित् पर्वतैकदेशे महान् वृक्षः। तत्र च सिन्धुकनामा कोऽपि पक्षी प्रतिवसति स्म। तस्य पुरीषे (छ) सुवर्णमुत्पद्यते अथ कदाचित् तमुद्दिश्य व्याधः कोऽपि समाययौ। स च पक्षी तदग्रत एव पुरीषमुत्ससर्ज (ज)। अथ पातसमकालमेव (झ) तत् सुवर्णीभूतं दृष्ट्वा व्याधो विस्मयम्

---

(च) प्रतिपन्ने अङ्गीकृतवति इत्यर्थः।

पूर्वमिति। अहं तावत् पूर्वं प्रथमं मूर्खः आसमिति शेषः पाशेन बध्नातीति पाशबन्धकः व्याधः द्वितीयः मूर्ख इति शेषः। ततः अनन्तरं राजा च मन्त्री च मूर्ख इति शेषः अतः सर्वं वै सर्वमेव मूर्खमण्डलं मूर्खाणां समष्टिः इत्यर्थः ॥ २२३ ॥

(छ) पुरीषे विष्ठायाम्।

(ज) उत्ससर्ज तत्याज।

(झ) पातसमकालं पतनमात्रम्। तत् पुरीषमित्यर्थः। सुवर्णीभूतम् असुवर्णं सुवर्णं भूतमिति तथोक्तम्।

अगमत्। अहो! मम शिशुकालात् आरभ्य शकुनिबन्धव्यसनिन: (ञ) अशीतिवर्षाणि समभूवन्। न च कदाचित् अपि पक्षिपुरीषे सुवर्णं दृष्टम्। इति विचिन्त्य तत्र वृक्षे पाशं बबन्ध। अथ असौ अपि पक्षी मूर्खस्तत्रैव विश्वस्तचित्तो यथापूर्वम् (ट) उपविष्ट:। तत् कालमेव पाशेन बद्ध:। व्याधस्तु तं पाशात् उन्मुच्य (ठ) पञ्जरके संस्थाप्य निजावासं नीतवान्। अथ चिन्तयामास, किमनेन सापायेन (ड) पक्षिणा अहं करिष्यामि, यदि कदाचित् कोऽपि अमुमीदृशं ज्ञात्वा राज्ञे निवेदयिष्यति, तत् नूनं प्राणसंशयो मे भवेत्, अत: स्वयमेव पक्षिणं राज्ञे निवेदयामि। इति विचार्य्य तथैव अनुष्ठितवान्। अथ राजापि तं पक्षिणं दृष्ट्वा विकसितनयनवदनकमल: परां तुष्टिमुपागत:, प्राह च एवं, हंहो! रक्षापुरुषा! एनं पक्षिणं यत्नेन रक्षत अशनपानादिकं च अस्य यथेच्छं प्रयच्छत। अथ मन्त्रिणा अभिहितम्, किमनेन अश्रद्धेयव्याधवचनप्रत्ययमात्रपरिगृहीतेन अण्डजेन? (ढ) किं कदाचित् पक्षिपुरीषे सुवर्णं सम्भवति? तन्मुच्यतां पञ्जरबन्धनादयं पक्षी। इति मन्त्रिवचनात् राज्ञा मोचितोऽसौ पक्षी उन्नतद्वारतोरणे (ण) समुपविश्य सुवर्णमयीं विष्ठां विधाय, पूर्वं तावत् अहं मूर्ख

---

(ञ) शकुनिबन्धव्यसनिन: पक्षिबन्धनासक्तस्य।

(ट) यथापूर्वं पूर्ववत्।

(ठ) तत्कालमेव उपवेशनमात्रमेव। उन्मुच्य नि:सार्य्य।

(ड) सापायेन सविपदा।

(ढ) अश्रद्धेयेति। अश्रद्धेयम् अविश्वसनीयं यत् व्याधस्य वचनं तस्मिन् प्रत्ययमात्रेण परिगृहीत: तेन। अण्डजेन पक्षिणा।

(ण) उन्नतेति। उन्नतं द्वारं यत्र तादृशे तोरणे वहिर्द्वारप्रदेशे।

इति श्लोकं पठित्वा यथासुखम् आकाशमार्गेण प्रायात्। अतोऽहं ब्रवीमि।

पूर्वं तावदहं मूर्खो द्वितीयः पाशबन्धकः।
ततो राजा च मन्त्री च सर्वं वै मूर्खमण्डलम् ॥२२४॥

अथ ते पुनरपि प्रतिकूलदैवतया हितमपि रक्ताक्षवचनम् अनादृत्य भूयस्तं प्रभूतमांसादिविविधाहारेण पोषयामासुः। अथ रक्ताक्षः स्ववर्गमाहूय रहः प्रोवाच, अहो! एतावत् एव अस्मद् भूपतेः कुशलं दुर्गञ्च। तदुपदिष्टं मया यत् कुलक्रमागतः (त) सचिवोऽभिधत्ते। तद्वयमन्यत् पर्वतदुर्गं सम्प्रति समाश्रयामः। उक्तञ्च यतः,

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥ २२५ ॥

ते प्रोचुः, कथमेतत्? रक्ताक्षः कथयति,

## कथा १४।

कस्मिंश्चित् वनोद्देशे खरनखरो (थ) नाम सिंहः प्रतिवसति स्म। स कदाचित् इतश्चेतश्च परिभ्रमन् क्षुत्क्षामकण्ठो (द)

---

(त) कुलक्रमागतः वंशक्रमेणागतः सचिवः मन्त्री यत् अभिधत्ते वदति, तत् मया उपदिष्टं तथा उपदेशो दत्त इत्यर्थः।

अनागतमिति। यः अनागतम् अनुपस्थितं कुरुते भाविविपदमाशङ्क्य उपायं करोति इत्यर्थः स शोभते सुखेन वर्त्तते इत्यर्थः, यः अनागतं न करोति स शोच्यते विपन्नतया बन्धुभिः तदर्थं शोकः क्रियते इत्यर्थः। अत्र वने संस्थस्य स्थितस्य मम जरा वार्द्धक्यं समागता उपस्थिता, कदापि बिलस्य गह्वरस्य वाणी वचनं मे मया इत्यर्थः कर्त्तरि षष्ठी न श्रुता नाकर्णिता। वंशस्थबिलं वृत्तम् ॥ २२५ ॥

न किञ्चिदपि सत्त्वम् आससाद। ततश्च अस्तमनसमये (ध) महतीं गिरिगुहाम् आसाद्य प्रविष्टः चिन्तयामास। नूनम् (न) एतस्यां गुहायां रात्रौ केनापि सत्त्वेन आगन्तव्यम्। तत् निभृतो (प) भूत्वा तिष्ठामि। एतस्मिन्नन्तरे तत्स्वामी दधिपुच्छो (फ) नाम शृगालः समायातः, स च यावत् पश्यति, तावत् सिंहपदपद्धतिर्गुहायां (ब) प्रविष्टा न च निष्क्रमणं गता। ततश्च अचिन्तयत्, अहो! विनष्टोऽस्मि। नूनमस्यामन्तर्गतेन (भ) सिंहेन भाव्यम्। तत् किं करोमि? कथं ज्ञास्यामि? एवं विचिन्त्य द्वारस्थः फूत्कर्त्तुम् (म) आरब्धः अहो बिल! अहो बिल! इत्युक्त्वा तूष्णीम्भूय (य) भूयोऽपि तथा एव प्रत्यभाषत, भोः! किं न स्मरसि यत् मया त्वया सह समयः (र) कृतोऽस्ति। यत् मया बाह्यात् (ल) समागतेन त्वं वक्तव्यः। त्वया च अहमाकारणीय इति। तद्यदि मां न आह्वयसि ततोऽहं द्वितीयं बिलं यास्यामि। अथ तच्छ्रुत्वा सिंहः चिन्तितवान् नूनम् एषा गुहा अस्य समागतस्य

---

(थ) खरनखरः खरास्तीक्ष्णा नखराः यस्य तथोक्तः।

(द) क्षुदिति। क्षुधा क्षामः शुष्कः कण्ठो यस्य तादृशः।

(ध) सत्त्वं जीवम्। अस्तमनसमये सायंकाले।

(न) नूनं निश्चितम्।

(प) निभृतः निस्तब्धः।

(फ) दधिपुच्छः दधिवत् श्वेतं पुच्छं लाङ्गूलं यस्य तथाभूतः।

(ब) सिंहेति। सिंहस्य पदपद्धतिः पदप्रक्षेपचिह्नम्।

(भ) अन्तर्गतेन अन्तःस्थितेन।

(म) फूत्कर्त्तुम् आह्वातुम्।

(य) तूष्णीम्भूय मौनीभूय।

(र) समयः नियमः।

(ल) बाह्यात् बहिर्देशात्। वक्तव्यः आह्वातव्यः। आकारणीयः आह्वानीयः।

सदा समाह्वानं करोति। परम् अद्य मद्भयात् न किञ्चिद्ब्रूते। अथवा साधु इदमुच्यते।

भयसन्त्रस्तमनसां हस्तपादादिकाः क्रियाः।
प्रवर्त्तन्ते न वाणी च वेपथुश्चाधिको भवेत् ॥२२६॥

तत् अहमस्य आह्वानं करोमि येन तदनुसारेण प्रविष्टोऽयं मे भोज्यतां यास्यति। एवं सम्प्रधार्य्य सिंहः तस्याह्वानम् अकरोत्। अथ सिंहशब्देन सा गुहा प्रतिरवसम्पूर्णा (व) अन्यान् अपि दूरस्थान् अरण्यजीवान् त्रासयामास। शृगालोऽपि पलायमान इमं श्लोकम् अपठत्।

अनागतं यः कुरुते स शोभते
स शोच्यते यो न करोत्यनागतम्।
वनेऽत्र संस्थस्य समागता जरा
बिलस्य वाणी न कदापि मे श्रुता ॥ २२७ ॥

तदेवं मत्वा युष्माभिर्मया सह गन्तव्यमिति। एवमभिधाय आत्मानुयायिपरिवारानुगतो दूरदेशान्तरं रक्ताक्षो जगाम।

अथ रक्ताक्षे गते स्थिरजीवी अतिहृष्टमना व्यचिन्तयत्, अहो! कल्याणमस्माकम् उपस्थितं यत् रक्ताक्षो गतः। यतः

---

भयेति। भयेन सन्त्रस्तम् आक्रान्तं मनो येषां तथोक्तानां जनानां हस्तपादादिकाः क्रियाः व्यापाराः न प्रवर्त्तन्ते, वाणी च वाक् च न प्रवर्त्तते इति शेषः वेपथुश्च कम्पश्च अधिकः भवेत् ॥ २२६ ॥

(व) प्रतिरवसम्पूर्णा प्रतिध्वनिपूरिता।

नेति। यस्य महीपतेः मन्त्रिणः क्रमायाताः कुलक्रमागताः तथा दीर्घदर्शिनः बहुदर्शनशीलाः न स्युः, तस्य न चिरात् अविलम्बेनैव ध्रुवं निश्चयेन परिच्चयः विनाशः स्यात् ॥ २२८ ॥

स दीर्घदर्शी, एते च मूढ़मनसः ततो मम सुखघात्या सञ्जाताः। उक्तञ्च यतः,

न दीर्घदर्शिनो यस्य मन्त्रिणः स्युर्महीपतेः।
क्रमायाता ध्रुवं तस्य न चिरात् स्यात् परिच्चयः ॥२२८॥

अथवा साधु इदमुच्यते,

मन्त्रिरूपा हि रिपवः सम्भाव्यन्ते विचक्षणैः।
ये सन्तं नयमुत्सृज्य सेवन्ते प्रतिलोमतः ॥ २२९ ॥

एवं विचिन्त्य स्वकुलाये (श) एकैकां वनकाष्ठिकां गुहा-दीपनार्थं दिने दिने प्रक्षिपति। न च ते मूर्खा उलूका विजानन्ति। यत् एष कुलायम् अस्मद्दाहाय वृद्धिं नयति। अथवा साधु इदमुच्यते।

अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च।
शुभं वेत्त्यशुभं पापं भद्रं दैवहतो नरः ॥ २३० ॥

अथ कुलायव्याजेन (ष) दुर्गद्वारे कृते काष्ठनिचये सञ्जाते सूर्योदयेऽन्धतां प्राप्तेषु उलूकेषु सत्सु स्थिरजीवी शीघ्रं गत्वा मेघवर्णमाह, स्वामिन्! दाहसाध्या (स) कृता रिपुगुहा।

---

मन्त्रिरूपा इति। ये सन्तं शोभनं नयं नीतिमार्गम् उत्सृज्य विहाय प्रतिलोमतः प्रातिकूल्येन सेवन्ते प्रभुमिति शेषः ते मन्त्रिरूपाः अमात्यव्यपदेशाः रिपवः शत्रवः विचक्षणैः विद्वद्भिः सम्भाव्यन्ते मन्यन्ते ॥ २२९ ॥

(श) स्वकुलाये निजनीड़े। वनकाष्ठिकां वनस्य काष्ठम्। गुहादीपनार्थं दुर्गप्रज्वालनार्थम्।

अमित्रमिति। दैवेन भाग्येन हतो विनाशितः प्रतिकूलदैव इत्यर्थः नरः अमित्रं मित्रं कुरुते, मित्रं द्वेष्टि हिनस्ति च। शुभम् अशुभं तथा पापम् अमङ्गलं भद्रं मङ्गलं वेत्ति बुध्यते च ॥ २३० ॥

(ष) कुलायव्याजेन नीड़वृद्धिच्छलेन।

(स) दाहसाध्या दाहेन साध्या नेतव्या।

तत् सपरिवारः समेत्य एकैकां वनकाष्ठिकां ज्वलन्तीं गृहीत्वा गुहाद्वारे अस्मत्कुलाये प्रक्षिप, येन सर्वे शत्रवः कुम्भीपाकनरकप्रायेण (ङ) दुःखेन म्रियन्ते। तत् श्रुत्वा प्रहृष्टो मेघवर्ण आह, तात! कथय आत्मवृत्तान्तम्। चिरात् अद्य दृष्टोऽसि। स आह, वत्स! नायं कथनस्य कालः। यतः कदाचित् तस्य रिपोः कश्चित् प्रणिधिर्मम इह आगमनं निवेदयिष्यति। तज्ज्ञानात् अन्धोऽन्यत्र अपसरणं करिष्यति। तत् त्वर्य्यताम्। उक्तञ्च,

शीघ्रकृत्येषु कार्य्येषु विलम्बयति यो नरः
तत् कृत्यं देवतास्तस्य कोपाद्विघ्नन्त्यसंशयम् ॥ २३१ ॥

तथाच, यस्य यस्य हि कार्य्यस्य फलितस्य विशेषतः।
क्षिप्रमक्रियमाणत्वं कालः पिबति तत्फलम् ॥२३२॥

तद्गुहायाम् आयातस्य ते हतशत्रोः (च) सर्वं सविस्तारं निर्व्याकुलतया कथयिष्यामि। अथ असौ तद्वचनम् आकर्ण्य सपरिजन एकैकां ज्वलन्तीं वनकाष्ठिकां चञ्च्वग्रेण गृहीत्वा तद्गुहाद्वारं प्राप्य स्थिरजीविकुलाये प्राक्षिपत्। ततः सर्वे ते दिवान्धा रक्ताक्षवाक्यानि स्मरन्तो द्वारस्य आवृतत्वात् अनिः-

---

(ङ) कुम्भीपाकेति। यथा कुम्भीपाकाख्ये नरके नारकिणः पच्यन्ते तथा अग्निदाहेन रिपवः म्रियन्ते निधनं यान्ति।

शीघ्रेति। यः नरः शीघ्रकृत्येषु अविलम्बं करणीयेषु कार्य्येषु विलम्बयति चिरयति, देवताः तस्य कोपात् तं प्रति क्रोधात् तत् कृत्यम् असंशयम् निःसन्देहं विघ्नन्ति नाशयन्ति ॥ २३१ ॥

यस्येति। यस्य यस्य विशेषतः फलितस्य फलोन्मुखस्य कार्य्यस्य क्षिप्रं शीघ्रम् अक्रियमाणत्वम् अविलम्बाननुष्ठानम् इत्यर्थः स्यादिति शेषः, कालः विलम्बरूप इति भावः तस्य कार्य्यस्य फलं पिबति हिनस्ति इत्यर्थः।

(च) हतशत्रोः निहतवैरिणः। निर्व्याकुलतया निःशङ्कतया।

सरन्तो (क) गुहामध्ये कुम्भीपाकन्यायम् आपन्ना (ख) मृताश्च। एवं शत्रून् निःशेषतां नीत्वा भूयोऽपि मेघवर्णः तदेव न्यग्रोधपादपदुर्गं जगाम। ततः सिंहासनस्थो भूत्वा सभामध्ये प्रमुदितमनाः स्थिरजीविनम् अपृच्छत्, तात! कथं त्वया शत्रुमध्ये गतेन एतावत् कालो नीतः? तदत्र कौतुकम् अस्माकं वर्त्तते। तत् कथ्यताम्,

यतः, वरमग्नौ प्रदीप्ते तु प्रपातः पुण्यकर्मणाम्।
न चारिजनसंसर्गो मुहूर्त्तमपि सेवितः ॥ २३३ ॥

तत् आकर्ण्य स्थिरजीवी आह, भद्र! आगामिफलवाञ्छया कष्टमपि सेवको न जानाति (ग)। उक्तञ्च यतः,

उपनतभयैर्यो यो मार्गो हितार्थकरो भवेत्
स स निपुणया बुद्ध्या सेव्यो महान् कृपणोऽपि वा।
करिकरनिभौ ज्याघाताङ्कौ महार्थविशारदौ
रचितवलयैः स्त्रीवद्बद्धौ करौ हि किरीटिना ॥२३४॥

---

(क) आवृतत्वात् बद्धत्वात्। अनिःसरन्तः निर्गन्तुमशक्नुवन्तः।

(ख) आपन्नाः आपत्पतिता दह्यमाना इति भावः।

वरमिति। पुण्यकर्मणां जनानां प्रदीप्ते प्रज्वलिते अग्नौ प्रपातस्तु प्रपतनमपि वरं मनाक् प्रियः, मुहूर्त्तमपि क्षणमपि सेवितः कृतः अरिसंसर्गः शत्रुमध्यवासः न च वरमित्यनुषङ्गः ॥ २३३ ॥

(ग) आगामीति। आगामिनः भाविनः फलस्य कार्य्यस्य वाञ्छया प्रत्याशया। जानाति गणयति।

उपनतेति। उपनतम् उपस्थितं भयं येषां तैः विपन्नैरित्यर्थः जनैः यो यो मार्गः पन्था उपाय इत्यर्थः हितार्थकरः हितकार्य्यकारी भवेत्, निपुणया शोभनया चतुरया इत्यर्थः बुद्ध्या स स मार्गः महान् उत्कृष्टः कृपणो वा अधमो वा विपत्सङ्कुलो वा इत्यर्थः सेव्यः आश्रयणीयः। हि तथाहि किरीटिना अर्जुनेन करिकरनिभौ हस्तिशुण्डसदृशौ ज्याघाताङ्कौ मौर्वीकिणचिह्नितौ महार्थविशारदौ विपुलार्थसाधने विख्यातावित्यर्थः करौ बाहू स्त्रीवत् नारीवत् रचितैः कल्पितैः

शक्तेनापि सदा नरेन्द्रविदुषा कालान्तरापेक्षिणा
वस्तव्यं खलु वाक्यवज्रविषमे क्षुद्रेऽपि पापे जने ।
दर्वीव्यग्रकरेण धूममलिनेनायासयुक्तेन च
भीमेनातिबलेन मत्स्यभवने किं नोषितं सूदवत् ? ॥२३५॥
यद्वा तद्वा विषमपतितं साधु वा गर्हितं वा
कालापेक्षी हृदयनिहितं बुद्धिमान् कर्म कुर्य्यात् ।
किं गाण्डीवस्फुरदुरुघनास्फालनक्रूरपाणि:
नासील्लीलानटनविलसन् मेखली सव्यसाची २३६ ॥

---

कपटनिर्मितै: इत्यर्थ: वलयै: बद्धौ अलङ्कृतौ इत्यर्थ: अज्ञातवासे विराटालये स्थितौ इति शेष: । विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यास: । हरिणीवृत्तम् । २३४ ॥

शक्तेनेति । हे नरेन्द्र ! राजन् ! विदुषा विज्ञेन शक्तेनापि समर्थेनापि कालान्तरापेक्षिणा परिणामहितार्थिना इत्यर्थ: वाक्यमेव वज्रम् अतिकटुत्वात् कुलिशोपममित्यर्थ: तेन विषमे दु:सहे इत्यर्थ: क्षुद्रे नीचे पापे दुराचारे जने दुर्जनसमीपे इत्यर्थ: सदा वस्तव्यं वास: कर्त्तव्य: खलु । तथाहि अतिबलेन महाबलशालिना भीमेन मत्स्यभवने विराटगृहे दर्वीव्यग्रकरेण दर्वी पाकसाधनद्रव्यविशेष: तस्यां तद्ग्रहणे इति भाव: व्यग्र: नियत: करो यस्य तादृशेन धूममलिनेन सततरन्धनशालायामवस्थानादिति भाव: आयासयुक्तेन क्लेशसहेन च सता सूदवत् पाचकवत् किं न उषितं न स्थितम् ? अपितु स्थितमेव इत्यर्थ: । कार्य्यार्थिना क्लेशो न गणनीय इति भाव: । विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्तरन्यास: । शार्दूलविक्रीड़तं वृत्तम् ॥ १३५ ॥

यद्वेति । विषमे विपदि पतित: अतएव कालापेक्षी समयं प्रतीक्षमाण: बुद्धिमान् जन: यद्वा तद्वा साधु वा गर्हितम् असाधु वा हृदयनिहितं हृदयेन मनसा निहितं कर्त्तव्यत्वेन निरूपितं कर्म कुर्य्यात् । सव्यसाची अर्जुन: गाण्डीवस्य स्वधनुष: स्फुरता प्रसरता उरुणा महता घनेन सान्द्रेण अनवरतेन आस्फालनेन मौर्वीयोजनेन क्रूरौ कठिनौ पाणी यस्य तथाभूतोऽपि मेखली काञ्चीधारी सन् लीलया विलासेन यत् नटनं नर्त्तनं तेन विलसन् विहरन् न आसीत् ? अपितु आसीदेव इत्यर्थ: । विशेषेण सामान्यसमर्थनरूपोऽयमर्थान्यरन्यास: । मन्दाक्रान्तावृत्तम् ॥ २३६ ॥

सिद्धिं प्रार्थयता जनेन विदुषा तेजो निगृह्य स्वकं
सत्त्वोत्साहवतापि दैवविधिषु स्थैर्य्यं प्रकार्य्यं क्रमात्।
देवेन्द्रद्रविणेश्वरान्तकसमैरप्यन्वितो भ्रातृभिः
किं क्लिष्टः सुचिरं त्रिदण्डमवहत् श्रीमान्न धर्मात्मजः॥२३७॥
रूपाभिजनसम्पन्नौ कुन्तीपुत्रौ बलान्वितौ।
गोकर्मरक्षाव्यापारे विराटप्रेष्यतां गतौ॥ २३८॥
रूपेणाप्रतिमेन यौवनगुणैः श्रेष्ठे कुले जन्मना
कान्त्या श्रीरिव यात्र सापि विदशां कालक्रमादागता।
सैरिन्ध्रीति सगर्वितं युवतिभिः साक्षेपमज्ञातया
द्रौपद्या ननु मत्स्यराजभवने घृष्टं न किं चन्दनम्?॥२३९॥

---

सिद्धिमिति। विदुषा विचक्षणेन सिद्धिं कार्य्यस्येति शेषः प्रार्थयता अभिलषता जनेन सत्त्वोत्साहवतापि बलवता उत्साहिनापि इत्यर्थः स्वकं स्वीयं तेजः निगृह्य नियम्य दैवविधिषु दुर्दैवघटनासु इत्यर्थः क्रमात् स्थैर्य्यं धैर्य्यम् इत्यर्थः प्रकार्य्यम् आश्रयणीयम्। तथाहि श्रीमान् साम्राज्यलक्ष्मीसम्पन्नः धर्मात्मजः युधिष्ठिरः देवेन्द्रद्रविणेश्वरान्तकसमैः इन्द्रकुवेरयमतुल्यैः भ्रातृभिरन्वितोऽपि परिवृतोऽपि सुचिरं दीर्घकालं क्लिष्टः विपदि पतितः सन् किं त्रिदण्डं न अवहत्? वनवासी अभवत् इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम्। अत्रापि अर्थान्तरन्यासोऽलङ्कारः॥ २३७॥

रूपेति। रूपाभिजनसम्पन्नौ परमरूपवन्तौ महाकुलप्रसूतौ च बलान्वितौ महाबलौ कुन्तीपुत्रौ नकुलसहदेवौ माद्रीपुत्राविति च पाठः। गोकर्मरक्षाव्यापारे पशुपालनकर्मणि रक्षणकर्मणि च विराटस्य प्रेष्यतां दासत्वं गतौ॥ २३८॥

रूपेणेति। अत्र जगति या श्रीरिव लक्ष्मीरिव अप्रतिमेन निरुपमेन रूपेण यौवनगुणैः स्थिरयौवनेन गुणैर्दयादाक्षिण्यादिभिः श्रेष्ठे महति कुले वंशे जन्मना उत्पत्त्या कान्त्या लावण्येन उपलक्षिता भवतीति शेषः सापि नारी इत्यर्थः कालक्रमात् दुःसमयवशात् विदशां विपरीतावस्थाम् आगता प्राप्ता भवति। ननु तथाहि युवतिभिः कामिनीभिः मत्स्यराजाङ्गनाभिः इत्यर्थः सैरिन्ध्रीति सगर्वितं साहङ्कारं साक्षेपं सतिरस्कारं वचनम् उक्तया इति शेषः अज्ञातया द्रौपद्या मत्स्यराजस्य विराटस्य भवने चन्दनं किं न घृष्टम्? अपितु घृष्टमेव॥ २३९॥

मेघवर्ण आह, तात ! असिधाराव्रतमिदं (घ) मन्ये यत् अरिणा सह संवासः। सोऽब्रवीत्, देव! एवमेतत् परं न तादृग्मूर्खसमागमः क्वापि मया दृष्टः। न च महाप्रज्ञम् अनेकशास्त्रेषु अप्रतिमबुद्धिं रक्ताक्षं विना धीमान् (ङ)। यत्-कारणं तेन मदीयं यथावस्थितं चित्तं ज्ञातम्। ये पुनः अन्ये मन्त्रिणस्ते महामूर्खा मन्त्रिमात्रव्यपदेशोपजीविनोऽतत्त्वकुशला (च) यैः इदमपि न ज्ञातम्। यतः,

अरितोऽभ्यागतो भृत्यो दुष्टस्तत्सङ्गतत्परः।
अपसर्प्य स धर्मत्वान्नित्योद्वेगी च दूषितः॥ २४०॥
आसने शयने याने पानभोजनवस्तुषु।
दृष्टादृष्टप्रमत्तेषु प्रहरन्त्यरयोऽरिषु॥ २४१॥
तस्मात् सर्वप्रयत्नेन त्रिवर्गनिलयं बुधः।
आत्मानमादृतो रक्षेत् प्रमादाद्धि विनश्यति॥ २४२॥

---

(घ) असिधाराव्रतम् असिधारोपरिस्थितावपि असिना न छिद्यते एवम्भूतं यत् व्रतं नियमः। घोरविकृतिकारणे सत्यपि अविकृतभावेन स्थितिरिति भावः।

(ङ) धीमान् बुद्धिमान् आसीत्तत्रेति शेषः।

(च) मन्त्रीति। मन्त्रिमात्रमेव व्यपदेशः आख्या तेन उपजीवन्ति इति तथोक्ताः। अतत्त्वकुशलाः अतत्त्वविदः।

अरित इति। अभ्यागतः आगन्तुकः अज्ञातकुलशील इति भावः तस्य आश्रमस्य इत्यर्थः सङ्ग तत्परः सङ्गार्थी सन् अरितः शत्रुतोऽपिरत्राध्याहार्यः। दुष्टः दुर्जन इत्यर्थः। सः अभ्यागतः दूषितः अतएव धर्मत्वात् धार्मिकत्वेन इत्यर्थः अपसर्प्य अनुगत्य नित्यं सततम् उद्वेगी उद्वेगजनकः भवतीति शेषः॥ २४०॥

आसने इति। अरयः शत्रवः आसने याने गमने पानभोजनवस्तुषु पानभोजनव्यापारेषु विषयेषु दृष्टादृष्टप्रमत्तेषु दृष्टेषु अदृष्टेषु प्रमत्तेषु अनवस्थितेषु इत्यर्थः अरिषु शत्रुषु प्रहरन्ति॥ २४१॥

तस्मादिति। तस्मात् कारणात् बुधः पण्डितः आदृतः यत्नवान् सन् सर्वप्रयत्नेन सर्वप्रकारेण त्रिवर्गनिलयं धर्मार्थकामाश्रयम् आत्मानं रक्षेत् हि यतः प्रमादात् अनवधानात् विनश्यति विनाशं प्राप्नोति आत्मा इति शेषः॥ २४२॥

साधु चेदमुच्यते,

सन्तापयन्ति कमपथ्यभुजं न रोगाः ?
दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
कं श्रीर्न दर्पयति ? कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परिपीड़यन्ति ?॥ २४३ ॥

लुब्धस्य नश्यति यशः पिशुनस्य मैत्री
नष्टक्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यम्
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ २४४ ॥

तत् राजन्! असिधाराव्रतं मया आचरितम् (छ) अरिसंसर्गादिति, यद्भवता उक्तं तन्मया साक्षात् एवानुभूतम्। उक्तञ्च, अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः।
स्वार्थमभ्युद्धरेत् प्राज्ञः स्वार्थभ्रंशो हि मूर्खता ॥२४५॥

---

सन्तापयन्तीति। रोगाः कम् अपथ्यभुजम् अपथ्यसेविनं न सन्तापयन्ति ? नीतिदोषाः दुर्णीतयः कं दुष्टा मन्त्रिणो यस्य तादृशं नृपं न उपयान्ति न प्राप्नुवन्ति ? श्रीर्लक्ष्मीः कं जनं न दर्पयति अहङ्कृतं न करोति ? मृत्युः अन्तकः कं जनं न निहन्ति न नाशयति ? स्त्रीकृताः स्त्रीघटिताः विषयाः व्यापाराः कं जनं न परिपीड़यन्ति ? अपितु सन्तापयन्ति, उपयान्ति, दर्पयति, निहन्ति, परिपीड़यन्त्येव इत्यर्थः। वसन्ततिलकं वृत्तम् ॥ २४३ ॥

लुब्धस्येति। लुब्धस्य जनस्य यशः, पिशुनस्य दुर्जनस्य मैत्री, नष्टक्रियस्य भ्रष्टाचारस्य कुलम्, अर्थपरस्य धनलालसस्य धर्मः, व्यसनिनः कामाद्यासक्तस्य विद्याफलं कृपणस्य व्ययकुण्ठस्य जनस्य सौख्यं तथा प्रमत्ता अनवहिताः सचिवा अमात्या यस्य तथाविधस्य नराधिपस्य राज्ञः राज्यं नश्यति। वसन्ततिलकं वृत्तम् ॥ २४४ ॥

(छ) आचरितम् अनुष्ठितम्।

अपमानमिति। प्राज्ञः पण्डितो जनः अपमानं पुरस्कृत्य अङ्गीकृत्य मानं सम्मानं पृष्ठतः कृत्वा तु परित्यज्यैव इत्यर्थः मानापमानौ अविगणय्येत्यर्थः स्वार्थं

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान् ।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥ २४६ ॥

मेघवर्ण आह, कथमेतत् ? स्थिरजीवी कथयति,

## कथा १५ ।

अस्ति वरुणाद्रिसमीपे एकस्मिन् प्रदेशे परिणतवया (ज) मन्दविषो नाम कृष्णसर्पः, स एवं चित्ते सञ्चिन्तितवान् कथं नाम मया सुखोपायवृत्त्या वर्त्तितव्यमिति, (झ) ततो बहुमण्डूकं ह्रदम् उपगम्य धृतिपरीतमिव (ञ) आत्मानं दर्शितवान् । अथ तथा स्थिते तस्मिन् उदकप्रान्तगतेन एकेन मण्डूकेन पृष्टः, माम ! (ट) किमद्य यथापूर्वम् आहारार्थं न विहरसि ? सोऽब्रवीत्, भद्र ! कुतो मे मन्दभाग्यस्य आहाराभिलाषः । यत्कारणम् अद्य रात्रौ प्रदोष एव मया आहारार्थं विहरमाणेन (ठ) दृष्ट एको मण्डूकः । तद्ग्रहणार्थं मया क्रमः सज्जितः (ड) । सोऽपि मां दृष्ट्वा मृत्युभयेन स्वाध्यायप्रसक्तानां (ढ) ब्राह्मणानाम् अन्तरमपक्रान्तो न विभावितो (ण)

---

स्वकार्य्यम् अभ्युद्धरेत् साधयेत्, हि यतः कार्य्यभ्रंशः कार्य्यहानिकरणं मूर्खता निर्बोधकार्य्यम् इत्यर्थः ॥ २४५ ॥

स्कन्धेनापीति । बुद्धिमान् जनः कालं दुःसमयम् आसाद्य प्राप्य विपन्नो भूत्वा इत्यर्थः शत्रुं स्कन्धेनापि वहेत् । तथाहि महता कृष्णसर्पेण बहवः मण्डूकाः भेकाः हताः ॥ २४६ ॥

(ज) परिणतवयाः स्थविरः ।

(झ) वर्त्तितव्यं जीवितव्यम् ।

(ञ) धृतिपरीतमिव धैर्य्यशालिनमिव ।

(ट) माम ! मातुल !

(ठ) विहरमाणेन विचरता ।

(ड) क्रमः उद्योगः सज्जितः कृतः ।

(ढ) स्वाध्यायप्रसक्तानां वेदपाठरतानाम् ।

मया क्वापि गतः। तत्सादृश्यमोहितचित्तेन (त) मया कस्यचिद् ब्राह्मणस्य सूनोः (थ) ह्रदतटजलान्तःस्थोऽङ्गुष्ठो दष्टः। ततोऽसौ सपदि पञ्चत्वमुपागतः। अथ तस्य पित्रा दुःखितेन अहं शप्तः, (द) यथा दुरात्मन्! त्वया निरपराधो मत्सुतो दष्टः। तत् अनेन दोषेण त्वं मण्डूकानां वाहनं भविष्यसि, तत्प्रसादलब्धजीविकया वर्त्तिष्यसे (ध) इति। ततोऽहं युष्माकं वाहनार्थम् आगतोऽस्मि। तेन च सर्वमण्डूकानाम् इदमावेदितम् ततः तैः प्रहृष्टमनोभिः सर्वैरेव गत्वा जलपादनाम्नो दर्दुरराजस्य (न) विज्ञप्तम्। अथ असौ अपि मन्त्रिपरिवृतोऽत्यद्भुतम् इदमिति मन्यमानः ससम्भ्रमं ह्रदात् उत्तीर्य मन्दविषस्य फणिनः फणप्रदेशम् अधिरूढः। शेषा अपि यथाज्येष्ठं (प) तत्पृष्ठोपरि समारुरुहुः। किं बहुना तदुपरि स्थानमप्राप्तवन्तः तस्य अनुपदं (फ) धावन्ति। मन्दविषोऽपि तेषां तुष्ट्यर्थम् अनेकप्रकारान् गतिविशेषान् अदर्शयत्। अथ जलपादो लब्धतदङ्गसंस्पर्शसुखः तमाह,

न तथा करिणा यानं तुरगेण रथेन वा।

---

(ण) विभावितः सूचितः।

(त) तदिति तस्य मण्डूकस्य सदृशं सादृश्यम् इत्यर्थः भावप्रधानो निर्देशः। तेन मोहितं भ्रान्तिं गतं चित्तं यस्य तादृशेन।

(थ) सूनोः पुत्रस्य।

(द) शप्तः अभिसम्पातेन योजितः।

(ध) वर्त्तिष्यसे जीविष्यसि।

(न) दर्दुरराजस्य मण्डूकाधिपतेः।

(प) यथाज्येष्ठं यथाप्रधानं प्रधानानुसारेण इत्यर्थः।

(फ) अनुपदं पश्चात्।

नेति। मन्दविषेण कृष्णसर्पेण मे मम यथा यानं गमनं भवति, करिणा

नरयानेन वा यानं यथा मन्दविषेण मे ॥ २४७ ॥

अथ अन्येद्युः मन्दविषः छद्मना (ब) मन्दं मन्दं विसर्पति । तञ्च दृष्ट्वा जलपादोऽब्रवीत्, भद्र मन्दविष ! यथापूर्वं किम् अद्य साधु न उह्यते ? मन्दविषोऽब्रवीत्, देव ! अद्य आहार-वैकल्यात् (भ) न मे वोढुं शक्तिरस्ति । अथ असौ अब्रवीत्, भद्र ! भक्षय क्षुद्रमण्डूकान् । तच्छ्रुत्वा प्रहर्षितसर्वगात्रो मन्दविषः ससम्भ्रमम् अब्रवीत्, मम अयमेव विप्रशापोऽस्ति । तत् तव अनेन अनुज्ञावचनेन प्रीतोऽस्मि । ततोऽसौ नैरन्तर्येण मण्डूकान् भक्षयन् कतिपयैः एवाह्नोभिः बलवान् संवृत्तः । प्रहृष्टश्च अन्तर्लीनम् अवहस्य इदमब्रवीत्,

मण्डूका विविधा ह्येते छलपूर्वोपसाधिताः ।
कियन्तं कालमक्षीणा भवेयुः खादिता मम ॥२४८॥

जलपादोऽपि मन्दविषेण कृतकवचनव्यामोहितचित्तः (म) किमपि न अवबुध्यते । अत्रान्तरेऽन्यो महाकायः कृष्णसर्पः तमुद्देशं समायातः । तञ्च मण्डूकैः वाह्यमानं दृष्ट्वा विस्मयम्

---

हस्तिना तथा न, तुरगेण अश्वेन तथा न, रथेन स्यन्दनेन तथा न, नरयानेन शिविकया च तथा न ॥ २४७ ॥

(ब) छद्मना छलेन ।

(भ) आहारवैकल्यात् भोजनव्याघातात् भोजनाभावाद इत्यर्थः ।

मण्डूका इति । विविधाः बहुप्रकाराः एते मण्डूकाः छलपूर्वं कापट्येन इत्यर्थः उपसाधिताः वशीकृता मयेति शेषः, मया खादिताः भक्षिताः सन्तः कियन्तं कालम् अक्षीणाः भवेयुः कियत्कालमेभिर्मे वर्त्तनं भविष्यतीति भावः ॥ २४८ ॥

(म) कृतकेति । कृतकं कपटं वचनं तेन व्यामोहितं विकृतं चित्तं यस्य तथाभूतः ।

अगमत्। आह च, वयस्य! यत् अस्माकम् अशनं (य) तैः कथं वाह्यसे। विरुद्धमेतत्। मन्दविषोऽब्रवीत्,

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा ॥२४८॥

सोऽब्रवीत्, कथमेतत्? मन्दविषः कथयति।

## कथा १२।

अस्ति कस्मिंश्चित् अधिष्ठाने यज्ञदत्तो नाम ब्राह्मणः, तस्य भार्य्या पुंश्चली अन्यासक्तमना अजस्रं विटाय सखण्ड-घृतान् घृतपूरान् कृत्वा भर्त्तुश्चौरिकया (र) प्रयच्छति।

अथ कदाचिद् भर्त्ता दृष्ट्वा अब्रवीत्, भद्रे! किमेतत् परि-दृश्यते? कुत्र वा अजस्रं नयसि इदम्? कथय सत्यं, सा च उत्पन्नप्रतिभा (ल) कृतकवचनैः भर्त्तारम् अब्रवीत्, अस्ति अत्र नातिदूरे भगवत्या देव्या आयतनम्, तत्र अहमुपोषिता सती बलिं भक्ष्यविशेषांश्च अपूर्वान् नयामि। अथ तस्य पश्यतो (व) गृहीत्वा तत् सकलं देव्यायतनाभिमुखी प्रतस्थे। यत्कारणं देव्या निवेदितेन अनेन मदीयो भर्त्तैव मंस्यते यन्मम ब्राह्मणी भगवत्याः कृते भक्ष्यविशेषान् नित्यमेव नयतीति। अथ देव्यायतने गत्वा स्नानार्थं नद्याम् अवतीर्य्य यावत् स्नानक्रियां करोति, तावत् भर्त्ता अन्यमार्गान्तरेण आगत्य देव्याः पृष्ठतो-

---

(य) अशनं भोजनम्।

सर्वमिति। अस्मि अहं दर्दुरैः भेकैः वाह्यः यथा अहं भेकान् वक्ष्यामीति यथा एतत् सर्वं विजानामि, किन्तु घृतान्धः घृतमृष्टद्रव्यभक्षणेन अन्धः ब्राह्मणो यथा किञ्चित् कालम् अहं प्रतीक्ष्यः त्वयेति शेषः ॥ २४८ ॥

(र) भर्त्तुः भर्त्तारमनादृत्य इत्यर्थः अनादरे षष्ठी। चौरिकया अपहरणेन।

(ल) उत्पन्नप्रतिभा प्रत्युत्पन्नमतिः।

(व) तस्य पश्यतः पश्यन्तं तं पतिमनादृत्य इत्यर्थः।

ऽदृश्योऽवतस्थे। अथ सा ब्राह्मणी स्नात्वा देव्यायतनम् आगत्य स्नानानुलेपनमाल्यधूपबलिक्रियादिकं कृत्वा देवीं प्रणम्य व्यजिज्ञपत्। भगवति! केन प्रकारेण मम भर्त्ता अन्धो भविष्यति? तच्छ्रुत्वा स्वरभेदेन (श) देवीपृष्ठस्थितो ब्राह्मणो जगाद, यदि त्वम् अजस्रं घृतपूरादिभक्ष्यं तस्मै भर्त्रे प्रयच्छसि ततः शीघ्रमन्धो भविष्यति। सा तु बन्धकी (ष) कृतकवचन-वञ्चितमानसा तस्मै ब्राह्मणाय तदेव नित्यं प्रददौ। अथ अन्येद्युः ब्राह्मणेन अभिहितं, भद्रे! नाहं सुतरां (स) पश्यामि। तच्छ्रुत्वा चिन्तितमनया, देव्याः प्रसादोऽयं प्राप्त इति। अथ तस्या हृदयवल्लभो विटस्तत्सकाशम् अन्धीभूतोऽयं ब्राह्मणः किं मम करिष्यतीति निःशङ्कः प्रतिदिनमभ्येति अथ अन्येद्युस्तं प्रविशन्तम् अभ्यासगतं (ह) दृष्ट्वा केशैः गृहीत्वा लगुडपार्ष्णि-प्रभृतिप्रहारैः तावत् अताड़यत्। यावत् असौ पञ्चत्वमाप तामपि दुष्टपत्नीं छिन्ननासिकां कृत्वा विससर्ज। अतोऽहं ब्रवीमि।

सर्वमेतद्विजानामि यथा वाह्योऽस्मि दर्दुरैः।
किञ्चित् कालं प्रतीक्ष्योऽहं घृतान्धो ब्राह्मणो यथा ॥२५०॥

अथ मन्दविषोऽन्तर्लीनम् अवहस्य पुनरपि मण्डूका विविधास्वादा इति तमेवम् अब्रवीत्। अथ जलपादः तच्छ्रुत्वा सुतरां व्यग्रहृदयः (च) किमनेन अभिहितमिति तम् अपृच्छत्, भद्र! किं त्वया अभिहितम् इदं विरुद्धं वचः। अथ

---

(श) स्वरभेदेन भिन्नस्वरं विधाय इत्यर्थः।

(ष) बन्धकी कुलटा।

(स) सुतराम् अतिमात्रम्।

(ह) अभ्यासगतं समीपस्थम्।

(च) व्यग्रहृदयः व्याकुलात्मा।

असौ आकारप्रच्छादनार्थं (क) न किञ्चिदिति अब्रवीत्। तथैव कृतकवचनव्यामोहितचित्तो जलपादस्तस्य दुष्टाभिसन्धिं (ख) न अवबुध्यते। किं बहुना, तथा तेन सर्वेऽपि भक्षिता यथा बीजमात्रमपि न अवशिष्टम्। अतोऽहं ब्रवीमि,

स्कन्धेनापि वहेच्छत्रुं कालमासाद्य बुद्धिमान्।
महता कृष्णसर्पेण मण्डूका बहवो हताः ॥ २५१ ॥

अथ राजन्! यथा मन्दविषेण बुद्धिबलेन मण्डूका निहताः तथा मयापि सर्वेऽपि वैरिण इति। साधु चेदमुच्यते,

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति।
स मूलोन्मूलनं कुर्य्याद्वायुर्यो मृदुशीतलः ॥ २५२ ॥

मेघवर्ण आह, तात! सत्यमेवैतत्। ये महात्मानो भवन्ति ते महासत्त्वा आपद्गता अपि प्रारब्धं न सर्जन्ति (ग) उक्तञ्च यतः,

महत्त्वमेतन्महतां नयालङ्कारधारिणाम्।
न मुञ्चन्ति यदारब्धं कृच्छ्रेऽपि व्यसनोदये ॥ २५३ ॥

तथा च, प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः।

(क) आकारप्रच्छादनार्थं भावगोपनार्थम्।

(ख) दुष्टाभिसन्धिं दुष्टाशयम्।

वने इति। वने प्रज्वलितः वह्निः मूलानि दहन् अपि रक्षति वनमिति शेषः दग्धवनात् पुनरङ्कुरोत्पत्तेरिति भावः किन्तु यः मृदुशीतलः वायुः स मूलोत्पाटनं कुर्य्यात् येन पुनर्न प्ररोहेदिति भावः ॥ २५२ ॥

(ग) सर्जन्ति त्यजन्ति।

महत्त्वमिति। नय एव अलङ्कारः तं धरन्तीति तथोक्तानां महताम् एतत् महत्त्वं यत् कृच्छ्रे अतिकष्टे व्यसनोदये विपद्यपि आरब्धं न मुञ्चन्ति न त्यजन्ति ॥ २५३ ॥

विघ्नैः सहस्रगुणितैरपि हन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २५४ ॥

तत् कृतं निष्कण्टकं मम राज्यं शत्रून् निःशेषतां नयता त्वया, अथवा युक्तमेतत् नयवेदिनाम्। उक्तञ्च यतः,

ऋणशेषं चाग्निशेषं शत्रुशेषं तथैव च।
व्याधिशेषञ्च निःशेषं कृत्वा प्राज्ञो न सीदति ॥ २५५ ॥

सोऽब्रवीत्, देव! भाग्यवान् त्वमेवासि यस्य आरब्धं सर्वमेव संसिध्यति, तन्न केवलं शौर्य्यं कृत्यं साधयति, किन्तु प्रज्ञया यत् क्रियते तदेव विजयाय भवति। उक्तञ्च,

शस्त्रैर्हता न हि हता रिपवो भवन्ति
प्रज्ञाहतास्तु रिपवः सुहता भवन्ति।
शस्त्रं निहन्ति पुरुषस्य शरीरमेकम्
प्रज्ञा कुलञ्च विभवञ्च यशश्च हन्ति ॥ २५६ ॥

तदेवं प्रज्ञापुरुषकाराभ्यां युक्तस्य अयत्नेन कार्य्यसिद्धयः सम्भवन्ति।

---

प्रारभ्यते इति। नीचैः क्षुद्रैः जनैः विघ्नभयेन न खलु नैव प्रारभ्यते, न कार्य्यारम्भः क्रियते। मध्या मध्यविधा जनाः प्रारभ्य उपक्रम्य विघ्नेन विहताः प्रतिबद्धाः सन्तः विरमन्ति निवर्त्तन्ते। उत्तमगुणा महान्तस्तु सहस्रगुणैः बहुभिरिति भावः विघ्नैः प्रत्यूहैः हन्यमाना अपि प्रारब्धं प्रक्रान्तं न परित्यजन्ति। वसन्ततिलकं वृत्तम् ॥ २५४ ॥

ऋणशेषमिति। प्राज्ञः विद्वान् जनः ऋणशेषम् अग्निशेषं शत्रुशेषं व्याधिशेषञ्च निःशेषं शेषरहितं सम्यक् विनष्टमिति यावत् कृत्वा न सीदति न कष्टं प्राप्नोति अन्यथा कष्टमिति भावः ॥ २५५ ॥

शस्त्रैरिति। शस्त्रैर्हताः युद्धे विजिता इत्यर्थः रिपवः शत्रवः न हता भवन्ति पुनरुत्थानसम्भवादिति भावः प्रज्ञया बुद्धिबलेन हतास्तु सुहताः सम्यक् हता इत्यर्थः भवन्ति तेषां पुनरुत्थानासम्भवादिति भावः। शस्त्रं पुरुषस्य एकं केवलं शरीरं निहन्ति, प्रज्ञा बुद्धिः कुलञ्च विभवञ्च यशश्च हन्ति। वसन्ततिलकं वृत्तम् ॥ २५६ ॥

प्रसरति मतिः कार्य्यारम्भे दृढ़ीभवति स्मृतिः
स्वयमुपनयन्नर्थान् मन्त्रो न गच्छति विप्लवम् ।
स्फुरति सफलस्तर्कश्चित्तं समुन्नतिमश्नुते
भवति च रतिः श्लाघ्ये कृत्ये नरस्य भविष्यतः ॥२५७॥

तथाच, नयत्यागशौर्य्यसम्पन्ने पुरुषे राज्यमिति, उक्तञ्च,

त्यागिनि शूरे विदुषि च संसर्गरुचिर्जनो गुणी भवति ।
गुणवति धनं धनाच्छ्रीः श्रीमत्याज्ञा ततो राज्यम् ॥२५८॥

मेघवर्ण आह, नूनं सद्यःफलानि नीतिशास्त्राणि यत् त्वया अनुकूल्येन अनुप्रविश्य (घ) अरिमर्दनः सपरिजनो निःशेषितः। स्थिरजीवी आह,

तीक्ष्णोपायप्राप्तिगम्योऽपि योऽर्थः
तस्याप्यादौ संश्रयः साधुयुक्तः ।

---

प्रसरतीति। भविष्यतः भाविशुभस्येत्यर्थः नरस्य कार्य्यारम्भे कार्य्यारम्भं कर्त्तु-मित्यर्थः मतिर्भवति स्मृतिर्मेधा दृढ़ीभवति, मन्त्रः स्वयम् अर्थान् कृत्यवस्तूनि उपनयन् उद्भावयन् सन् विप्लवं वैपरीत्यं न गच्छति, तर्कः विचारः सफलः सन् स्फुरति प्रसरति, चित्तं मनः समुन्नतिम् उत्साहम् अश्नुते भजते, श्लाघ्ये प्रशंस-नीये कृत्ये कार्य्ये रतिः अनुरागश्च भवति ॥ २५७ ॥

त्यागिनीति। गुणी जनः त्यागिनि वदान्ये शूरे विक्रमवति विदुषि विद्या-वति च जने संसर्गरुचिः अनुरागी इत्यर्थः भवति। गुणवति जने धनं, धनात् श्रीर्लक्ष्मीः, श्रीमति जने आज्ञा, ततः आज्ञावति जने इत्यर्थः राज्यं तिष्ठतीति शेषः। आर्य्यावृत्तम् ॥ २५८ ॥

(घ) अनुकूल्येन मतवर्त्तिना इत्यर्थः। अनुप्रविश्य अभ्यन्तरीभूय।

तीक्ष्णोपयेति। तीक्ष्णैर्दारुणैरुपायैः या प्राप्तिः तया गम्योऽपि दुःसाध्यः अपीत्यर्थः यः अर्थः वस्तु, तस्यापि आदौ अग्रतः साधुयुक्तः संश्रयः कर्त्तव्य इति शेषः अतिदुरूहार्थसाधनेऽपि प्रथमं सान्त्वेनैव प्रवर्त्तितव्यमिति भावः। तथाहि उत्तुङ्गम् अत्युन्नतम् अग्रं यस्य तथाविधः वनानां सारभूतः श्रेष्ठ इत्यर्थः पादपेन्द्रः वनस्पतिः मान्याभ्यर्च्यः मानितः अभ्यर्चितश्च सन् छिद्यते वनस्पतिच्छेदे कार्य्येऽपि

उत्तुङ्गाग्रः सारभूतो वनानाम्
मान्याभ्यर्च्यश्छिद्यते पादपेन्द्रः ॥ २५९ ॥

अथवा स्वामिन् ! किं तेन अभिहितेन यत् अनन्तरकाले क्रियारहितम् असुखसाध्यं वा भवति। साधु चेदम् उच्यते,

अनिश्चितैरध्यवसायभीरुभिः
पदे पदे दोषशतानुदर्शिभिः।
फलैर्विसंवादमुपागता गिरः
प्रयान्ति लोके परिहासवस्तुताम् ॥ २६० ॥

न च लघुषु अपि कर्त्तव्येषु धीमद्भिः अनादरः (ङ) कार्य्यः। यतः,

शक्ष्यामि कर्त्तुमिदमल्पमयत्नसाध्यम्
अत्रादरः क इति कृत्यमुपेक्षमाणाः।
केचित् प्रमत्तमनसः परितापदुःखम्
आपत्प्रसङ्गसुलभं पुरुषाः प्रयान्ति ॥ २६१ ॥

---

प्रथमं तत्सम्मानसत्कारौ यथा प्रयोक्तव्यौ तथा महारिपुसाधने कर्त्तव्ये प्रथमं सान्त्वेनैव तदभ्यन्तरे प्रवेष्टव्यमिति तात्पर्य्यम्। इन्द्रवज्रावृत्तम्। विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ २५९ ॥

अनिश्चितैरिति। अनिश्चितैः अध्यवसायभीरुभिः उद्योगभीतैः पदे पदे प्रतिपदं दोषशतानुदर्शिभिः फलैः विसंवादं वैपरीत्यमुपागता गिरः लोके जगति परिहासवस्तुताम् उपहासास्पदतां प्रयान्ति। विफलवागाड़म्बरेण केवलमात्मनो लाघवं प्रकाश्यते तस्मात् तेनालमिति भावः। वंशस्थविलं वृत्तम् ॥ २६० ॥

(ङ) अनादरः अयत्नः।

शक्ष्यामीति। केचित् पुरुषाः इदं कार्य्यम् अल्पं लघु अतएव अयत्नसाध्यं विना यत्नं निष्पाद्यम् अतएव कर्त्तुं शक्ष्यामि शक्तो भविष्यामि, अत्र कार्य्ये आदरः यत्नः कः ? न कोऽपीत्यर्थः इति कृत्यं तत्कार्य्यमुपेक्षमाणाः अतएव प्रमत्तम् अनवस्थितं मनो येषां तादृशाः सन्तः आपदां प्रसङ्गेन आगमेन सुलभं सुप्रापं परितापदुःखं प्रयान्ति प्राप्नुवन्ति। वसन्ततिलकं वृत्तम् ॥ २६१ ॥

तत् अद्य जितारेः सद्विभोः यथापूर्वं निद्रालाभो भविष्यति, उच्यते चैतत्।

निःसर्पे बद्धसर्पे वा भवने सुप्यते सुखम्।
सदा दृष्टभुजङ्गे तु निद्रा दुःखेन लभ्यते ॥ २६२ ॥

तथा च,

विस्तीर्णव्यवसायसाध्यमहतां स्निग्धोपभुक्ताशिषाम्।
कार्य्याणां नयसाहसोन्नतिमतामिच्छापदारोहिणाम्।
मानोत्सेकपराक्रमव्यसनिनः पारं न यावद्गताः
सामर्षे हृदयेऽवकाशविषया तावत् कथं निर्वृतिः ॥२६३॥

तदवसितकार्य्यारम्भस्य विश्राम्यतीव मे हृदयम्। तत् इदम् अधुना निहतकण्टकं राज्यं प्रजापालनतत्परो भूत्वा पुत्रपौत्रादिक्रमेण अचलच्छत्रासनश्रीः चिरं भुङ्क्ष्व, अपिच,

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः।
अजागलस्तनस्येव तस्य राज्यं निरर्थकम् ॥ २६४ ॥

---

निःसर्पे इति। निःसर्पे सर्परहिते वा बद्धसर्पे धृतसर्पे भवने सुखं सुप्यते जनेन इति शेषः, सदा दृष्टा भुजङ्गा यत्र तादृशे भवने तु निद्रा दुःखेन लभ्यते नैव लभ्यते इति भावः ॥ २६२ ॥

विस्तीर्णेति। मानोत्सेकपराक्रमव्यसनिनः मानोन्नताः पराक्रमासक्ताश्च जनाः यावत् विस्तीर्णैः महद्भिः व्यापारैः उद्योगैः साध्यानि अतएव महान्ति तेषां स्निग्धैः बन्धुभिः उपभुक्ता व्यवहृता आशिषी मङ्गलाशंसा येषु तथाविधैः बन्धुभिः सम्प्रत्याशं सिद्ध्यर्थं चिन्तितानाम् इत्यर्थः नयः नीतिः साहसम् उत्साहः तयोरुन्नतिरुदयः विद्यते येषु तथोक्तानां नीत्युत्साहसाध्यानामिति भावः इच्छापदम् अभीष्टं पदम् आरोहन्तीति तथोक्तानाम् अभिलषितानामिति भावः कार्य्याणां पारं न गताः न कृतकार्य्या इत्यर्थः, तावत् सामर्षे सक्रोधे हृदये अवकाशविषया स्थायिनी इत्यर्थः निर्वृतिः सौख्यं कथम्? नैव निर्वृतिर्लभ्यते इत्यर्थः। शार्दूलविक्रीड़ितं वृत्तम् ॥ २६३ ॥

प्रजा इति। यस्तु राजा रक्षादिभिः गुणैः प्रजा न रञ्जयेत् न सन्तोषयेत् तस्य अजागलस्तनस्येव निरर्थकं निष्फलं राज्यं भवतीति शेषः ॥ २६४ ॥

गुणेषु रागो व्यसनेष्वनादरो
रतिः सुभृत्येषु च यस्य भूपतेः ।
चिरं स भुङ्क्ते चलचामरांशुकाम्
सितातपत्राभरणां नृपश्रियम् ॥ २६५ ॥

न च त्वया प्राप्तराज्योऽहम् इति मत्वा श्रीमदेन आत्मा व्यंसयितव्यः, (च) यत् कारणं चला हि राज्ञो विभूतयः। वंशारोहणवत् (छ) राज्यलक्ष्मीः दुरारोहा, क्षणविनिपातरता, (ज) प्रयत्नशतैरपि धार्य्यमाणा दुर्धरा, प्रशस्ताराधितापि अन्ते विप्रलम्भिनी, (झ) वानरजातिरिव विद्रुतानेकचित्ता, (ञ) पद्मपत्रोदकम् इवाघटितसंश्लेषा पवनगतिः इव अतिचपला, अनार्य्यसङ्गतमिव अस्थिरा, आशीविष इव दुरुपचारा (ट) सन्ध्याभ्रलेखेव मुहूर्त्तरागा, जलबुद्बुदावलीव स्वभावभङ्गुरा, शरीरप्रकृतिरिव कृतघ्ना (ठ)। स्वप्नलब्धद्रव्यराशिरिव क्षणदृष्टनष्टा। अपि च,

---

गुणेष्विति। यस्य भूपतेः नृपस्य गुणेषु रागः अनुरागः व्यसनेषु मृगयादिषु अनादरः अयत्नः अनासक्तिरित्यर्थः सुभृत्येषु च रतिः वात्सल्यम् इत्यर्थः सः चलं चञ्चलं चामरस्य अंशुकं प्रान्तं यस्यां तादृशीं तथा सितम् आतपत्रं छत्रम् आभरणं यस्यां तथाभूतां नृपश्रियं राजलक्ष्मीं चिरं भुङ्क्ते। वंशस्थविलं वृत्तम् ॥ २६५ ॥

(च) श्रीमदेन विभवगर्वेण। व्यंसयितव्यः प्रतारयितव्यः।

(छ) वंशारोहणवत् यथा वंशे आरोहणं दुःसाध्यमिति भावः।

(ज) क्षणेति। क्षणेन विनिपातः विध्वंसनं तत्र रता तदासक्ता क्षणविनाशिनी इत्यर्थः।

(झ) प्रशस्तेति। प्रशस्तेन सुयोग्येन आराधितापि सेवितापि। विप्रलम्भिनी प्रतारणकारिणी।

(ञ) विद्रुतेति। विद्रुतं चञ्चलितम् अनेकेषां चित्तं यया तादृशी।

(ट) अनार्य्याणाम् असाधूनां सङ्गतमिव सख्यमिव। अस्थिरा क्षणस्थायिनी। दुरुपचारा दुःसेव्या।

(ठ) सन्ध्याभ्रेति। सन्ध्यायां या अभ्रलेखा मेघराजिः सेव, मुहूर्त्तं क्षणं

यदैव राज्ये क्रियतेऽभिषेकस्तदैव बुद्धिर्व्यसनेषु योज्या ।
घटा हि राज्ञामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥२६६॥

न च कश्चित् अनधिगमनीयो (ड) नाम अस्ति आपदाम् उक्तञ्च,

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनम्
वृष्णीनां निधनं नलस्य नृपते राज्यात् परिभ्रंशनम् ।
नाट्याचार्य्यकमर्जुनस्य पतनं सञ्चिन्त्य लङ्केश्वरे
सर्वं कालवशाज्जनोऽत्र सहते कः कं परित्रायते ॥२६७॥

क्व स दशरथः स्वर्गं भूत्वा महेन्द्रसुहृद्गतः
क्व स जलनिधेर्वेलां बध्वा नृपः सगरस्तथा ।
क्व स करतलाज्जातो वैण्यः क्व सूर्य्यतनुर्मनुः

---

रागः अनुरागः अन्यत्र लौहित्यं यस्याः तथाविधा । सीरप्रकृतिरिव लाङ्गलस्वभाव इव । कृतघ्ना कृतोपकारामाननीत्यर्थः अन्यत्र कृष्टचेत्रस्य पुनः कर्षणीति भावः ।

यदैवेति । यदैव राज्ये अभिषेकः क्रियते, तदैव बुद्धिः राज्ञामिति शेषः व्यसनेषु कामादिषु योज्या योजनीया दृश्यते इति शेषः । हि तथाहि राज्ञामभिषेककाले घटाः कुम्भाः अम्भसा जलेन सहैव आपदम् उद्गिरन्ति उद्वमन्ति । नृपतयः अभिषेककाले एव विषयमदमत्ता भवन्तीति भावः । उपजातिवृत्तम् ॥ २६६ ॥

(ड) अनधिगमनीयः अगम्यः सर्व एव आपदा आक्रम्यन्ते इति भावः ।

रामस्येति । अत्र संसारे जनः रामस्य व्रजनम् अरण्यगमनं बलेः दैत्यराजस्य नियमनं बन्धनं पाण्डोः सुतानां युधिष्ठिरादीनां वनं वनवासं वृष्णीनां यदूनां निधनं ध्वंसं नलस्य नृपतेः राज्यात् परिभ्रंशनं च्युतिम् अर्जुनस्य नाट्याचार्य्यकं विराटभवने अज्ञातवासे बालिकानां नृत्यशिक्षणं तथा लङ्केश्वरे रावणे त्रिभुवनजयिनि इति भावः पतनं सञ्चिन्त्य विचार्य्य कालवशात् सर्वं सहते, को जनः कं परित्रायते ? न कोऽपि कम् इत्यर्थः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६७ ॥

क्वेति । यः महेन्द्रस्य देवराजस्य सुहृद् सखा भूत्वा स्वर्गं गतः स दशरथः क्व ? तथा, जलनिधेः समुद्रस्य वेलां बद्ध्वा समुद्रवेलानियन्ता इत्यर्थः स सगरः

ननु बलवता कालेनैते प्रबोध्य निमीलिता: ॥२६८॥

मान्धाता क्व गतस्त्रिलोकविजयी राजा क्व सत्यव्रत:
देवानां नृपतिर्गत: क्व नहुष: सच्छास्त्रवान् केशव: ।
मन्यन्ते सरथा: सकुञ्जरवरा: शक्रासनाध्यासिन:
कालेनैव महात्मना त्वनुकृता कालेन निर्वासिता: ॥२६९॥

अपि च,

स च नृपतिस्ते सचिवास्ता: प्रमदास्तानि काननवनानि ।
स च ते च ताश्च तानि च कृतान्तदृष्टानि नष्टानि ॥२७०॥

एवं मत्तकरिकर्णचञ्चलां राज्यलक्ष्मीम् अवाप्य न्यायैकनिष्ठो भूत्वा उपभुङ्क्ष्व ।

इति श्रीविष्णुशर्मविरचिते पञ्चतन्त्रके काकोलूकीयं
नाम तृतीयं तन्त्रं समाप्तम् ।

---

क्व ? करतलात् वेणनृपते: करतलात् करतलमर्दनादित्यर्थ: जात: स वैण्य: पृथु: क्व ? पुरा दुर्दान्तं वेणं निजिघृक्षवो मुनय: वेणस्य दक्षिणं करं मथित्वा पृथुमुत्पादयामासुरिति पौराणिकी वार्त्तानुसन्धेया । तथा स सूर्य्यतनु: सूर्य्यस्य आत्मा पुत्र इत्यर्थ: मनु: आदिराज: आत्मा वै जायते पुत्र इति श्रुते: । क्व ननु भो: बलवता कालेन एते दशरथादय: प्रबोध्य निमीलिता: निधनं नीता: ॥ २६८ ॥

मान्धातेति । मान्धाता क्व गत: त्रिलोकविजयी राजा सत्यव्रत: क्व गत:, देवानां नृपति: नहुष: क्व गत: ? तथा सच्छास्त्रवान् सच्छास्त्रानुशीली केशव: कृष्णश्च क्व गत: ? एते महात्मना कालेनैव सरथा: सकुञ्जरवरा: सवाहना इत्यर्थ: शक्रासनाध्यासिन: इन्द्रसहैकासनस्थायिन: मन्यन्ते जनैरिति शेष:, कालेन च अनुकृता: निर्वासिता: ध्वंसिताश्च । शार्दूलविक्रीड़ितं वृत्तम् ॥ २६९ ॥

सचेति । स च नृपति:, ते सचिवा: मन्त्रिण:, ता: प्रमदा: कान्ता:, तानि काननवनानि उपवनानि इत्यर्थ:, स च ते च ताश्च तानि च सर्वाणि कृतान्तेन कालेन दृष्टानि अवलोकितानि दष्टानीति वा पाठ:, नष्टानि च । सर्वं कालेन विलीयते इति भाव: ॥ २७० ॥

# अथ चतुर्थं तन्त्रम् ।

अथ इदम् आरभ्यते लब्धप्रणाशं (क) नाम चतुर्थं तन्त्रं यस्य अयम् आदिमः श्लोकः ।

समुत्पन्नेषु कार्य्येषु बुद्धिर्यस्य न हीयते ।
स एव दुर्गं तरति जलस्थो वानरो यथा ॥ १ ॥

तद्यथा अनुश्रूयते,

## कथा १ ।

अस्ति कस्मिंश्चित् समुद्रोपकण्ठे महान् जम्बूपादपः सदाफलः, (ख) तत्र च रक्तमुखो नाम वानरः प्रतिवसति स्म । तत्र च तस्य तरोरधः कदाचित् करालमुखो (ग) नाम मकरः समुद्रसलिलात् निष्क्रम्य सुकोमलवालुकासनाथे (घ) तीरोपान्ते न्यविशत् । ततश्च रक्तमुखेन स प्रोक्तः, भो ! भवान् समभ्यागतोऽतिथिः । तद्भक्षयतु मया दत्तानि अमृततुल्यानि जम्बूफलानि । उक्तञ्च,

प्रियो वा यदि वा द्वेष्यो मूर्खो वा यदि पण्डितः ।

---

(क) लब्धप्रणाशं लब्धस्य प्राप्तस्य प्रणाशो यत्र तथाविधम् । यथा प्राप्तं वस्तु प्रणश्यति तद्विषयम् इत्यर्थः ।

समुत्पन्नेष्विति । कार्य्येषु समुत्पन्नेषु उपस्थितेषु सत्सु यस्य बुद्धिः न हीयते न क्षयं गच्छति, प्रत्युत प्रस्फुरतीति भावः स एव जलस्थः वानरो यथा दुर्गं सङ्कटं तरति विपदस्तीर्णं प्राप्नोति इत्यर्थः ॥ १ ॥

(ख) सदाफलः अविरतफलः सर्वस्मिन्नेव काले फलशाली इत्यर्थः ।

(ग) करालमुखः करालं विकटं मुखं यस्य तथाविधः ।

(घ) सुकोमलवालुकासनाथे मृदुलसैकतसमन्विते ।

प्रिय इति । यो जनः प्रियो वा द्वेष्यो वा, मूर्खो वा, यदि वा पण्डितः

वैश्वदेवान्तमापन्नः सोऽतिथिः स्वर्गसंक्रमः ॥ २ ॥
न पृच्छेत् शरणं गोत्रं न च विद्यां कुलं न च ।
अतिथिं वैश्वदेवान्ते श्राद्धे च मनुरब्रवीत् ॥ ३ ॥
दूरमार्गश्रमश्रान्तं वैश्वदेवान्तमागतम् ।
अतिथिं पूजयेद्यस्तु स याति परमां गतिम् ॥ ४ ॥
अपूजितोऽतिथिर्यस्य गृहाद् याति विनिश्वसन् ।
गच्छन्ति विमुखास्तस्य पितृभिः सह देवताः ॥ ५ ॥

एवम् उक्त्वा तस्मै जम्बूफलानि ददौ। सोऽपि तानि भक्षयित्वा तेन सह चिरं गोष्ठीसुखम् अनुभूय भूयोऽपि स्वभवनम् अगात्। एवं नित्यमेव तौ वानरमकरौ जम्बूच्छायास्थितौ विविधशास्त्रगोष्ठ्या कालं नयन्तौ सुखेन तिष्ठतः। सोऽपि मकरो भक्षितशेषाणि जम्बूफलानि गृहं गत्वा स्वपत्न्याः प्रयच्छति। अथ अन्यतमे दिवसे तया स पृष्टः, नाथ! क्व एवंविधानि (ङ) अमृतफलानि प्राप्नोषि। स आह, भद्रे! मम अस्ति परमसुहृद् रक्तमुखो नाम वानरः, स प्रीतिपूर्वम् इमानि फलानि प्रयच्छति। अथ तया अभि-

---

वैश्वदेवान्तं वैश्वदेवाख्यबलिसमयात् परम् आपन्नः उपस्थितो भवतीति शेषः, सः स्वर्गसंक्रमः स्वर्गस्य गमने सेतुभूतः अतिथिः। तादृशातिथिसत्कारात् स्वर्गलाभो जायते इति भावः ॥ २ ॥

नेति। मनुरब्रवीत् वैश्वदेवान्ते श्राद्धे च उपस्थितमिति शेषः अतिथिं शरणं गृहं न, गोत्रं न, विद्यां न, तथा कुलञ्च न पृच्छेत् ॥ ३ ॥

दूरेति। यस्तु दूरेण मार्गेण अध्वगमनेन यः श्रमः तेन श्रान्तं क्लान्तं वैश्वदेवान्तम् आगतम् अतिथिं पूजयेत्, स परमां गतिं याति प्राप्नोति ॥ ४ ॥

अपूजित इति। अतिथिः अपूजितः असत्कृतः अतएव विनिश्वसन् दीर्घं निश्वसन् यस्य गृहात् याति गच्छति, तस्य देवता गृहस्था इति शेषः पितृभिः सह विमुखा गच्छन्ति ॥ ५ ॥

(ङ) अमृतकल्पानि अमृततुल्यानि।

हितम्, यः सदा एव अमृतप्रायाणि ईदृशानि फलानि भक्षयति तस्य हृदयम् अमृतमयं भविष्यति। तत् यदि मया भार्य्यया ते प्रयोजनं, ततः तस्य हृदयं मह्यं प्रयच्छ, येन तद्भक्षयित्वा जरामरणरहिता त्वया सह भोगान् भुनज्मि। स आह, भद्रे! मा मा एवं वद। यतः स प्रतिपन्नो (च) ऽस्माकं भ्राता, अपरं फलदाता, ततो व्यापादयितुं न शक्यते। तत् त्यज एनं मिथ्याग्रहम् (छ)। उक्तञ्च,

एकं प्रसूयते माता द्वितीयं वाक् प्रसूयते।
वाग्जातमधिकं प्रोचुः सोदर्य्यादपि बन्धुवत्॥ ६॥

अथ मकरी आह, त्वया कदाचित् अपि मम वचनं न अन्यथा कृतम्। तत् नूनं (ज) सा वानरी भविष्यति यतः तस्या अनुरागतः सकलमपि दिनं तत्र गमयसि। तत् त्वं ज्ञातो मया सम्यक्। यतः,

साह्लादं वचनं प्रयच्छसि न मे नो वाञ्छितं किञ्चन
प्रायः प्रोच्छ्वसिषि द्रुतं हुतवहज्वालासमं रात्रिषु।
कण्ठाश्लेषपरिग्रहे शिथिलता यन्नादराच्चुम्बसे
तत्ते धूर्त्त! हृदि स्थिता प्रियतमा काचिन्ममेवापरा॥७॥

---

(च) प्रतिपन्नः अङ्गीकृतः।

(छ) मिथ्याग्रहम् अयुक्तमाग्रहम्।

एकेति। माता जननी एकं सोदरमिति शेषः प्रसूयते जनयति, वाक् वाणी द्वितीयं भ्रातरमिति शेषः प्रसूयते, वाग्जातं भ्रातरं सोदर्य्यादपि भ्रातुः बन्धुवत् मित्रमिव अधिकं श्रेष्ठं प्रियमिति भावः प्रोचुः पण्डिता इति शेषः॥ ६॥

(ज) नूनं मन्ये इत्यर्थः।

साह्लादमिति। हे धूर्त्त! त्वं मे मम साह्लादं सानन्दं वचनं न, तथा किञ्चन वाञ्छितम् अभिलषितं नो प्रयच्छसि प्रददासि। रात्रिषु प्रायः बाहुल्येन हुतवहज्वालासमम् अग्निशिखासदृशमुष्णमिति भावः द्रुतं पुनः पुनः प्रोच्छ्वसिषि निश्वासं त्यजसि। कण्ठे यः आश्लेषः आलिङ्गनं तस्य परिग्रहे ग्रहणे

सोऽपि पत्न्याः पादोपसंग्रहं (झ) कृत्वा अङ्कोपरि निधाय तस्याः कोपकोटिमापन्नायाः (ञ) पत्न्याः सुदीनम् उवाच।

मयि ते पादपतिते किङ्करत्वमुपागते।
त्वं प्राणवल्लभे ! कस्मात् कोपने ! कोपमेष्यसि ? ॥ ८ ॥

सा अपि तद्वचनम् आकर्ण्य अश्रुप्लुतमुखी (ट) तमुवाच।

सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमभावरम्या।
अस्माकमस्ति न कथञ्चिदिहावकाशः
तस्मात् कृतं चरणपातविडम्बनाभिः ॥ ९ ॥

अपरं सा यदि तव वल्लभा न भवति तत् किं मया भणितेऽपि तां न व्यापादयसि। अथ यदि स वानरस्तत्

---

शिथिलता शैथिल्यम् अनास्था इत्यर्थः तवेति शेषः यच्च आदरात् न चुम्बसि न चुम्बनं करोषि, तत् तस्मात् मन्येव मदपेक्षयैवेत्यर्थः प्रियतमा काचित् अपरा नारी ते तव हृदि स्थितेति मन्ये इति अध्याहार्य्यम्। शार्दूलविक्रीड़ितं वृत्तम् ॥ ७ ॥

(झ) पादोपसंग्रहं चरणधारणम्।

(ञ) कोपकोटिं कोपस्य परां काष्ठामित्यर्थः। आपन्नायाः प्राप्तायाः अतिक्रुद्धाया इत्यर्थः सुदीनम् अतिकातरम्।

मयीति। हे कोपने ! प्राणवल्लभे ! जीवितेश्वरि ! ते तव पादपतिते किङ्करत्वं दासत्वमुपागते मयि त्वं कस्मात् कोपम् एष्यसि प्राप्स्यसि ? कस्मात् कुप्यसि इत्यर्थः ॥ ८ ॥

(ट) अश्रुप्लुतमुखी नेत्रजलपूर्णवदना।

सार्द्धमिति। हे धूर्त्त ! मनोरथशतैः सार्द्धं कृत्रिमेण कपटेन नतु वास्तवेन, भावेन विलासविशेषेण रम्या मनोहारिणी सैव कान्ता तव मनसि स्थिता। इह संसारे अस्माकं कश्चित् कथञ्चित् अवकाशः स्थानं नास्ति, तस्मात् चरणपातविडम्बनाभिः पादपतनरूपप्रतारणाभिः कृतम् अलं न किमपि प्रयोजनम् इत्यर्थः। यदान्यत्र मदीयं स्थानं नास्ति तदा त्वदधीना एव कृशमनुभविष्याम्येव इति भावः। वसन्ततिलकं वृत्तम् ॥ ९ ॥

कः तेन सह तव स्नेहः ? तत् किं बहुना, यदि तस्य हृदयं न भक्षयामि, तत् मया प्रायोपवेशनं (ठ) कृतं विद्धि। एवं तस्याः तत् निश्चयं ज्ञात्वा चिन्ताव्याकुलितहृदयः स प्रोवाच। अथवा साधु इदमुच्यते,

वज्रलेपस्य मूर्खस्य नारीणां कर्कटस्य च।
एको ग्रहस्तु मीनानां नीलीमद्यपयोस्तथा ॥ १० ॥

तत् किं करोमि ? कथं स मे बध्यो भवति ? इति विचिन्त्य वानरपार्श्वम् अगमत्। वानरोऽपि चिरायान्तं तं सोद्वेगम् अवलोक्य प्रोवाच, भो मित्र! किम् अद्य चिरवेलायां समायातोऽसि ? कस्मात् साह्लादं न आलपसि ? न सुभाषितानि पठसि ? स आह, मित्र! अहं तव भ्रातृजायया (ड) निष्ठुरतरैर्वाक्यैः अभिहितः, भोः कृतघ्न! मा मे त्वं स्वमुखं दर्शय यतः त्वं प्रतिदिनं मित्रम् उपजीवसि (ढ) न च तस्य पुनः प्रत्युपकारं गृहदर्शनमात्रेण अपि न करोषि। तत् ते प्रायश्चित्तम् (ण) अपि नास्ति। उक्तञ्च,

ब्रह्मघ्ने च सुरापे च चौरे भग्नव्रते शठे।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः॥११॥

---

(ठ) प्रायोपवेशनम् अनशनव्रतं अभीजनेन प्राणान् त्यक्ष्यामीति भावः।

वज्रलेपस्येति। पूर्वं व्याख्यातम् ॥ १० ॥

(ड) भ्रातृजायया मत्पत्न्या इति भावः निष्ठुरतरैः अतिनिष्ठुरैः। कृतघ्न! उपकृतामानिन्।

(ढ) उपजीवसि मित्रात् उपकारं प्राप्नोषि इत्यर्थः।

(ण) प्रायश्चित्तं पापशान्तिः।

ब्रह्मघ्ने इति। ब्रह्मघ्ने ब्रह्मघातिनि सुरापे मद्यपायिनि चौरे तस्करे, भग्नव्रते स्खलितब्रह्मचर्य्ये तथा शठे धूर्त्ते प्रतारके इत्यर्थः सद्भिः साधुभिः निष्कृतिः

तत् त्वं मम देवरं गृहीत्वा अद्य प्रत्युपकारार्थं गृहम् आनय। नो चेत् त्वया सह मे परलोके (त) दर्शनम्। तत् अहं तया एवं प्रोक्तः तव सकाशम् आगतः। तत् अद्य तया सह त्वदर्थे कलहायतो (थ) मम इयती वेला विलग्ना। तत् आगच्छ मे गृहम्। तव भ्रातृपत्नी रचितचतुष्का प्रगुणित-वस्त्रमणिमाणिक्याद्युचिताभरणा द्वारदेशबद्धवन्दनमाला (द) सोत्कण्ठा तिष्ठति। मर्कट आह, भो मित्र! युक्तम् अभिहितं मद्भ्रातृपत्न्या। उक्तञ्च,

वर्जयेत् कौलिकाकारं मित्रं प्राज्ञतरो नरः।
आत्मनः सम्मुखं नित्यं य आकर्षति लोलुपः॥ १२॥

तथाच, ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति।
भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम्॥ १३॥

---

प्रायश्चित्तं विहिता निरूपिता, किन्तु कृतघ्ने उपकारिद्वेषिणि अथवा अकृतज्ञे जने निष्कृतिः नास्ति॥ ११॥

(त) परलोके दर्शनम् अहं करिष्यामीति भावः।

(थ) कलहायतः कलहं कुर्वतः। विलग्ना भूता।

(द) रचितचतुष्का सज्जितचत्वरा। प्रगुणितेति। प्रगुणितानि प्रकृष्ट-गुणानि महार्हाणीत्यर्थः वस्त्रमणिमाणिक्यादीनि उचितानि उपयुक्तानि आभरणानि अलङ्काराः यस्यास्तादृशी नानालङ्कारभूषिता इत्यर्थः। द्वारेति। द्वार-देशे बद्धा रचिता लम्बिता इत्यर्थः वन्दनमाला वन्दनपुष्पमाल्या यया सा।

वर्जयेदिति। प्राज्ञतरः अतिप्रज्ञावान् नरः कौलिकाकारं कपटमयम् इत्यर्थः मित्रं वर्जयेत् त्यजेत्, यः कपटसुहृत् लोलुपः लुब्धः सन् नित्यं सततम् आत्मनः सम्मुखम् आकर्षति मित्रमिति शेषः कथमपि मित्रं वञ्चयितुं स्वायत्त-मेव चिकीर्षति इत्यर्थः॥ १२॥

ददातीति। प्रीतेः प्रणयस्य लक्षणं चिह्नं षड्विधम् एकेन ददाति, द्वितीयेन प्रतिगृह्णाति, तृतीयेन गुह्यं रहस्यम् आख्याति आलपति, चतुर्थेन पृच्छति, पञ्चमेन भुङ्क्ते, षष्ठेन भोजयते च। दानं ग्रहणं रहस्यकथनं प्रश्नः भोजनं भोजनदानञ्च एतत् षट्कं प्रीतिनिबन्धनमिति भावः॥ १३॥

परं वयं वनचराः, युष्मदीयञ्च जलान्ते (ध) गृहं, तत् कथं शक्यते तत्र गन्तुम् ? तस्मात् तामपि मे भ्रातृपत्नीम् अत्र आनय येन प्रणम्य तस्या आशीर्वादं गृह्णामि। स आह, भो मित्र ! अस्ति समुद्रान्तरे सुरम्ये पुलिनप्रदेशेऽस्मद्‌गृहम्। तत् मम पृष्ठम् आरूढः सुखेन अकृतभयो गच्छ। सोऽपि तच्छ्रुत्वा सानन्दम् आह, भद्र ! यदि एवं तत् किं विलम्ब्यते त्वर्य्यताम्। एषोऽहं तव पृष्ठम् आरूढः। तथानुष्ठिते अगाधे जलधौ गच्छन्तं मकरम् आलोक्य भयत्रस्तमना वानरः प्रोवाच। भ्रातः ! शनैः शनैः गम्यताम्। जलकल्लोलैः प्लाव्यते (न) मे शरीरम्। तत् आकर्ण्य मकरः चिन्तयामास। असौ अगाधं जलं प्राप्तो मे वशः सञ्जातः, मत्पृष्ठगतः तिलमात्रमपि चलितुं न शक्नोति। तस्मात् कथयामि अस्य निजाभिप्रायं, येन अभीष्टदेवतास्मरणं करोति। आह च, मित्र! त्वं मया बधाय समानीतो भार्य्यावाक्येन विश्वास्य, तत् स्मर्य्यताम् अभीष्टदेवता। स आह, भ्रातः ! किं मया तस्याः तवापि च अपकृतं येन मे बधोपायः चिन्तितः। मकर आह, भोः ! तस्याः तावत् तव हृदयस्य अमृतमयफलरसास्वादनमृष्टस्य भक्षणे दोहदः (प) सञ्जातः। तेन एतदनुष्ठितम्। प्रत्युत्पन्नमतिः वानर आह, भद्र ! यदि एवं तत् किं त्वया मम तत्र एव न व्याहृतम् ? (फ) येन स्वहृदयं जम्बूकोटरे सदा एव मया सुगुप्तं (ब) कृतम्, तद् भ्रातृपत्न्या

(ध) जलान्ते जलमध्ये।

(न) प्लाव्यते क्लाद्यते।

(प) दोहदः गर्भावस्थायां मनोरथः।

(फ) व्याहृतम् उक्तम्।

(ब) जम्बूकोटरे जम्बूवृक्षगह्वरे। सुगुप्तं सुरक्षितम्।

अर्पयामि। त्वया अहं शून्यहृदयोऽत्र कस्मात् आनीतः? तदाकर्ण्य मकरः सानन्दमाह, भद्र! यदि एवं तदर्पय मे हृदयं येन सा दुष्टपत्नी तद्भक्षयित्वा अनशनात् उत्तिष्ठति। अहं त्वां तमेव जम्बूपादपं प्रापयामि। एवमुक्त्वा निवर्त्य जम्बूतलम् अगात्। वानरोऽपि कथमपि जल्पितविविध-देवतोपचारपूजः तीरमासादितवान् (भ) ततश्च दीर्घतरचङ्क्रमणेन (म) तमेव जम्बूपादपमारूढः चिन्तयामास, अहो! लब्धाः तावत् प्राणाः। अथवा साधु इदमुच्यते,

न विश्वसेदविश्वस्ते विश्वस्तेऽपि न विश्वसेत्।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति॥ १४॥

तन्मम एतदद्य पुनर्जन्मदिनमिव सञ्जातम्। इति चिन्तमानं मकर आह, भो मित्र! अर्पय तत् हृदयं यथा ते भ्रातृपत्नी भक्षयित्वा अनशनात् उत्तिष्ठति। अथ विहस्य निर्भर्त्सयन् वानरः तमाह, धिक् धिक् मूर्ख! विश्वासघातक! किं कस्यचित् हृदयद्वयं भवति? तदाशु गम्यताम्, जम्बूवृक्षस्य अधस्तात् न भूयोऽपि त्वया अत्र आगन्तव्यम्। उक्तञ्च यतः,

सकृद्दुष्टञ्च यो मित्रं पुनः सन्धातुमिच्छति।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा॥ १५॥

---

(भ) जल्पितेति। जल्पितः यदि अहम् अस्मात् सङ्कटात् जीवामि तदा एवमेवंरूपेण देवतास्तर्पयामीति चिन्तितः विविधानां बह्वीनां देवतानाम् उपचारः पूजा येन तथोक्तः।

(म) दीर्घतरचङ्क्रमणेन दीर्घतरेण उत्प्लवनेन इत्यर्थः।

नेति। अविश्वस्ते जने न विश्वसेत्, विश्वस्तेऽपि जने न विश्वसेत्। विश्वासात् उत्पन्नं जातं भयं मूलानि अपि निकृन्तति निःशेषेण छिनत्ति॥ १४॥

सकृदिति। यः सकृत् एकवारं दुष्टं मित्रं पुनः सन्धातुं सम्मीलयितुम् इच्छति, सः अश्वतरी गर्भं यथा मृत्युम् उपगृह्णाति आश्रयति॥ १५॥

तत् श्रुत्वा मकरः सविलक्षं (य) चिन्तितवान्, अहो! मया अतिमूढेन किमस्य स्वचित्ताभिप्रायो निवेदितः, तद्यदि असौ पुनरपि कथञ्चिद्विश्वासं गच्छति तद्भूयोऽपि विश्वासयामि। आह च, मित्र! हास्येन मया तेऽभिप्रायो लब्धः। तस्या न किञ्चित् तव हृदयेन प्रयोजनम्। तत् आगच्छ प्राघुणिकन्यायेन (र) अस्मद्गृहम्। तव भ्रातृपत्नी सोत्कण्ठा वर्त्तते। वानर आह, भो दुष्ट! गम्यताम्, अधुना नाहम् आगमिष्यामि। उक्तञ्च,

बुभुक्षितः किं न करोति पापम्
क्षीणा जना निष्करुणा भवन्ति।
आख्याहि भद्रे! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम्॥ १६॥

मकर आह, कथमेतत्? स आह।

## कथा २।

कस्मिंश्चित् कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसति स्म। स कदाचित् दायादैः उद्वेजितोऽरघट्टघटीम् आरुह्य निष्क्रान्तः (ल)। अथ तेन चिन्तितम्, यत् कथं तेषां दायादानां मया प्रत्यपकारः कर्त्तव्यः। उक्तञ्च,

---

(य) सविलक्षं सलज्जम्।

(र) प्राघुणिकन्यायेन अतिथिरूपेण।

बुभुक्षित इति। बुभुक्षितः क्षुधितः जनः किं पापं न करोति? सर्वमेव बुभुक्षानिवारणार्थं करोति इत्यर्थः। क्षीणाः क्षुधयेति शेषः। जना निष्करुणा निर्दया भवन्ति। हे भद्रे! प्रियदर्शनस्य आख्याहि कथय, गङ्गदत्तः पुनः कूपं न एति न आगच्छति। उपजातिवृत्तम्॥ १६॥

(ल) दायादैः ज्ञातिभिः उद्वेजितः विरक्तीकृतः। अरघट्टघटीं कूपस्य सोपानपङ्क्तिम्। निष्क्रान्तः कूपात् निर्गतः।

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ॥ १७ ॥

एवं चिन्तयन् बिले प्रविशन्तं कृष्णसर्पम् अपश्यत्। तं दृष्ट्वा भूयोऽपि अचिन्तयत्, यत् एनं तत्र कूपे नीत्वा सकलदायादानाम् उच्छेदं करोमि। उक्तञ्च,

शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम्।
स्वकार्य्याय यतो न स्यात्काचित्पीड़ात्र तत्क्षये ॥१८॥

तथाच, शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ॥ १९ ॥

एवं स विभाव्य बिलद्वारं गत्वा तम् आहूतवान्, एहि एहि प्रियदर्शन! (व) एहि, तत् श्रुत्वा सर्पः चिन्तयामास। य एष माम् आह्वयति, स स्वजातीयो न भवति यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके सन्धानं (श) नास्ति। तदत्र एव दुर्गे स्थितः तावत् वेद्मि कोऽयं भविष्यति। उक्तञ्च,

---

आपदीति। येन जनेन आपदि अपकृतम् अनिष्टं कृतं येन च विषमासु, कष्टासु दशासु हसितं हास्यं कृतं तयोरुभयोः अपकृत्य अपकारं कृत्वा नरः पुनर्जातं मन्ये। वैरनिर्यातने परमं सुखमिति भावः। आर्य्यावृत्तम् ॥ १७ ॥

शत्रुभिरिति। स्वकार्य्याय स्वं कार्य्यं साधयितुं शत्रुभिः सह शत्रुं तथा बलिना शत्रुणा सह बलवत्तरम् अतिप्रबलं जनं योजयेत् सङ्गमयेत् यतः अत्र संसारे तत्क्षये तेषां शत्रूणां क्षये काचित् पीड़ा न स्यात् प्रत्युत सुखमेव स्यादिति भावः ॥ १८ ॥

शत्रुमिति। प्राज्ञः बुद्धिमान् जनः तीक्ष्णेन दारुणेन शत्रुणा तीक्ष्णं दारुणं शत्रुं व्यथाकरं क्लेशप्रदं कण्टकम् अङ्गविद्धमिति शेषः कण्टकेनेव सुखार्थाय सौख्यनिमित्तम् उन्मूलयेत् ॥ १९ ॥

(व) प्रियदर्शन! प्रियं दर्शनं यस्य तथोक्तः तत्सम्बुद्धौ।

(श) सन्धानं सम्मिलनं सख्यम् इत्यर्थः।

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन सङ्गतिं कुर्यादित्युवाच बृहस्पतिः ॥ २० ॥

कदाचित् कोऽपि (ष) मन्त्रवादी औषधचतुरो वा माम् आहूय बन्धने क्षिपति । अथवा कश्चित् पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थं मामाह्वयति । आह च, भोः ! को भवान् ? स आह, अहं गङ्गदत्तो नाम मण्डूकाधिपतिः त्वत्सकाशे मैत्र्यर्थम् अभ्यागतः । तच्छ्रुत्वा सर्प आह, भो ! अश्रद्धेयमेतत् यत् तृणानां वह्निना सह सङ्गमः । उक्तञ्च,

यो यस्य जायते बध्यः स स्वप्नेऽपि कथञ्चन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ? ॥ २१ ॥

गङ्गदत्त आह, भोः ! सत्यमेतत् । स्वभाववैरी त्वम् अस्माकम् । परं परपरिभवात् प्राप्तोऽहं ते सकाशम् । उक्तञ्च,

सर्वनाशे च सञ्जाते प्राणानामपि संशये ।
अपि शत्रुं प्रणम्यापि रक्षेत् प्राणधनानि च ॥२२॥

सर्प आह, कथय कस्मात् ते परिभवः ? स आह, दायादेभ्यः । सोऽपि आह, क्व ते आश्रयो (स) वाप्यां कूपे तड़ागे

---

यस्येति । यस्य जनस्य शीलं चरित्रं न, कुलं वंशः, संश्रयः आवासश्च न ज्ञायते, तेन जनेन सङ्गतिं सम्मिलनं न कुर्यादिति बृहस्पतिः उवाच ॥ २० ॥

(ष) मन्त्रवादी सर्पमन्त्रोच्चारणकुशलः ।

य इति । यः यस्य जनस्य बध्यः जायते भवति, स स्वप्नेऽपि कथञ्चन तत्समीपं न अभ्येति न गच्छति, वैरिसमीपे कदापि न गन्तव्यमित्यर्थः तत् तदा किं कथम् एवं प्रजल्पसि ? आलपसि ? अहं तव वैरी, त्वं मम समीपमागत एव मया बध्यसे एवं स्थिते किमर्थं त्वमेवं मामाह्वयसीति भावः ॥ २१ ॥

सर्वनाशे इति । सर्वनाशे प्राणानामपि संशये च सञ्जाते उपस्थिते सति शत्रुं प्रणम्यापि शरणं प्रपद्यापि इत्यर्थः प्राणधनानि प्राणान् धनानि च रक्षेत् ॥ २२ ॥

(स) आश्रयः आवासः ।

ह्रदे वा तत्कथय स्वाश्रयम्? तेनोक्तम्, पाषाणचयनिबद्धे कूपे। सर्प आह, अहो! अपदा वयं, तन्नास्ति तत्र मे प्रवेशः, प्रविष्टस्य च स्थानं नास्ति, यत्र स्थितः तव दायादान् व्यापादयामि। तद्गम्यताम्। उक्तञ्च,

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितञ्च परिणामे यत्तदाद्यं भूतिमिच्छता॥ २३॥

गङ्गदत्त आह, भोः! समागच्छ त्वम् अहं सुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरम् अस्ति, तत्र स्थितः त्वं लीलया दायादान् व्यापादयिष्यसि। तच्छ्रुत्वा सर्पो व्यचिन्तयत्, अहं तावत् परिणतवयाः, (ङ) कदाचित् कथञ्चित् मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण (च) मे दर्शितः। तद्गत्वा तान् मण्डूकान् भक्षयामीति। अथवा साधु इदमुच्यते,

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः।
स हि सर्वसुखोपायां वृत्तिमारचयेद् बुधः॥ २४॥

एवं विचिन्त्य तमाह, भो गङ्गदत्त! यदि एवं तदग्रे भव येन तत्र गच्छावः। गङ्गदत्त आह, भोः प्रियदर्शन! अहं त्वां

---

यदिति। यत् वस्तु ग्रसितुं भक्षयितुं शक्यं ग्रस्यं तथा प्रशस्तं यच्च ग्रस्तं भक्षितं सत् परिणमेत् परिपाकं गच्छेत्, यच्च परिणामे परिपाके हितञ्च स्यादिति शेषः, भूतिमिच्छता कल्याणार्थिना तत् आद्यं भक्षणीयम्॥ २३॥

(ङ) परिणतवयाः स्थविरः।

(च) कुलाङ्गारेण वंशक्षयकारिणेति भावः।

य इति। यः जनः प्राणैः परिक्षीणः क्षयं गन्तुमुद्यत इति भावः तथा सहायैः परिवर्जितः विहीनः, स हि बुधः विज्ञश्चेदिति शेषः तदा सर्वसुखोपायां सर्वसुखकरीं वृत्तिम् आरचयेत् विदध्यात्॥ २४॥

सुखोपायेन तत्र नेष्यामि स्थानञ्च दर्शयिष्यामि। परं त्वया अस्मत्परिजनो रक्षणीयः। केवलं यानहं तव दर्शयिष्यामि ते एव भक्षणीया इति। सर्प आह, साम्प्रतं त्वं मे मित्रं जातम्। तन्न भेतव्यम् तव वचनेन भक्षणीयाः ते दायादाः एवमुक्त्वा बिलात् निष्क्रम्य तम् आलिङ्ग्य च तेनैव सह प्रस्थितः। अथ कूपम् आसाद्य अरघट्टघाटिकामार्गेण सर्पः तेन आत्मना (क) स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्ण-सर्पं कोटरे धृत्वा दर्शिताः ते दायादाः। ते च तेन शनैः शनैः भक्षिताः। अथ मण्डूकाभावे सर्पेण अभिहितम्। भद्र! निःशेषिताः ते रिपवः तत् प्रयच्छ अन्यत् मे किञ्चित् भोजनं, यतोऽहं त्वया अत्र आनीतः। गङ्गदत्त आह, भद्र! कृतं त्वया मित्रकृत्यम्, तत् साम्प्रतम् अनेन एव घाटिकायन्त्रमार्गेण गम्यतामिति। सर्प आह, भो गङ्गदत्त! न सम्यगभिहितं त्वया। कथमहं तत्र गच्छामि। मदीयबिलदुर्गम् अन्येन रुद्धं भविष्यति। तस्मात् अत्रस्थस्य मे मण्डूकम् एकैकं स्ववर्गीयं प्रयच्छ, नो चेत् सर्वानपि भक्षयिष्यामीति। तच्छ्रुत्वा गङ्ग-दत्तो व्याकुलमना व्यचिन्तयत्। अहो! किमेतत् मया कृतं सर्पमानयता, तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्ष-यिष्यति। अथवा युक्तमुच्यते।

योऽमित्रं कुरुते मित्रं वीर्य्याभ्यधिकमात्मनः।
स करोति न सन्देहः स्वयं हि विषभक्षणम्॥ २५॥

---

(क) आत्मना स्वयम्।

य इति। यः जनः आत्मनः स्वस्मात् वीर्य्येण अभ्यधिकम् अधिकबलम् इत्यर्थः अमित्रं शत्रुं मित्रं कुरुते, स स्वयं हि आत्मनैव विषभक्षणं करोति, सन्देहः न नास्तीति शेषः॥ २५॥

तत् प्रयच्छामि अस्य एकं दिनं प्रति सुहृदम्। उक्तञ्च,

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन वाड़वं सागरो यथा ॥ २६ ॥

तथाच, यो दुर्बलोऽणूनपि याच्यमानो
बलीयसा यच्छति नैव साम्ना।
प्रयच्छते नैव च दर्श्यमानं
खारीं स चूर्णस्य पुनर्ददाति ॥ २७ ॥

तथाच, सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्य्यं सर्वनाशो हि दुस्तरः ॥ २८ ॥

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान् नरः।
एतदेव हि पाण्डित्यं यत् स्वल्पात् भूरिरक्षणम् ॥२९॥

एवं निश्चित्य नित्यमेकैकम् आदिशति (ख)। सोऽपि

---

सर्वस्वेति। बुद्धियुताः बुद्धिमन्तो नराः सागरः वाड़वं वड़वानलं यथा सर्वस्वहरणे युक्तम् उद्यतं शत्रुम् अल्पदानेन तोषयन्ति प्रीणयन्ति ॥ २६ ॥

य इति। यः दुर्बलः बलीयसा प्रबलेन याच्यमानः अभ्यर्थ्यमानः सन् साम्ना सान्त्वेन अणूनपि अल्पानपि न यच्छति न ददाति, तथा दर्श्यमानं नैव च प्रयच्छते न ददाति, पुनः चूर्णस्य खारीं तदाख्यपरिमाणविशेषं ददाति, यत् किञ्चित् चूर्णं याचितो बलवता तददाने तेनाक्रान्तः चूर्णराशिं दत्त्वा तं यथा सान्त्वयति तथा अल्पदानेन परित्राणसम्भवे तददाने सर्वस्वदानेनापि न शान्तिरिति भावः। उपजातिवृत्तम् ॥ २७ ॥

सर्वेति। पण्डितो जनः सर्वनाशे समुत्पन्ने समुपस्थिते सति अर्द्धं त्यजति, अर्द्धेन त्यक्तावशिष्टेनेति भावः कार्य्यं स्वमिति शेषः कुरुते, हि यतः सर्वनाशः सर्वेषां नाशः दुस्तरः दुःसह इत्यर्थः ॥ २८ ॥

नेति। मतिमान् नरः स्वल्पस्य कृते निमित्तं भूरि प्रभूतं बहु इत्यर्थः न नाशयेत्। स्वल्पात् स्वल्पव्ययात् स्वल्पेन व्ययेनेत्यर्थः यत् भूरिरक्षणं बहुरक्षणम् एतदेव पाण्डित्यं चातुर्य्यम् इत्यर्थः ॥ २९ ॥

(ख) आदिशति ददाति भक्षयितुमाज्ञापयति।

तं भक्षयित्वा तस्य परोक्षेऽन्यानपि भक्षयति। अथवा साधु इदमुच्यते,

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते।
एवं चलितवित्तस्तु वित्तशेषं न रक्षति॥ ३०॥

अथ अन्यदिने तेन अपरान् मण्डूकान् भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं मत्वा गङ्गदत्तः तारस्वरेण धिक् धिक् प्रलापपरः कथञ्चिदपि न विरराम। ततः स्वपत्न्या अभिहितः।

किं क्रन्दसि दुराक्रन्द! स्वपक्षक्षयकारक!।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति?॥ ३१॥

तत् अद्यापि विचिन्त्यताम् आत्मनो निष्क्रमणम् (ग) अस्य बधोपायश्च अथ गच्छता कालेन सकलमपि कवलितं (घ) मण्डूककुलम्। केवलमेको गङ्गदत्तः तिष्ठति। ततः प्रियदर्शनेन भणितम्, भो गङ्गदत्त! बुभुक्षितोऽहम्, निःशेषिता सर्वे मण्डूकाः। तद्दीयतां मे किञ्चित् भोजनं यतोऽहं त्वया अत्र आनीतः। स आह, भो मित्र! न त्वया अत्र विषये मया अवस्थितेन कापि चिन्ता कार्य्या, तत् यदि मां

---

यथेति। मलिनैः वस्त्रैः उपलक्षितेनेति उपलक्षणे तृतीया, मलिनवसनैर्जनैरित्यर्थः यथा यत्र तत्र उपविश्यते वस्त्रमालिन्यशङ्काविरहादिति भावः, एवं तथा इत्यर्थः चलितवित्तः अस्थितधनः जनः वित्तशेषं न रक्षति यत् प्राप्यते तदेव भक्षयति इत्यर्थः सञ्चयासम्भवादिति भावः॥ ३०॥

किमिति। हे दुराक्रन्द। दुष्टरोदन! वृथारोदिन्! इत्यर्थः स्वपक्षक्षयकारक! स्ववर्गध्वंसिन्! किं कथं क्रन्दसि? रोदिषि? स्वपक्षस्य क्षये विनाशे जाते सति को जनः नः अस्माकं त्राता रक्षिता भविष्यति?॥ ३१॥

(ग) निष्क्रमणं निर्गमनम्।

(घ) कवलितं भक्षितम्।

प्रेषयसि ततोऽन्यकूपस्थान् अपि मण्डूकान् विश्वास्य अत्र आनयामि। स आह, मम तावत् त्वम् अभक्ष्यो भ्रातृस्थाने, तत् यदि एवं करोषि तत् साम्प्रतं पितृस्थाने भवसि, तदेवं क्रियतामिति। सोऽपि तत् आकर्ण्य अरघट्टघाटिकाम् आश्रित्य विविधदेवतोपकल्पितपूजोपयाचितः (ङ) तस्मात् कूपात् विनिष्क्रान्तः। प्रियदर्शनोऽपि तदाकाङ्क्षया (च) तत्रस्थः प्रतीक्षमाणः तिष्ठति। अथ चिरात् अनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधाम् उवाच, भद्रे! क्रियतां स्तोकं (छ) साहाय्यम्। यतः चिरपरिचितः ते गङ्गदत्तः, तद्गत्वा तत् सकाशं कुत्रचित् जलाशये अन्विष्य मम सन्देशं (ज) कथय। येन आगम्यताम् एकाकिना अपि भवता द्रुततरं यदि अन्ये मण्डूका न आगच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि। तथा यदि अहं तव विरुद्धं आचरामि तत् सुकृतमन्तरे मया विधृतम् (झ) गोधा अपि तद्वचनात् गङ्गदत्तं द्रुततरम् अन्विष्य आह, भद्र गङ्गदत्त! स तव सुहृत् प्रियदर्शनः तव मार्गं समीक्षमाणः (ञ) तिष्ठति। तत् शीघ्रम् आगम्यतामिति। अपरञ्च तेन तव विरूपकरणे

---

(ङ) विविधेति। विविधाभ्यः देवताभ्यः उपकल्पिता सङ्कल्पिता या पूजा तया उपयाचितः आत्मप्राणरक्षार्थं याच्ञा जातोऽस्य तथोक्तः इतोऽस्य जाते इति इतप्रत्ययः।

(च) तदाकाङ्क्षया तत्प्रतीक्षया।

(छ) स्तोकम् अल्पम्।

(ज) सन्देशं वाचिकम्।

(झ) तत् तदा सुकृतं मदीयमिति भावः अन्तरे अस्मिन् अवसरे इत्यर्थः विधृतं तदर्थं रचितम् इत्यर्थः।

(ञ) समीक्षमाणः प्रतीक्षमाणः।

(ट) सुकृतमन्तरे धृतम्। तत् निःशङ्केन मनसा समागम्यताम्। तत् आकर्ण्य गङ्गदत्त आह,

बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति।
आख्याहि भद्रे ! प्रियदर्शनस्य
न गङ्गदत्तः पुनरेति कूपम् ॥ ३२ ॥

एवमुक्त्वा स तां विसर्जयामास।

तत् भो दुष्टजलचर ! अहमपि गङ्गदत्त इव त्वद्गृहे न कथञ्चित् अपि यास्यामि। तत् श्रुत्वा मकर आह, भो मित्र ! न एतद् युज्यते। सर्वथा एव मे कृतघ्नतादोषम् अपनय (ठ) मद्गृहागमनेन। अथवा अत्र अहम् अनशनात् (ड) प्राणत्यागं तव उपरि करिष्यामि। वानर आह, मूढ़ ! किम् अहं लम्बकर्णो मूर्खो ? दृष्टापायोऽपि स्वयमेव तत्र गत्वा आत्मानं व्यापादयामि।

आगतश्च गतश्चैव दृष्ट्वा सिंहपराक्रमम्।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥ ३३ ॥

मकर आह, भद्र ! स को लम्बकर्णः ? कथं दृष्टापायो(ढ)ऽपि मृतः ? तत् मे निवेद्यताम्। वानर आह,

---

(ट) विरूपकरणे विरुद्धाचरणे।

बुभुक्षित इति। पूर्वं व्याख्यातम् ॥ ३२ ॥

(ठ) कृतघ्नतादोषम् अकृतज्ञतादोषम्। अपनय वारय।

(ड) अनशनात् अनाहारात्।

आगत इति। यः आगतश्च उपस्थितश्च सिंहस्य पराक्रमं दृष्ट्वा गतश्च पलायितश्च किन्तु यतः अकर्णहृदयः कर्णहृदयरहितः मूर्खश्च, ततः पुनरागतः ॥ ३३ ॥

(ढ) दृष्टापायः दृष्टः अपायः आसन्नपात इत्यर्थः येन तथाभूतः।

## कथा ३ ।

कस्मिंश्चित् वनोद्देशे करालकेशरो (ण) नाम सिंहः प्रतिवसति स्म। तस्य च धूसरको नाम शृगालः सदा एव अनुयायी (त) परिचारकोऽस्ति। अथ कदाचित् तस्य हस्तिना सह युद्धमानस्य शरीरे गुरुतराः प्रहाराः सञ्जाता यैः पदमेकमपि चलितुं न शक्नोति तस्य अचलनात् च धूसरकः क्षुत्-क्षामकण्ठो दौर्बल्यं गतः। अन्यस्मिन् अहनि तम् अवोचत् स्वामिन्! बुभुक्षया पीड़ितोऽहं, पदात् पदमपि चलितुं न शक्नोमि। तत्कथं ते शुश्रूषां करोमि। सिंह आह, भो! गच्छ अन्वेषय किञ्चित् सत्त्वं, येन इमाम् अवस्थां गतोऽपि व्यापादयामि। तदाकर्ण्य शृगालोऽन्वेषयन् कञ्चित्समीपवर्त्तिनं ग्रामम् आसादितवान्। तत्र लम्बकर्णो नाम गर्दभः तड़ागोपान्ते प्रविरलदूर्वाङ्कुरान् कृच्छ्रादास्वादयन् (थ) दृष्टः। ततश्च समीपवर्त्तिना भूत्वा तेन अभिहितः, माम! नमस्कारोऽयं मदीयः सम्भाव्यताम् (द) चिरात् दृष्टोऽसि। तत् कथय तत् किमेवं दुर्बलतां गतः। स आह, भो भगिनीपुत्र! किं कथयामि, रजकोऽतिनिर्दयोऽतिभारेण मां पीड़यति, घासमुष्टिम् (ध) अपि न प्रयच्छति। केवलं

---

(ण) करालेति। करालाः उत्कटाः केशरा जटा यस्य तथोक्तः यस्य जटादर्शनेनैव भयं जायते इति भावः।

(त) अनुयायी अनुचरः। परिचारकः सेवकः।

(थ) प्रविरलेति। प्रविरलाः अल्पाल्पाः दूर्वाणाम् अङ्कुराः प्ररोहाः तान्। आस्वादयन् भक्षयन्।

(द) सम्भाव्यतां गृह्यताम्।

(ध) घासमुष्टिं मुष्टिमितघासम्।

दूर्वाङ्कुरान् धूलिमिश्रितान् भक्षयामि। तत्कुतो मे शरीरे पुष्टिः ?। शृगाल आह, माम ! यदि एवं तदस्ति मरकत-सदृशशष्पप्रायो (न) नदीसनाथो रमणीयतरः प्रदेशः। तत्र आगत्य मया सह सुभाषितगोष्ठीसुखम् अनुभवन् तिष्ठ। लम्बकर्ण आह, भो भगिनीसुत ! युक्तमुक्तं भवता। परं वयं ग्राम्याः पशवोऽरण्यचारिणां बध्यास्तत् किं तेन भव्यप्रदेशेन ? (प) शृगाल आह, माम ! मैवं वद, मद्भुजपञ्जरपरिरक्षितः स देशः। तन्नास्ति कश्चित् अपरस्य तत्र प्रवेशः। परमनेन एव दोषेण रजककदर्थिताः (फ) तत्र तिस्रो रासभ्योऽनाथाः सन्ति। ताश्च पुष्टिमापन्ना यौवनोत्कटा (ब) इदं माम् ऊचुः, यदि त्वम् अस्माकं सत्यो मातुलः तदा किञ्चित् ग्रामान्तरं गत्वा अस्मद्योग्यं कञ्चित् पतिमानय। तदर्थं त्वामहं तत्र नयामि। अथ शृगालवचनानि श्रुत्वा कामपीड़िताङ्गः तम् अवोचत् भद्र ! यदि एवं तदग्रे भव, येन आगच्छामि। अथवा साधु इदमुच्यते।

नामृतं न विषं किञ्चिदेकां मुक्त्वा नितम्बिनीम्।
यस्याः सङ्गेन जीव्येत म्रियते च वियोगतः॥ ३४॥

---

(न) मरकतेति। मरकतैः हरिन्मणिभिः सदृशानि यानि शष्पाणि घासाः तत्प्रायः तद्बहुलः।

(प) भव्यप्रदेशेन उत्कृष्टस्थानेन।

(फ) रजककदर्थिताः रजकेन क्लेशिताः।

(ब) अनाथा अस्वामिकाः। पुष्टिमापन्नाः परिपुष्टशरीराः। यौवनोत्कटाः पूर्णयुवत्यः।

नेति। एकां नितम्बिनीं कान्तां मुक्त्वा विहाय किञ्चिदपि वस्तु अमृतं न, विषञ्च न, विना गृहिणीं किमपि प्रीतिं न विदधातीति भावः। यस्याः नितम्बिन्याः सङ्गेन संसर्गेण जीव्येत प्राणिति, वियोगतः विच्छेदेन म्रियते च जन इति शेषः॥ ३४॥

तथाच, यासां नाम्नापि कामः स्यात्सङ्गमं दर्शनं विना ।
तासां दृक् सङ्गमं प्राप्य यन्न द्रवति कौतुकम् ॥३५॥

तथानुष्ठिते शृगालेन सह सिंहान्तिकमागतः। सिंहोऽपि व्यथाकुलितस्तं दृष्ट्वा यावत् समुत्तिष्ठति, तावत् रासभः पलायितुम् आरब्धवान्। अथ तस्य पलायमानस्य सिंहेन तलप्रहारो (भ) दत्तः। स च मन्दभाग्यस्य व्यवसाय इव व्यर्थतां गतः। अत्रान्तरे शृगालः कोपाविष्टस्तम् उवाच, भोः! किं एवंविधः प्रहारस्ते ? यद्गर्दभोऽपि तव पुरतो बलाद्गच्छति। तत्कथं गजेन सह युद्धं करिष्यसि ? तद्दृष्टं ते बलम्। अथ विलक्षस्मितं (म) सिंह आह, भोः! किम् अहं करोमि। मया न क्रमः सज्जीकृत (य) आसीत्। अन्यथा गजोऽपि मत्क्रमाक्रान्तो (र) न गच्छति शृगाल आह, अद्यापि एकवारं तवान्तिके तमानेष्यामि। परं त्वया सज्जीकृतक्रमेण स्थातव्यम्। सिंह आह, भद्र! यो मां प्रत्यक्षं दृष्ट्वा गतः स पुनः कथम् अत्र आगमिष्यति। तदन्यत् किमपि सत्त्वम् अन्विष्यताम्। शृगाल आह, किं तव अनेन व्यापारेण ? (ल)

---

यासामिति। यासां सङ्गमं दर्शनं वा विनापि नाम्नापि नाममात्रेणैव कामः मदनोद्रेकः स्यात् तासां नारीणां दृक्सङ्गमं नेत्रसङ्गं दृष्टिपातम् इत्यर्थः प्राप्य यत् न द्रवति आर्द्रो भवति जन इति शेषः तत् कौतुकम् आश्चर्यम् ॥ ३५॥

(भ) तलप्रहारः चपेटाघातः। स च तलप्रहारः मन्दं भाग्यं यस्य तस्य अभाग्यस्य इत्यर्थः व्यवसायश्चेष्टितमिव व्यर्थतां विफलतां गतः व्यर्थो जात इत्यर्थः तेन तलप्रहारेण रासभस्य न किमपि अनिष्टं जातमिति भावः।

(म) विलक्षस्मितं सलज्जस्मितम्।

(य) क्रमः उद्योगविशेषः। सज्जीकृतः असज्जः सज्जः कृतः तथोक्तः अभूततद्भावे च्विप्रत्ययः।

(र) मदिति। मम क्रमेण आक्रान्तः धृतः।

(ल) व्यापारेण पर्य्यालोचनया इत्यर्थः।

त्वं केवलं सज्जितक्रमः तिष्ठ। तथा अनुष्ठिते शृगालोऽपि यावत् रासभमार्गेण गच्छति, तावत् तत्रैव स्थाने चरन् (व) दृष्टः। अथ शृगालं दृष्ट्वा रासभः प्राह, भो भगिनीसुत! शोभनस्थाने त्वया अहं नीतः, द्राक् (श) मृत्युवशं गतः। तत्कथय किं तत्सत्त्वं, यस्य अतिरौद्रवज्रसदृशकरप्रहारात् (ष) अहं मुक्तः। तत् श्रुत्वा प्रहसन् शृगाल आह, भद्र! रासभी त्वाम् आयान्तं दृष्ट्वा सानुरागम् आलिङ्गितुं समुत्थिता। त्वं च कातरत्वात् नष्टः (स) सा पुनर्न शक्ता त्वां विना स्थातुम्। तया तु नश्यतः तेऽवलम्बनार्थं (ह) हस्तः क्षिप्तो न अन्य-कारणेन, तत् आगच्छ, सा त्वत्कृते प्रायोपवेशना (क्ष) उपविष्टा तिष्ठति। एतत् वदति, यत् लम्बकर्णो यदि मे भर्त्ता न भवति, तत् अहमग्नौ जले वा प्रविशामि, पुनस्तस्य वियोगं सोढुं न शक्नोमि। तत्प्रसादं कृत्वा तत्र आगम्यता-मिति। नो चेत् तव स्त्रीहत्या भविष्यति। अपरं भगवान् कामः कोपं तव उपरि करिष्यति। उक्तञ्च,

स्त्रीमुद्रां मकरध्वजस्य जयिनीं सर्वार्थसम्पत्करीं
ये मूढाः प्रविहाय यान्ति कुधियो मिथ्याफलान्वेषिणः।

---

(व) चरन् रासभ इति शेषः।

(श) द्राक् झटिति सहसा वा।

(ष) अतीति। अतिरौद्रः अतिदारुणः वज्रसदृशः यः करः तस्य प्रहारात् आघातात्।

(स) नष्टः पलायितः।

(ह) नश्यतः पलायमानस्य। अवलम्बनार्थं धारणार्थम्।

(क्ष) प्रायोपवेशना अनशनव्रतचारिणी।

स्त्रीमुद्रामिति। ये कुधियः दुर्बुद्धयः मकरध्वजस्य कामस्य जयिनीं जेत्रीं सर्वार्थसम्पत्करीं सर्वसुखविधायिनीम् इत्यर्थः स्त्रीमुद्रां स्त्रिया मुद्रा चिह्नविशेषः तां

ते तेनैव निहत्य निर्दयतरं नग्नीकृता मुण्डिताः
केचिद्रक्तपटीकृताश्च जटिलाः कापालिकाश्चापरे ॥ ३६॥

अथ असौ तद्वचनं अज्ञेयतया श्रुत्वा भूयोऽपि तेन सह प्रस्थितः अथवा साधु इदमुच्यते ।

जानन्नपि नरो दैवात् प्रकरोति विगर्हितम् ।
कर्म किं कस्यचिल्लोके गर्हितं रोचते कथम् ॥ ३७ ॥

अत्रान्तरे सज्जितक्रमेण सिंहेन स लम्बकर्णो व्यापादितः। ततस्तं हत्वा शृगालं रक्षकं निरूप्य स्वयं स्नानार्थं नद्यां गतः। शृगालेनापि लौल्यौत्सुक्यात् (क) तस्य कर्णहृदयं भक्षितम्। अत्रान्तरे सिंहो यावत् स्नात्वा कृतदेवार्चनः प्रतर्पितपितृगणः समायाति तावत् कर्णहृदयरहितो (ख) रासभः तिष्ठति। तं दृष्ट्वा कोपपरीतात्मा सिंहः शृगालम् आह, पाप! किमिदमनुचितं कर्म समाचरितम्? यत् कर्णहृदयभक्षणेन अयमुच्छिष्टतां नीतः। शृगालः सविनयमाह। स्वामिन्!

---

योषिद्योनिमिति भावः। प्रविहाय परित्यज्य मिथ्याफलस्य अलीकप्रयोजनस्य तपश्चर्यादेरिति भावः अन्वेषिणः अर्थिनः सन्तः यान्ति विचरन्ति इत्यर्थः ते तेनैव कामेनैव निर्दयतरम् अतिनिष्ठुरं यथा तथा निहत्य आहत्य केचित् नग्नीकृताः विवसनाः कृताः, केचित् मुण्डिताः कृतशिरोमुण्डनाः, केचित् रक्तपटीकृताः रक्तवसनाः कृताः केचित् जटिलाः जटाधारिणः कृताः अपरे कापालिकाः तदाख्यव्रतिनः कृता इति सर्वत्रोहनीयम्। शार्दूलविक्रीडितं वृत्तम् ॥ ३६ ॥

जानन्निति। नरः जानन्नपि दैवात् दैवायत्तत्वादित्यर्थः विगर्हितं विशेषेण निन्दितं कर्म कुर्य्यात्। लोके जगति गर्हितं कर्म कस्यचित् जनस्य किं कथं रोचते अन्यथेति शेषः ॥ ३७ ॥

(क) लौल्यौत्सुक्यात् चापल्यात्, औत्सुक्यात् विलम्बासहत्वाच्च इत्यर्थः।

(ख) कर्णहृदयरहितः। यद्यस्य कर्णौ स्तः तदा अवश्यमेव कदाचिदनेन सिंहपराक्रमः श्रुतः, तच्छ्रवणे सति नैव पुनरागच्छेत्। हृदयमपि अस्य नासीत् तथा सति सिंहविक्रमः पूर्वेद्युर्दृष्टोऽपि न कथमनेन स्मृतः तस्मात् कर्णहृदय-रहित एवायमिति भावः।

मा मा एवं वद। यत्कर्णहृदयरहितोऽयं रासभ आसीत्। येन इह आगत्य त्वाम् अवलोक्य भूयोऽपि आगतः अथ तद्वचनं श्रद्धेयं मत्वा सिंहः तेनैव सह संविभज्य निःशङ्कितमनाः तं भक्षितवान्। अतोऽहं ब्रवीमि।

आगतस्य गतस्यैव दृष्ट्वा सिंहपराक्रमम्।
अकर्णहृदयो मूर्खो यो गत्वा पुनरागतः ॥ ३८ ॥

तन्मूर्ख! कपटं कृतं त्वया। परं युधिष्ठिरेणेव सत्यवचनेन (ग) विनाशितम् (घ)। अथवा साधु इदमुच्यते।

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थाद् भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ३९ ॥

मकर आह, कथमेतत्? स आह,

## कथा ४।

कस्मिंश्चित् अधिष्ठाने कुम्भकारः प्रतिवसति स्म, स कदाचित् प्रमादादर्द्धभग्नघटकर्परतीक्ष्णाग्रस्योपरि (ङ) महता वेगेन धावन् पतितः। ततः कर्परकोट्या पाटितललाटो (च) रुधिरप्लाविततनुः कृच्छ्रात् उत्थाय स्वाश्रयं गतः। ततश्च अपथ्यसेवनात् स प्रहारस्तस्य करालतां गतः कृच्छ्रेण नीरो-

---

(ग) सत्यवचनेन सत्यवादिना।

(ग) विनाशितं कपटमिति शेषः।

स्वार्थमिति। यः सुमन्दधीः अतिमूढमतिः दम्भी प्रतारणकुशलः नरः स्वार्थम् उत्सृज्य विहाय सत्यं ब्रूते, सः अपरः युधिष्ठिर इव नूनं निश्चितं स्वार्थात् भ्रश्यते भ्रष्टो भवति ॥ ३९ ॥

(ङ) प्रमादात् अनवधानात्। अर्द्धं भग्नः यः घटः तस्य कर्परस्य क्षुद्रखण्डस्य यत् तीक्ष्णाग्रं तस्य।

(च) कर्परकोट्या कर्परस्य अग्रभागेन। पाटितेति पाटितं कृत्तं ललाटं यस्य तथाभूतः।

ग्यतां (छ) नीतः। अथ कदाचित् दुर्भिक्षपीड़िते देशे स कुम्भकारः क्षुत्क्षामकण्ठः कैश्चित् राजसेवकैः सह देशान्तरं गत्वा कस्यापि राज्ञः सेवको बभूव। सोऽपि राजा तस्य ललाटे विकरालं (ज) प्रहारक्षतं दृष्ट्वा चिन्तयामास, यद्वीरः पुरुषः कश्चित् अयम्। नूनं तेन ललाटपट्टे सम्मुखप्रहारः। अतस्तं सम्मानादिभिः सर्वेषां राजपुत्राणां (झ) मध्ये विशेषप्रसादेन पश्यतिस्म। तेऽपि राजपुत्राः तस्य तं प्रसादातिरेकं (ञ) पश्यन्तः परमेर्ष्याधर्मं (ट) वहन्तो राजभयात् न किञ्चित् ऊचुः। अथ अन्यस्मिन्नहनि तस्य भूपतेः वीरसम्भावनायां क्रियमाणायां विग्रहे (ठ) समुपस्थिते प्रकल्प्यमानेषु गजेषु सन्नह्यमानेषु वाजिषु (ड) योधेषु प्रगुणीक्रियमाणेषु तेन भूभुजा स कुम्भकारः प्रस्तावानुगतं (ढ) पृष्टो निर्जने। भो राजपुत्र! किं ते नाम? का च जातिः? कस्मिन् संग्रामे प्रहारोऽयं ते ललाटे लग्नः। स आह, देव! नायं शस्त्रप्रहारः। युधिष्ठिराभिधः कुलालोऽहं

---

(छ) करालतां भयानकत्वम्। नीरोग्यताम् आरोग्यम्।

(ज) विकरालम् अत्युत्कटम्।

(झ) राजपुत्राणाम्। अनादरे षष्ठी। राजपुत्राननादृत्य इत्यर्थः।

(ञ) प्रसादातिरेकम् अनुग्रहातिशयम्।

(ट) ईर्ष्याधर्मं विद्वेषम् इत्यर्थः।

(ठ) वीरेति। वीराणां सम्भावना परीक्षा तस्याम्। विग्रहे संग्रामे।

(ड) प्रकल्प्यमानेषु सज्जीक्रियमाणेषु। सन्नह्यमानेषु उद्युज्यमानेषु। वाजिषु अश्वेषु।

(ढ) प्रगुणीक्रियमाणेषु प्रकर्षशालीक्रियमाणेषु योधेषु वीरेषु। भूभुजा राज्ञा। प्रस्तावानुगतं प्रसङ्गसङ्गतं यथा तथा।

(ण) प्रकृत्या (त) मद्गृहेऽनेककर्पराणि आसन्। अथ कदाचित् मद्यपानं कृत्वा निर्गतः प्रधावन् कर्परोपरि पतितः। तस्य प्रहारविकारोऽयं मे ललाटे एवं विकरालतां गतः। तदाकर्ण्य राजा सव्रीड़माह, अहो! वञ्चितोऽहं राजपुत्रानुकारिणा अनेन कुलालेन। तत् दीयतां द्राक् एतस्य चन्द्रार्द्धः (थ)। तथानुष्ठिते कुम्भकार आह, मा मा एवं कुरु। पश्य मे रणे हस्तलाघवम् (द)। राजा प्राह, भोः सर्वगुणसम्पन्नो भवान्। तथापि गम्यताम्। उक्तञ्च,

शूरश्च कृतविद्यश्च दर्शनीयोऽसि पुत्रक!।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते॥ ४०॥

कुलाल आह, कथमेतत्? राजा कथयति,

## कथा ५।

कस्मिंश्चित् उद्देशे सिंहदम्पती प्रतिवसतः स्म, अथ सिंही पुत्रद्वयम् अजीजनत्। सिंहोऽपि नित्यमेव मृगान् व्यापाद्य सिंह्यै ददाति, अथ अन्यस्मिन्नहनि तेन किमपि न आसादितम्। वने भ्रमतोऽपि तस्य रविरस्तं गतः। अथ तेन स्वगृहम् आगच्छता शृगालशिशुः प्राप्तः। स च बालकोऽयमिति अवधार्य्य यत्नेन दंष्ट्रामध्यगतं कृत्वा सिंह्या जीवन्त-

---

(ण) कुलालः कुम्भकारः।

(त) प्रकृत्या जातिस्वभावेन।

(थ) द्राक् शीघ्रम्। चन्द्रार्द्धः अर्द्धचन्द्रः गलहस्त इत्यर्थः।

(द) हस्तलाघवं क्षिप्रहस्तताम्।

शूरश्चेति। हे पुत्रक! त्वं शूरश्च बलवांश्च कृतविद्यश्च शिक्षितविद्यश्च असीति शेषः किन्तु यस्मिन् कुले त्वम् उत्पन्नः, तत्र उत्पन्नेन इति शेषः गजः न हन्यते॥ ४०॥

मेव समर्पितवान्। ततः सिंह्या अभिहितं, भोः कान्त! त्वयानीतं किञ्चित् अस्माकं भोजनम्? सिंह आह, प्रिये! मया अद्य एनं शृगालशिशुं परित्यज्य न किञ्चित् सत्वम् आसादितम्। स च बालोऽयमिति मत्वा न व्यापादितो विशेषात् स्वजातीयश्च। उक्तञ्च,

स्त्रीविप्रलिङ्गिबालेषु प्रहर्त्तव्यं न कर्हिचित्।
प्राणत्यागेऽपि सञ्जाते विश्वस्तेषु विशेषतः॥ ४१॥

इदानीं त्वम् एनं भक्षयित्वा पथ्यं कुरु। प्रभातेऽन्यत् किञ्चित् उपार्जयिष्यामि। सा प्राह, भो कान्त! त्वया बालकोऽयं विचिन्त्य न हतः। तत् कथम् एनमहं स्वोदरार्थे विनाशयामि। उक्तञ्च,

अकृत्यं नैव कर्त्तव्यं प्राणत्यागेऽपि संस्थिते।
न च कृत्यं परित्याज्यं धर्म एष सनातनः॥ ४२॥

तस्मात् मम अयं तृतीयः पुत्रो भविष्यति। इत्येव मुक्त्वा तमपि स्वस्तनक्षीरेण परां पुष्टिम् अनयत्। एवं ते त्रयोऽपि शिशवः परस्परम् अज्ञातजातिविशेषा एकाचारविहारा बाल्यसमयं निर्वाहयन्ति। अथ कदाचित् तत्र वने भ्रमन् अरण्यगजः समायातः। तं दृष्ट्वा तौ सिंहसुतौ द्वौ अपि कुपिताननौ तं प्रति प्रचलितौ यावत् तावत् तेन शृगालसुतेन अभिहितम्, अहो! गजोऽयं युष्मत् कुलशत्रुः, तन्न

---

स्त्रीति। प्राणत्यागे प्राणसंशये इत्यर्थः सञ्जाते उपस्थितेऽपि कर्हिचित् कदाचित् स्त्रीविप्रलिङ्गिबालेषु स्त्रीषु विप्रेषु लिङ्गिषु ब्रह्मचर्य्यादिषु बालेषु शिशुषु विशेषतः विश्वस्तेषु कृतविश्वासेषु जनेषु न प्रहर्त्तव्यम्॥ ४१॥

अकृत्यमिति। प्राणत्यागे संस्थिते उपस्थितेऽपि अकृत्यम् अकार्य्यं नैव कर्त्तव्यं कृत्यं कर्त्तव्यञ्च न परित्याज्यम्। एषः सनातनः नित्यः धर्मः॥ ४२॥

गन्तव्यमितस्य अभिमुखम्। एवमुक्त्वा गृहं प्रधावितः। तौ अपि ज्येष्ठबान्धवभङ्गान्निरुत्साहतां (ध) गतौ। अथवा साधु इदमुच्यते।

एकेनापि सुधीरेण सोत्साहेन रणं प्रति।
सोत्साहं जायते सैन्यं भग्ने भङ्गमवाप्नुयात्॥ ४३॥

तथाच, अत एव हि वाञ्छन्ति भूपा योधान् महाबलान्।
शूरान् वीरान् कृतोत्साहान् वर्जयन्ति च कातरान्॥४४॥

अथ तौ द्वौ अपि गृहं प्राप्य पित्रोरग्रतो विहसन्तौ ज्येष्ठभ्रातृचेष्टितम् ऊचतुः। यथा गजं दृष्ट्वा दूरतोऽपि नष्टः। सोऽपि तदाकर्ण्य कोपाविष्टमनाः प्रस्फुरिताधरपल्लवः ताम्रलोचनः (न) त्रिशिखां भृकुटिं कृत्वा तौ निर्भर्त्सयन् परुषतरवचनानि उवाच। ततः सिंह्या एकान्ते नीत्वा प्रबोधितोऽसौ। वत्स! मैवं कदाचित् जल्प। भवदीयलघुभ्रातरौ एतौ। अथ असौ प्रभूतकोपाविष्टः तामुवाच, किमहम् एताभ्यां शौर्य्येण रूपेण विद्याभ्यासेन कौशलेन वा हीनः? येन माम् उपहसतः। तन्मया अवश्यम् एतौ व्यापादनीयौ। तदाकर्ण्य सिंही तस्य जीवितमिच्छन्ती अन्तर्विहस्य प्राह।

---

(ध) ज्येष्ठबान्धवस्य ज्येष्ठभ्रातुः शृगालसुतस्येति भावः भङ्गात् पलायनात्। निरुत्साहतां भग्नोत्साहत्वम्।

एकेनेति। सैन्यम् एकेनापि सुधीरेण सोत्साहेन उत्साहवता स्थितेन इति शेषः रणं प्रति सोत्साहम् उत्साहान्वितं जायते, भग्ने एकस्मिन् प्रधाने इति शेषः भङ्गं निरुत्साहत्वम् अवाप्नुयात् प्राप्नोति इत्यर्थः॥ ४३॥

अत इति। अतएव अस्मादेव हेतोः भूपाः राजानः महाबलान् शूरान् वीरान् कृतोत्साहान् उत्साहवतः योधान् सैनिकान् वाञ्छन्ति अभिलषन्ति, कातरान् भीरून् वर्जयन्ति त्यजन्ति च॥ ४४॥

(न) ताम्रलोचनः रक्तनेत्रः।

शूरोऽसि कृतविद्योऽसि दर्शनीयोऽसि पुत्रक !।
यस्मिन् कुले त्वमुत्पन्नो गजस्तत्र न हन्यते ॥ ४५ ॥

तत् सम्यक् शृणु वत्स ! त्वं शृगालीसुतः कृपया मया स्वस्तनक्षीरेण पुष्टिं नीतः। तद्यावत् एतौ मत्पुत्रौ शिशुत्वात् त्वां शृगालं न जानीतः, तावत् द्रुततरं गत्वा स्वजातीयानां मध्ये भव, नो चेत् आभ्यां हतो मृत्युपथं समेष्यसि। सोऽपि तद्वचनं श्रुत्वा भयव्याकुलमनाः शनैः शनैः अपसृत्य स्वजात्या मिलितः। तस्मात् त्वमपि यावत् एते राजपुत्राः त्वां कुलालं न जानन्ति तावत् द्रुततरम् अपसर। नोचेत् एतेषां सकाशात् विडम्बनां (प) प्राप्य मरिष्यसि। कुलालोऽपि तदाकर्ण्य सत्वरं प्रनष्टः। अतोऽहं ब्रवीमि,

स्वार्थमुत्सृज्य यो दम्भी सत्यं ब्रूते सुमन्दधीः।
स स्वार्थाद् भ्रश्यते नूनं युधिष्ठिर इवापरः ॥ ४६ ॥

धिक् मूर्ख ! यत् त्वया स्त्रियोऽर्थे एतत् कार्य्यम् अनुष्ठातुम् आरब्धम्। न हि स्त्रीणां कथञ्चिद्विश्वासम् उपगच्छेत्। उक्तञ्च,

यदर्थे स्वकुलं त्यक्तं जीवितार्द्धञ्च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ? ॥४७॥

मकर आह, कथमेतत् ? वानर आह,

---

(प) विडम्बनां विशेषेण अवमाननाम्।

यदर्थे इति। यदर्थे यस्याः कृते स्वकुलं त्यक्तं जीवितार्द्धञ्च हारितं परित्यक्तम् इत्यर्थः सा निःस्नेहा त्यक्तप्रणया सती मां त्यजति, अतः को नरः स्त्रीणां विश्वसेत् ? न कस्यापि स्त्रीषु विश्वासः कर्त्तव्य इत्यर्थः ॥ ४७ ॥

## कथा ६।

अस्ति कस्मिंश्चित् अधिष्ठाने कोऽपि ब्राह्मणः, तस्य च भार्य्या प्राणेभ्योऽपि अतिप्रिया आसीत्। सापि प्रतिदिनं कुटुम्बेन (फ) सह कलहं कुर्वाणा न विश्राम्यति (ब) सोऽपि ब्राह्मणः कलहम् असहमानो भार्य्यावात्सल्यात् स्वकुटुम्बं परित्यज्य ब्राह्मण्या सह विप्रकृष्टं (भ) देशान्तरं गतः। अथ महाटवीमध्ये ब्राह्मण्या अभिहितः, आर्य्यपुत्र ! तृष्णा मां बाधते। तदुदकं क्वापि अन्वेषय। अथ असौ तद्वचनानन्तरं यावत् उदकं गृहीत्वा समागच्छति, तावत् तां मृताम् अपश्यत्। अतिवल्लभतया विषादं कुर्वन् यावत् विलपति, तावत् आकाशे वाचं शृणोति। तथा हि यदि ब्राह्मण ! त्वं स्वकीयजीवितस्यार्द्धं ददासि, ततः ते जीवति ब्राह्मणी। तत् श्रुत्वा ब्राह्मणेन शुचीभूय तिसृभिर्वाचाभिः स्वजीवितार्द्धं दत्तम्। वाक्सममेव च ब्राह्मणी जीविता सा। अथ तौ जलं पीत्वा वनफलानि भक्षयित्वा गन्तुम् आरब्धौ। ततः क्रमेण कस्यचित् नगरस्य प्रदेशे पुष्पवाटिकां प्रविश्य ब्राह्मणो भार्य्याम् अभिहितवान्, भद्रे ! यावत् अहं भोजनं गृहीत्वा समागच्छामि तावत् अत्र त्वया स्थातव्यम्, इत्यभिधाय ब्राह्मणो नगरमध्ये जगाम। अथ तस्यां पुष्पवाटिकायां पङ्गुः अरघट्टं खेलयन् दिव्यगिरा (म) गीतमुद्गिरति। तच्च श्रुत्वा कुसुमेषुणा

---

(फ) कुटुम्बेन परिजनेन।

(ब) विश्राम्यति निवर्त्तते।

(भ) विप्रकृष्टम् अतिदूरम्।

(म) पुष्पवाटिकाम् उद्यानवाटीमित्यर्थः। पङ्गुः पद्भ्यां न गच्छतीति

अर्दितया (य) ब्राह्मण्या तत्सकाशं गत्वा अभिहितम्। भद्र! यदि मां न कामयसे, तत् मत्कृता स्त्रीहत्या तव भविष्यति। पङ्गुरब्रवीत्, किं व्याधिग्रस्तेन मया करिष्यसि? सा अब्रवीत्, किमनेन उक्तेन, अवश्यं त्वया सह मया सङ्गमः कर्त्तव्यः। तत् श्रुत्वा तथा कृतवान्। सुरतानन्तरं सा अब्रवीत्, इतः प्रभृति यावज्जीवं मया आत्मा भवते दत्तः। इति ज्ञात्वा भवानपि अस्माभिः सह आगच्छतु। सोऽब्रवीत्, एवमस्तु, अथ ब्राह्मणो भोजनं गृहीत्वा समागत्य तया सह भोक्तुम् आरब्धः। सा अब्रवीत्, एष पङ्गुः बुभुक्षितः, तत् एतस्यापि कियन्तमपि ग्रासं देहीति। तथा अनुष्ठिते ब्राह्मण्या अभिहितम्। ब्राह्मण! सहायहीनः त्वं यदा ग्रामान्तरं गच्छसि, तदा मम वचनसहायोऽपि नास्ति। तत एनं पङ्गुं गृहीत्वा गच्छावः। सोऽब्रवीत्, न शक्नोमि आत्मानमपि आत्मना वोढुम् (र)। किं पुनः एनं पङ्गुम्? सा अब्रवीत्, पेटाभ्यन्तरस्थम् एनमहं नेष्यामि। अथ तत् कृतकवचनव्यामोहितचित्तेन तेन प्रतिपन्नम् (ल)। तथा अनुष्ठिते अन्यस्मिन् दिने कूपोपकण्ठे विश्रान्तो ब्राह्मणः तया च पङ्गु-

---

तथोक्तः चरणहीनः कश्चित् पुमान्। अरघट्टं कूपसोपानखण्डं खेलयन् हस्तेन क्षिपन्निति भावः दिव्यगिरा मधुरवचसा।

(य) उद्गिरति उच्चारयति गायति इत्यर्थः। कुसुमेषुणा कामेन। अर्दितया पीड़ितया।

(र) वोढ़ं स्वयं गन्तुम् इत्यर्थः।

(ल) पेटाभ्यन्तरस्थं पेटकमध्यवर्त्तिनम्। कृतकेति। कृतकेन कपटेन वचनेन व्यामोहितं चित्तं यस्य तादृशेन तेन ब्राह्मणेन प्रतिपन्नम् अङ्गीकृतम्।

पुरुषासक्तया सम्प्रेर्य्य (व) कूपान्तः पातितः। सापि पङ्गुं गृहीत्वा कस्मिंश्चित् नगरे प्रविष्टा। तत्र शुल्कचौर्य्यरक्षा-निमित्तं (श) राजपुरुषैः इतस्ततो भ्रमद्भिः तन्मस्तकस्था पेटा दृष्टा, बलात् आच्छिद्य राजाग्रे नीता। राजा च यावत् ताम् उद्घाटयति, तावत् तं पङ्गुं ददर्श। ततः सा ब्राह्मणी विलापं कुर्वती राजपुरुषानुपदम् (ष) एव तत्र आगता। राज्ञा पृष्टा को वृत्तान्त इति। सा अब्रवीत्, मम एष भर्त्ता व्याधिबाधितो दायादसमूहैः उद्वेजितो मया स्नेहव्याकुलित-मानसया शिरसि कृत्वा भवदीयनगरे आनीतः। तत् श्रुत्वा राजा अब्रवीत्, ब्राह्मणि! त्वं मे भगिनी, ग्रामद्वयं गृहीत्वा भर्त्रा सह भोगान् भुञ्जाना सुखेन तिष्ठ। अथ स ब्राह्मणो दैववशात् केनापि साधुना कूपात् उत्तारितः परिभ्रमन् तदेव नगरम् आयातः। तया दुष्टभार्य्यया दृष्टो राज्ञे निवे-दितः। राजन्! अयं मम भर्त्तुः वैरी समायातः। राज्ञा अपि बध आदिष्टः। सोऽब्रवीत्, देव! अनया मम सक्तं (स) किञ्चिद्गृहीतम् अस्ति, यदि त्वं धर्मवत्सलः, तद्दापय। राजा अब्रवीत्, भद्रे! यत् त्वया अस्य सक्तं किञ्चिद्गृहीतम् अस्ति तत् समर्पय। सा प्राह, देव! मया न किञ्चित्

---

(व) सम्प्रेर्य्य सम्यक् आहत्य इत्यर्थः।

(श) शुल्कचौर्य्येति। शुल्कस्य घट्टादिदेयस्य यत् चौर्य्यम् अपहरणं तन्नियुक्त-पुरुषैरिति भावः तस्य रक्षानिमित्तं निवारणार्थम् इत्यर्थः।

(ष) राजपुरुषाणां नगरपालानाम् इत्यर्थः अनुपदं पश्चात्।

(स) सक्तं संक्रान्तम्।

गृहीतम्। ब्राह्मण आह, यन्मया त्रिवाचिकं (ह) स्वजीविताद्धं दत्तं, तद्देहि। अथ सा राजभयात् तत्र एव त्रिवाचिकम् एव जीवितम् अनेन दत्तमिति जल्पन्ती प्राणैः विमुक्ता। ततः सविस्मयं राजा अब्रवीत्, किमेतदिति। ब्राह्मणेनापि पूर्ववृत्तान्तः सकलोऽपि तस्मै निवेदितः। अतोऽहं ब्रवीमि।

यदर्थे स्वकुलं त्यक्तं जीविताद्धञ्च हारितम्।
सा मां त्यजति निःस्नेहा कः स्त्रीणां विश्वसेन्नरः ? ॥४७॥

वानरः पुनराह, साधु च इदमुपाख्यानकं श्रूयते,

न किं दद्यान्न किं कुर्य्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र ह्रेषन्ते शिरःपर्वणि मुण्डितम् ॥ ४८ ॥

मकर आह, कथमेतत् ? वानरः कथयति।

## कथा ७।

अस्ति प्रख्यातबलपौरुषोऽनेकनरेन्द्रमुकुटमरीचिजालजटिलीकृतपादपीठः शरच्छशाङ्ककिरणनिर्मलयशाः समुद्र-

---

(ह) त्रिवाचिकम् अर्थो स्वजीविताद्धं ददामि ददामि ददामीति त्रिसत्यीकृतम् इत्यर्थः।

नेति। स्त्रीभिः अभ्यर्थितः सम्प्रार्थितः नरः किं न दद्यात् ? किं वा न कुर्य्यात् ? सर्वमेव दद्यात् सर्वमेव कुर्य्याच्च इत्यर्थः। यत्र यस्यामवस्थायामिति भावः अनश्वा अश्वादन्ये ह्रेषन्ते अश्ववत् ह्रेषारवं कुर्वन्ति, तस्यामवस्थायाम् पर्वणि पर्वदिनेऽपि शिरः मुण्डितं चतुर्दश्यष्टमी चैव अमावस्याथ पूर्णिमा। पर्वाण्येतानि राजेन्द्र! रविसंक्रान्तिरेव चेति पुराणवचनात्। चतुर्दश्यादीनि पञ्चपर्वाणि, तेष्वेव मुण्डनस्य निषिद्धतत्वात् कथं तस्मिन् एव दिने मुण्डनमिति प्रश्ने उत्तरमिदमिति बोध्यम्। स्त्रिया वश्यं गतः कार्य्याकार्य्यं न विजानातीति भावः ॥ ४८ ॥

पर्य्यन्तायाः (ङ) पृथिव्या भर्त्ता नन्दो नाम राजा, तस्य सर्व-शास्त्राधिगतसमस्ततत्त्वः (च) सचिवो वररुचिर्नाम, तस्य च प्रणयकलहेन जाया कुपिता। सा च अतीववल्लभा (क) अनेकप्रकारं परितोष्यमाणापि न प्रसीदति। ब्रवीति च भर्त्ता, भद्रे! येन प्रकारेण तुष्यसि तं वद, निश्चितं करोमि। ततः कथञ्चित् तया उक्तं, यदि शिरो मुण्डयित्वा मम पादयोः निपतसि, तदा प्रसादाभिमुखो भवामि। तथा अनुष्ठिते प्रसन्ना आसीत्। अथ नन्दस्य भार्य्यापि तथा एव रुष्टा प्रसाद्य-मानापि न तुष्यति। तेन उक्तं, भद्रे! त्वया विना मुहूर्त्तमपि न जीवामि, पादयोः पतित्वा त्वां प्रसादयामि। सा अब्रवीत्, यदि खलीनं (ख) मुखे प्रक्षिप्य अहं तव पृष्ठे समारुह्य त्वां धावयामि (ग)। धावितस्तु यदि अश्ववत् ह्रेषसे, (घ) तदा प्रसन्ना भवामि। राज्ञापि तथा एव अनुष्ठितम्। अथ प्रभातसमये सभायाम् उपविष्टस्य राज्ञः समीपे वररुचिः आयातः। तञ्च दृष्ट्वा

---

(ङ) प्रख्याते। प्रख्यातं प्रसिद्धं बलं पौरुषं पराक्रमश्च यस्य तथाभूतः। अनेकेति। अनेकेषां नरेन्द्राणां यत् वृन्दं समूहः तस्य मुकुटानां किरीटानां मरीचिजालैः प्रभापुञ्जैः जटिलीकृतं शवलीकृतं पादपीठं यस्य तथोक्तः प्रणतराज-मण्डलमुकुटरञ्जितचरणपीठ इत्यर्थः। शरदिति। शरदि यः शशाङ्कः चन्द्रः तस्य किरणवत् निर्म्मलं श्वेतोज्ज्वलं यशः यस्य तादृशः। समुद्रपर्य्यन्तायाः पृथिव्याः आसमुद्रक्षितेः इत्यर्थः।

(च) सर्व्वेति। सर्व्वेषां शास्त्राणाम् अधिगतं ज्ञातं समस्तं तत्त्वं याथार्थ्यं येन तथाविधः।

(क) अतीववल्लभा अतिप्रेयसी।

(ख) खलीनं वल्गाम् अश्वमुखरज्जु विशेषम् इत्यर्थः।

(ग) धावयामि द्रुतं चालयामि।

(घ) ह्रेषसे ह्रेषारवं करोषि।

राजा पप्रच्छ, भो वररुचे! किं पर्वणि मुण्डितं शिरस्त्वया? सोऽब्रवीत्।

न किं दद्यान्न किं कुर्य्यात् स्त्रीभिरभ्यर्थितो नरः।
अनश्वा यत्र ह्रेषन्ते शिरः पर्वणि मुण्डितम् ॥ ४९ ॥

तत् भो! दुष्टमकर! त्वमपि नन्दवररुचिवत् स्त्रीवश्यः ततो भद्र! आगतेन त्वया मां प्रति बधोपायप्रयासः प्रारब्धः (ङ) परं स्ववाग्दोषेण एव प्रकटीभूतः (च)। अथवा साधु इदमुच्यते।

आत्मनो मुखदोषेण बध्यन्ते शुकसारिकाः।
वकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ५० ॥

तथाच, सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्कृते रासभो हतः ॥ ५१ ॥

मकर आह, कथमेतत्? वानरः कथयति।

## कथा ८।

कस्मिंश्चित् अधिष्ठाने शुद्धपटो नाम रजकः प्रतिवसति स्म। तस्य च गर्दभः एकोऽस्ति, सोऽपि घासाभावात् अति-

---

(ङ) बधोपायेति। बधस्य उपायः कौशलं तस्मिन् प्रयासः प्रयत्नः। प्रारब्धः प्रक्रान्तः।

(च) स्वेति। स्वस्य आत्मनः वाचां दोषेणैव प्रकटीभूतः प्रकाशतां गतः।

आत्मन इति। आत्मनः स्वस्य मुखदोषेण मधुभाषित्वेनेति भावः शुकसारिकाः तदाख्याः पक्षिण इत्यर्थः बध्यन्ते ध्रियन्ते, वकास्तु तत्र न बध्यन्ते, तस्मात् मौनं तूष्णीभावः सर्वार्थसाधनं सर्वकार्य्यसिद्धिकरं विपत्पाताजनकमिति भावः ॥ ५० ॥

सुगुप्तमिति। व्याघ्रचर्मणा प्रतिच्छन्नः आवृतशरीरः अतएव सुगुप्तं सुगूढं यथा तथा दारुणं भयङ्करं वपुः शरीरं दर्शयन् प्रकटयन् रक्ष्यमाणः श्लाघ्यमानोऽपि रासभः गर्दभः वाक्कृते वचनदोषेणेति भावः हतः विनाशितः ॥ ५१ ॥

दुर्बलतां गतः। अथ तेन रजकेन अटव्यां परिभ्रमता मृतः व्याघ्रो दृष्टः। चिन्तितञ्च, अहो! शोभनम् आपतितम्। अनेन व्याघ्रचर्मणा प्रतिच्छाद्य रासभं रात्रौ यवक्षेत्रेषु (छ) उत्स्रक्ष्यामि, (ज) येन व्याघ्रं मत्वा समीपवर्त्तिनः क्षेत्रपाला एनं न निष्कासयिष्यन्ति (झ)। तथा अनुष्ठिते रासभो यथेच्छया यवभक्षणं करोति प्रत्यूषे भूयोऽपि रजकः स्वाश्रयं नयति। एवं गच्छता कालेन स रासभः पीवरतनुर्जातः। कृच्छ्राद् बन्धनस्थानमपि (ञ) नीयते। अथ अन्यस्मिन् अहनि स मदोद्धतो दूरात् रासभीशब्दम् अशृणोत्। तत्-श्रवणमात्रेण एव स्वयं शब्दयितुम् आरब्धः। अथ ते क्षेत्र-पाला रासभोऽयं व्याघ्रचर्मप्रतिच्छन्न इति ज्ञात्वा लगुड़शर-पाषाणप्रहारैः तं व्यापादितवन्तः। अतोऽहं ब्रवीमि।

सुगुप्तं रक्ष्यमाणोऽपि दर्शयन् दारुणं वपुः।
व्याघ्रचर्मप्रतिच्छन्नो वाक्‌कृते रासभो हतः ॥ ५२ ॥

अथ एवं तेन सह वदतो मकरस्य जलचरेण एकेन आगत्य अभिहितं, भो मकर! त्वदीया भार्य्या अनशनो-पविष्टा त्वयि चिरयति प्रणयाभिभवाद्विपन्ना (ट)। एवं तद्वज्रपातसदृशवचनम् आकर्ण्य अतीव व्याकुलितहृदयः

---

(छ) प्रतिच्छाद्य आच्छाद्य। यवक्षेत्रेषु यवाख्यशस्यभूमिषु।
(ज) उत्स्रक्ष्यामि मोक्ष्यामि।
(झ) निष्काशयिष्यन्ति ताड़यिष्यन्ति।
(ञ) बन्धनस्थानं बद्धा रक्षणस्थानम्।
(ट) चिरयति विलम्बं कुर्वति सति। प्रणयाभिभवात् पतिसम्माननताभि-मानात् इत्यर्थः विपन्ना मृता।

प्रलपितमिवं चकार। अहो! किमिदं सञ्जातं मे मन्दभाग्यस्य। उक्तञ्च,

माता यस्य गृहे नास्ति भार्य्या च प्रियवादिनी।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्॥ ५३॥

तत् मित्र! क्षम्यतां, मया तेऽपराधः कृतः सम्प्रति अहं तु स्त्रीवियोगात् वैश्वानरप्रवेशं (ठ) करिष्यामि। तत् श्रुत्वा वानरः प्रहसन् प्रोवाच, भो ज्ञातः मया प्रथममेव यत् त्वं स्त्रीवश्यः स्त्रीजितश्च। साम्प्रतञ्च प्रत्ययः (ड) सञ्जातः। तत् मूढ़! आनन्देऽपि जाते त्वं विषादं गतः तादृग् भार्य्यायां मृतायाम् उत्सवः कर्त्तुं युज्यते, उक्तञ्च यतः।

या भार्य्या दुष्टचारित्रा सततं कलहप्रिया।
भार्य्यारूपेण सा ज्ञेया विदग्धैर्दारुणा जरा॥ ५४॥

तस्मात् सर्वप्रयत्नेन नामापि परिवर्जयेत्।
स्त्रीणामिह हि सर्वासां य इच्छेत् सुखमात्मनः॥५५॥

यदन्तस्तन्न जिह्वायां यज्जिह्वायां न तद्बहिः।

---

मातेति। यस्य गृहे माता, प्रियवादिनी भार्य्या च नास्ति, तेन अरण्यं गन्तव्यं यतः तस्य अरण्यं यथा गृहञ्च तथा उभयं समानम् इत्यर्थः॥ ५३॥

(ठ) वैश्वानरप्रवेशम् अग्निप्रवेशम् इत्यर्थः।

(ड) प्रत्ययः विश्वासः।

येति। या भार्य्या दुष्टं चारित्रं यस्याः तथाभूताः दुश्चरित्रा इत्यर्थः सततं कलहप्रिया च विदग्धैः पण्डितैः जनैः सा भार्य्यारूपेण उपेतेति शेषः दारुणा भीषणा जरा स्वशरीरक्षयकरीति भावः। ज्ञेया बोध्या॥ ५४॥

तस्मादिति। इह संसारे यः आत्मनः सुखं कल्याणम् इच्छेत्, स सर्वप्रयत्नेन सर्वासामेव स्त्रीणां नामापि सर्वप्रयत्नेन परिवर्जयेत् परित्यजेत्॥ ५५॥

यदिति। स्त्रियः विचित्रचरित्राः अद्भुतव्यापाराः, तथाहि एताः अन्तः

यद्धितं तन्न कुर्वन्ति विचित्रचरिताः स्त्रियः ॥ ५६ ॥
के नाम न विनश्यन्ति मिथ्याज्ञानात् ? नितम्बिनीम् ।
रम्यां य उपसर्पन्ति दीपाभां शलभा यथा ॥ ५७ ॥
अन्तर्विषमया ह्येता वहिश्चैव मनोरमाः ।
गुञ्जाफलसमाकाराः स्वभावादेव योषितः ॥ ५८ ॥
ताड़िता अपि दण्डेन शस्त्रैरपि विखण्डिताः ।
न वशं योषितो यान्ति न दानैर्न च संस्तवैः ॥ ५९ ॥
आस्तां तावत् किमन्येन दौरात्म्येनेह योषिताम् ।
विधृतं स्वोदरेणापि घ्नन्ति पुत्रं स्वकं रुषा ॥ ६० ॥
रूक्षायां स्नेहसद्भावं कठोरायां सुमार्दवम् ।
नीरसायां रसं बालो बालिकायां विकल्पयेत् ॥ ६१ ॥

---

मनसि यत्, तत् जिह्वायां न, जिह्वायां यत्, यत् वहिः वाह्ये न, यत् हितं तच्च न कुर्वन्ति ॥ ५६ ॥

के इति। ये मिथ्याज्ञानात् मोहादित्यर्थः शलभा दीपाभामिव नितम्बिनीं रम्यां बुद्धेति शेषः उपसर्पन्ति सेवन्ते इत्यर्थः ते के नाम न विनश्यन्ति ? विनाशं गच्छन्ति ? सर्वे एव विनश्यन्ति इत्यर्थः ॥ ५७ ॥

अन्तरिति। एताहि योषितः स्वभावादेव अन्तर्विषमयाः वहिश्च मनोरमाः अतएव गुञ्जाफलैः समः आकारो यासां ताः ॥ ५८ ॥

ताड़िता इति। योषितः स्त्रियः दण्डेन ताड़िताः प्रहृता अपि, शस्त्रैः विखण्डिता अपि न, दानैश्च न, संस्तवैः परिचयैः आदरातिशयैश्च न वशं यान्ति न वशं गच्छन्ति ॥ ५९ ॥

आस्तामिति। आस्तां तिष्ठतु तावत् अन्यत् दौरात्म्यमिति शेषः योषिताम् इह संसारे अन्येन दौरात्म्येन किम् ? अन्यत् दौरात्म्यं किं वक्तव्यमिति भावः। एताः स्वोदरेण निजजठरेण विधृतं स्वकं निजं पुत्रमपि रुषा क्रोधेन घ्नन्ति नाशयन्ति ॥ ६० ॥

रूक्षायामिति। बालः मूढ़मतिरिति भावः बालिकायां नवोढ़ायां रूक्षायां कर्कशस्वभावायां स्नेहसद्भावं प्रणयभावं कठोरायां निष्ठुरायां सुमार्दवम् अति-

मकर आह, भो मित्र ! अस्तु एतत्, परं किं करोमि, मम अनर्थद्वयमेतत् सञ्जातम्। एकस्तावत् गृहभङ्गः, अपरस्त्वद्विधेन मित्रेण सह चित्तविश्लेषः, (ढ) अथवा भवति एवं दैवयोगात्, उक्तञ्च यतः,

याद‍ृशं मम पाण्डित्यं ताद‍ृशं द्विगुणं तव।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि ? नग्निके ! ॥६२॥

वानर आह, कथमेतत् ? मकरोऽब्रवीत्।

## कथा ९।

कस्मिंश्चित् अधिष्ठाने हालिकदम्पती प्रतिवसतः स्म। सा च हालिकभार्य्या पत्युर्वृद्धभावात् सदैव अन्यचित्ता न कथञ्चिद् गृहे स्थैर्य्यम् आलम्बते, केवलं परपुरुषान् अन्वेषमाणा परिभ्रमति। अथ केनचित् परवित्तापहारकेण (ण) धूर्त्तेन सा लक्षिता विजने प्रोक्ता च, सुभगे मृतभार्य्योऽहम्। तद्दर्शनेन स्मरपीड़ितश्च। तद्दीयतां मे रतिदक्षिणा, ततः तयाभिहितम्, भो सुभग ! यदि एवं तदस्ति मे पत्युः प्रभूतं धनं स च वृद्धत्वात् प्रचलितुमपि असमर्थः। ततः तद्धनम्

---

कोमलतां तथा नीरसायां निरनुरागायाम् रक्तम् अनुरागं विकल्पयेत् विशेषेण कल्पयेत् विदध्यात् इत्यर्थः ॥ ६१ ॥

(ढ) चित्तविश्लेषः मनोभङ्गः।

याद‍ृशमिति। मम पाण्डित्यं याद‍ृशं तव ताद‍ृशं द्विगुणं पाण्डित्यमिति शेषः जारः उपपतिः न अभूत् भर्त्ता च नाभूत् जारभर्त्तारौ उभावपि नष्टौ इत्यर्थः। हे नग्निके ! हे निर्वसने ! किं निरीक्षसि ? किं पश्यसि ? ॥ ६२ ॥

(ण) परवित्तेति। परधनहारिणा चौरेण इत्यर्थः।

आदाय अहमागच्छामि। येन त्वया सह अन्यत्र गत्वा यथेच्छया रतिसुखम् अनुभविष्यामि। सोऽब्रवीत्, रोचते मह्यमपि एतत्। प्रत्यूषेऽत्र स्थाने शीघ्रमेव समागन्तव्यं, येन शुभतरं किञ्चित् नगरं गत्वा त्वया सह जीवलोकः (त) सफलीक्रियते। सापि तथेति प्रतिज्ञाय प्रहसितवदना स्वगृहं गत्वा रात्रौ प्रसुप्ते भर्त्तरि सर्वं वित्तम् आदाय प्रत्यूषसमये तत् कथितस्थानम् उपाद्रवत्। धूर्त्तोऽपि तामग्रे विधाय दक्षिणां दिशम् आश्रित्य सत्वरगतिः प्रस्थितः। एवं तयोः व्रजतोः योजनद्वयमात्रेण अग्रतः काचित् नदी समुपस्थिता। तां दृष्ट्वा धूर्त्तः चिन्तयामास, किम् अहमनया यौवनप्रान्ते (थ) वर्त्तमानया करिष्यामि। किञ्च कदापि अस्याः पृष्ठतः कोऽपि समेष्यति, तन्मे महान् अनर्थः स्यात्। तत् केवलमस्या वित्तम् आदाय गच्छामीति निश्चित्य ताम् उवाच, प्रिये! सुदुस्तरा इयं महानदी। तदहं द्रव्यमात्रं पारे धृत्वा समागच्छामि। ततः त्वाम् एकाकिनीं स्वपृष्ठमारोप्य सुखेन उत्तारयिष्यामि। सा प्राह, सुभग! एवं क्रियताम् इत्युक्त्वा अशेषं वित्तं तस्मै समर्पयामास। अथ तेन अभिहितम्, भद्रे! परिधानाच्छादनवस्त्रमपि समर्पय, येन जलमध्ये निःशङ्का व्रजसि। तथा अनुष्ठिते धूर्त्तो वित्तं वस्त्रयुगलञ्च आदाय यथाचिन्तितविषयं गतः। सापि कण्ठनिवेशितहस्तयुगला सोद्वेगा नदीपुलिनदेशे उपविष्टा यावत् तिष्ठति, तावत्

---

(त) जीवलोकः जीवनयात्रा इत्यर्थः।

(थ) यौवनप्रान्ते यौवनावसाने इत्यर्थः।

एतस्मिन्नन्तरे काचित् शृगालिका मांसपिण्डगृहीतवदना तत्र आजगाम। आगत्य च यावत् पश्यति, तावत् नदीतीरे महान् मत्स्यः सलिलात् निष्क्रम्य बहिःस्थित आस्ते। एतच्च दृष्ट्वा सा मांसपिण्डं समुत्सृज्य तं मत्स्यं प्रति उपाद्रवत्। अत्रान्तरे आकाशात् अवतीर्य्य कोऽपि गृध्रस्तं मांसपिण्डमादाय पुनः खमुत्पपात। मत्स्योऽपि शृगालिकां दृष्ट्वा नद्यां प्रविवेश। सा शृगालिका व्यर्थश्रमा गृध्रम् अवलोकयन्ती तया नग्निकया सस्मितम् अभिहिता,

गृध्रेणापहृतं मांसं मत्स्योऽपि सलिलं गतः।
मत्स्यमांसपरिभ्रष्टे ! किं निरीक्षसि ? जम्बूके ! ॥६३॥

तच्छ्रुत्वा शृगालिका तामपि पतिधनजारपरिभ्रष्टां (द) दृष्ट्वा सोपहासमाह,

यादृशं मम पाण्डित्यं तादृशं द्विगुणं तव।
नाभूज्जारो न भर्त्ता च किं निरीक्षसि ? नग्निके ! ॥६४॥

एवं तस्य कथयतः पुनरन्येन जलचरेण आगत्य निवेदितम्। यदहो ! त्वदीयं गृहमपि अपरेण महामकरेण गृहीतं, तत् श्रुत्वा असौ अतिदुःखितमनाः तं गृहात् निःसारयितुम् उपायं चिन्तयन् उवाच, अहो ! पश्यतां मे दैवोपहतत्वम् (ध)।

मित्रं ह्यमित्रतां यातं अपरं मे प्रिया मृता।

---

गृध्रेणेति। गृध्रेण मांसम् अपहृतं, मत्स्योऽपि सलिलं जलं गतः प्रविष्टः हे मत्स्यमांसपरिभ्रष्टे जम्बूके ! किं निरीक्षसि ? ॥ ६३ ॥

(द) पतीति। पतिश्च धनानि च जारश्च तेभ्यः परिभ्रष्टा ताम्।

(ध) दैवोपहतत्वं दुर्दैवत्वम्।

गृहमन्येन च व्याप्तं किमद्यापि भविष्यति ॥६५॥

अथवा युक्तमिदमुच्यते,

क्षते प्रहारा निपतन्त्यभीक्ष्णम्
अन्नक्षये वर्द्धति जाठराग्निः।
आपत्सु वैराणि समुद्भवन्ति
वामे विधौ सर्वमिदं नराणाम् ॥ ६६ ॥

तत् किं करोमि? किमनेन सह युद्धं करोमि? किंवा साम्ना एव सम्बोध्य गृहात् निःसारयामि। किंवा भेदं दानं (न) वा करोमि? अथवा अमुमेव वानरमित्रं पृच्छामि? उक्तञ्च,

यः पृष्ट्वा कुरुते कार्य्यं प्रष्टव्यान् स्वहितान् गुरून्।
न तस्य जायते विघ्नः कस्मिंश्चिदपि कर्म्मणि ॥ ६७ ॥

---

मित्रमिति। मित्रम् अमित्रतां यातम्, अपरम् अन्यत् प्रिया मे मम मृता। गृहम् अन्येन जलचरेण व्याप्तम् आक्रान्तम्, अद्यापि अतःपरमित्यर्थः किं भविष्यति ॥ ६५ ॥

क्षते इति। विधौ दैवे वामे प्रतिकूले सति नराणाम् इदं सर्वं घटते इति शेषः। तथाहि अभीक्ष्णं सततं क्षते क्षतस्थाने प्रहारा आघाताः निपतन्ति भवन्ति, अन्नक्षये सति जाठराग्निः उदरानलः वर्द्धति वृद्धिं गच्छति परस्मैपदमिच्छन्ति आत्मनेपदिनां क्वचित्। आत्मनेपदमिच्छन्ति परस्मैपदिनां क्वचिदिति महाजनवाक्यात् वर्द्धति इति पदं परस्मैपदं बोध्यम्। तथा आपत्सु वैराणि समुद्भवन्ति। उपजातिवृत्तम् ॥ ६६ ॥

(न) साम्ना सान्त्वप्रयोगेण। भेदं मनोभङ्गरूपं तृतीयमुपायम्। दानम् अर्थेन सन्तोषणम्।

य इति। यः जनः प्रष्टव्यान् स्वहितान् निजमङ्गलकामिनः गुरून् महतः जनान् पृष्ट्वा कार्य्यं कुरुते तेषामनुमत्या इति शेषः। तस्य कस्मिंश्चिदपि कर्म्मणि न विघ्नः जायते ॥ ६७ ॥

एवं सम्प्रधार्य्य भूयोऽपि तमेव जम्बूवृक्षम् आरूढ़ं कपिम् अपृच्छत्, भो मित्र! पश्य मे मन्दभाग्यताम्। यत् सम्प्रति गृहमपि मे बलवत्तरेण मकरेण रुद्धम्। तदहं त्वां प्रष्टुम् अभ्यागतः, कथय किं करोमि। सामादीनाम् उपायानां मध्ये कस्य अत्र विषयः। स आह, भो कृतघ्न! पापचारिन्! मया निषिद्धोऽपि किं भूयो माम् अनुसरसि, नाहं तव मूर्खस्य उपदेशमपि दास्यामि। तच्छ्रुत्वा मकरः प्राह, भो मित्र! सापराधस्य मे पूर्वस्नेहम् अनुस्मृत्य हितोपदेशं देहि, वानर आह न अहं ते कथयिष्यामि। यत् भार्य्यावाक्येन भवता अहं समुद्रे प्रक्षेप्तुं नीतः, तदेवं न युक्तं, यद्यपि भार्य्या सर्वलोकादपि वल्लभा भवति तथापि न मित्राणि बान्धवाश्च भार्य्यावाक्येन समुद्रे प्रक्षिप्यन्ते। तन्मूर्ख! मूढ़त्वेन नाशः तव मया प्रागेव निवेदित आसीत्। यतः,

सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम्॥ ६८॥

मकर आह, कथमेतत्? सोऽब्रवीत्।

## कथा १०।

कस्मिंश्चित् अधिष्ठाने उज्ज्वलको नाम रथकारः प्रतिवसति स्म। स च अतीव दारिद्र्योपहतः (प) चिन्तितवान्। अहो! धिक् इयं दरिद्रता (फ) अस्मद्गृहे। यतः सर्वोऽपि

---

सतामिति। यः मदेन गर्वेण सतां साधूनाम् आदिष्टम् उपदिष्टं वचनं न करोति, स घण्टोष्ट्र इव सत्वरं विनाशम् अवाप्नोति लभते॥ ६८॥

(प) अतीवेति। अतीवदारिद्र्येण अतिनिर्धनतया उपहतः आक्रान्तः।

(फ) धिगियमिति। इयं दरिद्रता दारिद्र्यं धिक् निन्दनीया इत्यर्थः यत्र

जनः स्वकर्मणा एव रतः तिष्ठति। अस्मदीयः पुनर्व्यापारो न अत्र अधिष्ठाने (ब) अर्हति। यतः सर्वलोकानां चिरन्तनाः चतुर्भूमिका (भ) गृहाः सन्ति। मम च नात्र, (म) तत् किं मदीयेन रथकारत्वेन प्रयोजनम्? इति चिन्तयित्वा देशात् निष्क्रान्तः। यावत् किञ्चित् वनं गच्छति तावत् गह्वराकार-वनगहनमध्ये (य) सूर्य्यास्तमनवेलायां स्वयूथाद् भ्रष्टां प्रसव-वेदनया पीड्यमानां उष्ट्रीम् अपश्यत्, स च दासेरकयुक्ताम् उष्ट्रीं (र) गृहीत्वा स्वस्थानाभिमुखः प्रस्थितः, गृहम् आसाद्य रज्जुं गृहीत्वा ताम् उष्ट्रिकां बबन्ध। ततश्च तीक्ष्णं परशुम् आदाय तस्याः कृते (ल) पल्लवानयनार्थं पर्वतैकदेशे गतः। तत्र च नूतनानि कोमलानि बहूनि पल्लवानि छित्वा शिरसि समारोप्य तस्य अग्रे निचिक्षेप। तया च तानि शनैः शनैः भक्षितानि। पश्चात् पल्लवभक्षणप्रभावात् अहर्निशं पीवर-तनुः उष्ट्री सञ्जाता। सोऽपि दासेरको महान् उष्ट्रः सञ्जातः। ततः स नित्यमेव दुग्धं (व) गृहीत्वा स्वकुटुम्बं परिपालयति।

---

धिक् शब्दस्य निन्दानीत्यादिकर्त्तृवाच्यविहितक्रियारूपार्थता तत्रैव द्वितीया, इह तु न वर्थेति प्रथमेति बोध्यम्।

(ब) रतः आसक्तः। व्यापारः कार्य्यं सूत्रधरवृत्तिः। अधिष्ठाने स्थाने।

(भ) अर्हति चलति। चिरन्तनाः प्राचीनाः बहुकालीना इत्यर्थः। चतु-र्भूमिकाः चतुःप्रकोष्ठाः।

(म) अत्र मम च न तथाविधा गृहा इति शेषः।

(य) गह्वरेति। गह्वरस्य आकार इव आकारो यस्य तादृशं यत् वनगहनं निविड़ं वनं तस्य मध्ये।

(र) दासेरकयुक्ताम् उष्ट्रसहिताम्।

(ल) तस्याः कृते तस्या आहारार्थम् इत्यर्थः।

(व) दुग्धम् उष्ट्र्या इति शेषः।

अथ रथकारेण वल्लभत्वात् दासेरकग्रीवायां महती घण्टा प्रतिबद्धा। पश्चात् रथकारो व्यचिन्तयत्, अहो! किमन्यैः दुष्कृतकर्मभिः, (श) यावत् मम एतस्मादेव उष्ट्रीपरिपालनात् अस्य कुटुम्बस्य भव्यं (ष) सञ्जातम्। तत् किम् अन्येन व्यापारेण (स)। एवं विचिन्त्य गृहम् आगत्य प्रियामाह। भद्रे! समीचीनोऽयं व्यापारः (ह) तव सम्मतिः चेत् कुतोऽपि धनिकात् किञ्चित् द्रव्यमादाय मया गुर्जरदेशे गन्तव्यं कलभग्रहणाय (च)। तावत् त्वया एतौ यत्नेन रक्षणीयौ। यावत् अहमपराम् उष्ट्रीं नीत्वा समागच्छामि। ततश्च गुर्जरदेशं गत्वा उष्ट्रीं गृहीत्वा स्वगृहम् आगतः। किं बहुना, तेन तथा कृतं यथा तस्य प्रचुरा उष्ट्राः करभाश्च (क) सम्मिलिताः। ततस्तेन महत् उष्ट्रयूथं कृत्वा रक्षापुरुषो धृतः। तस्य वर्षं प्रति वृत्त्या करभम् (ख) एकं प्रयच्छति। अन्यच्च अहर्निशं दुग्धपानं तस्य निरूपितम् (ग)। एवं रथकारोऽपि नित्यमेव उष्ट्रीकरभव्यापारं कुर्वन् सुखेन तिष्ठति। अथ ते दासेरका अधिष्ठानोपवने आहारार्थं (घ) गच्छन्ति। कोमल-

---

(श) दुष्कृतकर्मभिः पापकर्मभिः दुःखसाध्यकर्मभिर्वा।

(ष) भव्यं कुशलम्।

(स) व्यापारेण क्रियया।

(ह) समीचीनः साधुः। व्यापारः उपायः।

(च) कलभग्रहणाय उष्ट्रानयनाय।

(क) करभाः उष्ट्रशावकाः।

(ख) रक्षापुरुषः रक्षकः धृतः नियुक्तः। तस्य रक्षापुरुषस्य वर्षं प्रति प्रतिवर्षं, वृत्त्या वेतनेन। करभम् उष्ट्रशावकम्।

(ग) तस्य रक्षापुरुषस्य। निरूपितं व्यवस्थापितम्।

(घ) अधिष्ठानोपवने गृहोपवने। आहारार्थं चरणार्थम्।

वल्ली: (ङ) यथेच्छया भक्षयित्वा महति सरसि पानीयं पीत्वा सायन्तनसमये (च) मन्दं मन्दं लीलया गृहम् आगच्छन्ति । स च पूर्वदासेरको मदातिरेकात् (छ) पृष्ठे आगत्य मिलति। ततस्तै: कलभै: अभिहितम्, अहो ! मन्दमति: अयं दासेरको यथा यूथाद्भ्रष्ट: पृष्ठे स्थित्वा घण्टां वादयन् आगच्छति। यदि कस्यापि दुष्टसत्वस्य (ज) मुखे पतिष्यति, तन्नूनं मृत्युम् अवाप्स्यति। अथ तस्य तद्वनं गाहमानस्य कश्चित् सिंहो घण्टारवम् आकर्ण्य समायात:। यावत् अवलोकयति, (झ) तावत् उष्ट्रीदासेरकाणां यूथं गच्छति। एकस्तु पुन: पृष्ठे क्रीड़ां कुर्वन् वल्लरीश्चरन् (ञ) यावत् तिष्ठति, तावत् अन्ये दासेरका: पानीयं पीत्वा स्वगृहे गता:। सोऽपि वनात् निष्क्रम्य यावद्दिशोऽवलोकयति, तावत् न कञ्चित् मार्गं (ट) पश्यति वेत्ति च। यूथाद्भ्रष्टो मन्दं मन्दं बृहच्छब्दं कुर्वन् यावत् कियद्दूरं गच्छति, तावत् तच्छब्दानुसारी सिंहोऽपि क्रमं कृत्वा निभृतोऽग्रे व्यवस्थित:। तत: यावत् उष्ट्र: समीपम् आगत:, तावत् सिंहेन लम्फयित्वा ग्रीवायां गृहीतो मारितश्च। अतोऽहं ब्रवीमि।

---

(ङ) कोमलवल्ली: मृद्वीर्लता:।

(च) सायन्तनसमये सन्ध्याकाले।

(छ) मदातिरेकात् गर्वातिशयात्।

(ज) दुष्टसत्वस्य हिंस्रजन्तो:।

(झ) अवलोकयति पश्यति सिंह इति शेष:।

(ञ) क्रीड़ां कुर्वन् सविलासम् आगच्छन्नित्यर्थ:। वल्लरी: मञ्जरी: चरन् भक्षयन्।

(ट) मार्गं न पश्यति सन्ध्याकालात्ययेन तिमिरोदयादिति भाव:।

सतां वचनमादिष्टं मदेन न करोति यः।
स विनाशमवाप्नोति घण्टोष्ट्र इव सत्वरम् ॥ ६९ ॥

अथ तच्छ्रुत्वा मकरः प्राह, भद्र !

प्राहुः साप्तपदं मैत्रं जनाः शास्त्रविचक्षणाः।
मित्रताञ्च पुरस्कृत्य किञ्चिद्वक्ष्यामि तच्छृणु ॥ ७० ॥

उपदेशप्रदातॄणां नराणां हितमिच्छताम्।
परस्मिन्निह लोके च व्यसनं नोपपद्यते ॥ ७१ ॥

तत् सर्वथा कृतघ्नस्यापि मे कुरु प्रसादम् उपदेशप्रदानेन। उक्तञ्च, उपकारिषु यः साधुः साधुत्वे तस्य को गुणः ?।
अपकारिषु यः साधुः स साधुः सद्भिरुच्यते ॥ ७२ ॥

तदाकर्ण्य वानरः प्राह, भद्र ! यदि एवं तर्हि तत्र गत्वा तेन सह युद्धं कुरु। उक्तञ्च,

---

प्राहुरिति। शास्त्रविचक्षणा जनाः मैत्रं सख्यं साप्तपदं सप्तपदीचारणसाध्यं प्राहुः कथयन्ति। त्वया सह मे बहवः संलापा जाताः तस्मात् त्वं मे मित्रं तत्र नास्ति सन्देहः, मित्रत्वस्य सप्तपदमात्रनिष्पाद्यत्वात् सञ्जातां तां मित्रतां पुरस्कृत्य अवलम्ब्य किञ्चित् वक्ष्यामि, तत् शृणु आकर्णय ॥ ७० ॥

उपदेशेति। उपदेशप्रदातॄणां हितमिच्छतां नराणाम् इह अस्मिन् परस्मिंश्च लोके व्यसनं विपत् न उपपद्यते न भवति ॥ ७१ ॥

उपकारिष्विति। यः उपकारिषु उपकारिषु उपकारकेषु साधुः, तस्य साधुत्वे को गुणः ? का प्रशंसा इत्यर्थः। न कोऽपि गुण इत्यर्थः। यः अपकारिषु दुर्जनेषु साधुः, सद्भिः स एव साधुः उच्यते कथ्यते।

सुरधुनि ! मुनिकन्ये ! तारयेः पुण्यवन्तं
स तरति निजपुण्यैस्तत्र किं ते महत्त्वम्।
यदि च गतिविहीनं तारयेः पापिनं मां
तदिह तव महत्त्वं तन्महत्त्वं महत्त्वम् ॥

इति श्रीकान्तरमन्नानुध्येयम् ॥ ७२ ॥

हतस्त्वं प्राप्स्यसि स्वर्गं जीवन् गृहमथो यशः ।
युद्धमानस्य ते भावि गुणद्वयमनुत्तमम् ॥७३॥
उत्तमं प्रणिपातेन शूरं भेदेन योजयेत् ।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः ॥ ७४ ॥

मकरः प्राह, कथमेतत् ? सोऽब्रवीत्,

११ ।

आसीत् कस्मिंश्चित् वनोद्देशे महाचतुरको नाम शृगालः। तेन कदाचित् अरण्ये स्वयं मृतो गजः समासादितः। तस्य समन्तात् परिभ्रमति परं कठिनां त्वचं भेत्तुं न शक्नोति। अथ अत्र अवसरे इतश्चेतश्च विचरन् कश्चित् सिंहस्तत्रैव प्रदेशे समाययौ। अथ सिंहं समागतं दृष्ट्वा स क्षितितल-विन्यस्तमौलिमण्डलः (ठ) संयोजितकरयुगलः (ड) सविनयम् उवाच, स्वामिन्! त्वदीयोऽहं लागुड़िकः (ढ) स्थितः त्वदर्थे गजमिमं रक्ष्यामि। तत् एनं भक्षयतु स्वामी। तं प्रणतं

---

हत इति। त्वं हतः सन् तेनेति शेषः स्वर्गं प्राप्स्यसि युद्धे मरणस्य स्वर्ग-साधनत्वादिति भावः। अथ पक्षान्तरे जीवन् शत्रुं निर्जित्येति शेषः गृहं स्वालयं यशःकीर्त्तिञ्च प्राप्स्यसीत्यनुषङ्गः। अतः युध्यमानस्य युद्धं कुर्वतः ते तव अनु-त्तमम् अत्युत्कृष्टं गुणद्वयं शुभफलयुगलं भावि भविष्यति इत्यर्थः ॥ ७३ ॥

उत्तममिति। उत्तमं बलाधिकं प्रणिपातेन साम्ना, शूरम् अविज्ञं बलवन्तं भेदेन उपजापेन मनोभङ्गकरणेन, नीचं क्षुद्रं शत्रुं बलासाध्यमिति भावः अल्प-प्रदानेन तथा समशक्तिं तुल्यबलं पराक्रमैः योजयेत् ॥ ७४ ॥

(ठ) क्षितीति। क्षितितले भूमौ विन्यस्तं पातितं मौलिमण्डलं मस्तक-मण्डलं येन तथोक्तः प्रणिपतन् इत्यर्थः।

(ड) संयोजितेति। संयोजितं करयुगलं येन तथोक्तः कृताञ्जलिः इत्यर्थः।

(ढ) लागुड़िकः लगुड़धारी याष्टीक इत्यर्थः।

दृष्ट्वा सिंहः प्राह, भो ! न अहमन्येन हतं सत्वं कदाचिदपि भक्षयामि। उक्तञ्च,

वनेऽपि सिंहा मृगमांसभक्ष्या बुभुक्षिता नैव तृणं चरन्ति।
एवं कुलीना व्यसनाभिभूता न नीतिमार्गं परिलङ्घयन्ति ॥७५॥

तत् तव एव गजोऽयं मया प्रसादीकृतः (ण)। तत् श्रुत्वा शृगालः सानन्दमाह, युक्तमिदं स्वामिनो निजभृत्येषु। उक्तञ्च यतः, अन्त्यावस्थोऽपि महान्

स्वामिगुणान्न जहाति तु शुद्धतया।
न श्वेतभावमुज्झति शङ्खः
शिखिभुक्तिमुक्तोऽपि ॥ ७५ ॥

अथ सिंहे गते कश्चिद् व्याघ्रः समाययौ, तमपि दृष्ट्वा असौ व्यचिन्तयत्, अहो! एकस्तावत् दुरात्मा प्रणिपातेन अपवाहितः (त)। तत् कथमिदानीम् एनमपवाहयिष्यामि। नूनं शूरोऽयम्, (थ) न खलु भेदं विना साध्यो (द) भविष्यति।

---

वने इति। मृगमांसभक्ष्याः मृगमांसभोजिन इत्यर्थः बुभुक्षिताः क्षुधिता अपि सन्तः वने तृणं नैव चरन्ति भक्षयन्ति। एवं कुलीनाः सत्कुलप्रसूता जनाः व्यसनेन विपदा अभिभूता आक्रान्ता अपि नीतिमार्गं न्याय्यमित्यर्थः न परिलङ्घयन्ति न त्यजन्ति। उपजातिवृत्तम् ॥ ७५ ॥

(ण) प्रसादीकृतः प्रसन्नत्वेन दत्तः।

अन्त्यावस्थ इति। महान् जनः अन्त्यावस्थः अपि चरमदशान्वितोऽपि शुद्धतया पवित्रतया निर्दोषतया इत्यर्थः स्वामिगुणान् महतो गुणानित्यर्थः न जहाति न त्यजति। शङ्खः शिखिनः अग्नेः भुक्त्यै भोजनाय भस्मीकरणायेति भावः मुक्तोऽपि अग्नौ प्रक्षिप्तोऽपि इत्यर्थः श्वेतभावं निजशौक्ल्यं न उज्झति न त्यजति। आर्यावृत्तं, विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासः ॥ ७५ ॥

(त) अपवाहितः ताड़ितः।

(थ) अपवाहयिष्यामि ताड़यिष्यामि। शूरः बलवान्।

(द) भेदम् उपजापम्। साध्यः प्रतीकार्यः।

उक्तञ्च यतः,

न यत्र शक्यते कर्त्तुं सामदानमथापि वा ।
भेदस्तत्र प्रयोक्तव्यो यतः स वशकारकः ॥ ७६ ॥

किञ्च सर्व्वगुणसम्पन्नोऽपि भेदेन बध्यते । उक्तञ्च यतः,

अन्तःस्थेन विरुद्धेन सुवृत्तेनातिचारुणा ।
अन्तर्भिन्नेन सम्प्राप्तं मौक्तिकेनापि बन्धनम् ॥७७॥

एवं सम्प्रधार्य्य तस्याभिमुखो भूत्वा गर्व्वात् उन्नतकन्धरः ससम्भ्रमम् उवाच, माम ! कथम् अत्रभवान् मृत्युमुखे प्रविष्टः ? येन एष गजः सिंहेन व्यापादितः । स च माम् एतत् रक्षणे नियुज्य नद्यां स्नानार्थं गतः । तेन च गच्छता मम समादिष्टं, यदि कश्चिदिह व्याघ्रः समायाति, तत् त्वया सुगुप्तं मम आवेदनीयम् । येन वनमिदं मया निर्व्याघ्रं कर्त्तव्यम् । यतः पूर्व्वं व्याघ्रेण एकेन मया व्यापादितो गजः शून्ये भक्षयित्वा उच्छिष्टतां नीतः । तद्दिनात् आरभ्य व्याघ्रान् प्रति प्रकुपितोऽस्मि । तत् श्रुत्वा व्याघ्रः सन्त्रस्तः तमाह, भो

---

नेति । यत्र साम अथवा दानं कर्त्तुं न शक्यते, तत्र भेदः प्रयोक्तव्यः यतः सः वशकारकः शत्रुवशीकरणोपायः ॥ ७६ ॥

अन्तःस्थेनेति । अन्तःस्थेन अन्तर्गतेन शुक्तिगजकुम्भादीनामिति भावः अन्यत्र दुर्गस्थेन सुवृत्तेन सुवर्त्तुलेन अन्यत्र सुचरित्रेण नीतिपथावलम्बिना इत्यर्थः अतिचारुणा अतिमनोज्ञेन अन्यत्र लोकरञ्जकेन विरुद्धेन विशेषेण रुद्धेन आवरणान्तर्वर्त्तित्वादिति भावः अन्यत्र विरोधिना अन्तर्भिन्नेन अन्तः अभ्यन्तरात् भिन्नेन वहिष्कृतेन इति यावत् अन्यत्र प्रकृतिभिः उपजापं नीतेन मौक्तिकेनापि किमुत अपरेणेत्यपिशब्दार्थः । बन्धनं वश्यतां सम्प्राप्तं वशमात्मा नीयते इत्यर्थः । अत्र समादप्रस्तुतात् मौक्तिकात् समस्य प्रस्तुतस्य वैरिणो गम्यता इति अप्रस्तुतप्रशंसालङ्कारः । तदुक्तं दर्पणे । क्वचिद् विशेषः सामान्यात् सामान्यं वा विशेषतः । कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् । अप्रस्तुतात् प्रस्तुतञ्चेत् गम्यते पञ्चधा ततः । अप्रस्तुतप्रशंसा स्यादिति ॥ ७७ ॥

भागिनेय! देहि मे प्राणदक्षिणाम्। त्वया तस्य अत्र चिराय आयातस्यापि मदीया कापि वार्त्ता न आख्येया। एवमभिधाय सत्वरं पलायाञ्चक्रे। अथ गते व्याघ्रे तत्र कश्चित् द्वीपी(ध) समायातः। तमपि दृष्ट्वा असौ व्यचिन्तयत् दृढदंष्ट्रोऽयं (न) चित्रकः, (प) तदस्य पार्श्वादस्य गजस्य यथा चर्मच्छेदो भवति तथा करोमि। एवं निश्चित्य तमपि उवाच, भो भगिनीसुत! किमिति चिरात् दृष्टोऽसि? कथञ्च बुभुक्षित इव लक्ष्यसे? तत् अतिथिरसि मे। एष गजः सिंहेन हतः तिष्ठति। अहं च अस्य तदादिष्टो (फ) रक्षपालः। परं तथापि यावत् सिंहो न समायाति, तावत् अस्य गजस्य मांसं भक्षयित्वा तृप्तिं कृत्वा द्रुततरं व्रज। स आह, माम! यदि एवं तन्न कार्य्यं मे मांसाशनेन, यतो जीवन्नरो भद्रशतानि (ब) पश्यति। उक्तञ्च, यच्छक्यं ग्रसितुं ग्रासं ग्रस्तं परिणमेच्च यत्।

हितञ्च परिणामे यत् तदाद्यं भूतिमिच्छता॥ ७८॥

तत् सर्वथा तदेव भुज्यते यदेव परिणमति। तत् अह-

---

(ध) द्वीपी शार्दूलः।

(न) दृढेति। दृढा कठिना अभङ्गुरेत्यर्थः दंष्ट्रा यस्य तादृशः। कठिनवस्तु अस्य दंष्ट्रया भेत्तुं शक्यते इति भावः।

(प) चित्रकः शार्दूलः।

(फ) तदादिष्टः तेनाज्ञप्तः। रक्षपालः रक्ष्यते इति रक्षः कर्मण्यन् प्रत्ययः। ततश्च रक्षं रक्षणीयं पालयतीति तथोक्तः रक्षक इति यावत्।

(ब) भद्रशतानि शतानि मङ्गलानि।

यदिति। यत् ग्रासं कवलं ग्रसितुं भक्षयितुं शक्यं साध्यं यत् ग्रस्तं भक्षितं सत् परिणमेत् परिपाकं व्रजेत्, यच्च परिणामे परिपाके सति हितं हितकारकं भूतिमिच्छता कुशलार्थिना तत् आद्यं भक्षणीयम् अन्यथा नेति भावः॥ ७८॥

मितोऽपयास्यामि (भ)। शृगाल आह, भो अधीर! विश्रब्धो (म) भूत्वा भक्षय त्वं, तस्य आगमनं दूरतोऽपि तव अहं निवेदयिष्यामि। तथा अनुष्ठिते द्वीपिना भिन्नां त्वचं (य) विज्ञाय जम्बूकेन अभिहितम्। भो भगिनीसुत! गम्यताम्, एष सिंहः समायाति। तत् श्रुत्वा चित्रको दूरं प्रनष्टः। अथ यावदसौ तद्भेदकृतद्वारेण किञ्चिन्मांसं भक्षयति, तावत् अतिसंक्रुद्धोऽपरः शृगालः समाययौ। अथ तम् आत्मतुल्य-पराक्रमं दृष्ट्वा एनं श्लोकम् अपठत्।

उत्तमं प्रणिपातेन शूरं भेदेन योजयेत्।
नीचमल्पप्रदानेन समशक्तिं पराक्रमैः॥ ७९॥

तदभिमुखकृतप्रयाणः स्वदंष्ट्राभिः तं विदार्य्य दिशोभागं कृत्वा (र) स्वयं सुखेन चिरकालं हस्तिमांसं बुभुजे। एवं त्वमपि तं रिपुं स्वजातीयं युद्धेन परिभूय दिग्भागं कुरु। नो चेत् पश्चाद्बद्धमूलात् (ल) अस्मात् त्वमपि विनाशम् अवाप्स्यसि। उक्तञ्च यतः,

सम्भाव्यं गोषु सम्पन्नं सम्भाव्यं ब्राह्मणे तपः।
सम्भाव्यं स्त्रीषु चापल्यं सम्भाव्यं जातितो भयम्॥८०॥

---

(भ) इतः अस्मात् स्थानात् अपयास्यामि अपसरिष्यामि।

(म) अधीर! चपल! विश्रब्धः निःशङ्कः।

(य) भिन्नां छिन्नाम्। त्वचं चर्म।

(र) तदिति। तस्य शृगालस्य अभिमुखे कृतं प्रयाणं युद्धार्थं गमनं येन तथाभूतः युद्धाय तदभिमुखं गच्छन् इत्यर्थः। तम् अपरं शृगालम्। विदार्य्य निहत्येति यावत् दिशः भागं बलिरूपसंशम्। कृत्वा दत्त्वा इत्यर्थः।

(ल) बद्धमूलात् दीर्घकालाधिकारेण दृढमूलादित्यर्थः अस्मात् जलचरात्।

सम्भाव्यमिति। गोषु सम्पन्नं तृप्तिः सम्भाव्यं गावः प्रचुराहारप्राप्त्या तृप्तिमायान्तीति सम्भाव्यते इति भावः ब्राह्मणे तपः तपश्चरणं सम्भाव्यं विश्वास्यमिति

अन्यच्च, सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः ।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते ॥ ८१ ॥

मकर आह, कथमेतत् ? वानरोऽब्रवीत्,

## कथा १२ ।

अस्ति कस्मिंश्चित् अधिष्ठाने चित्राङ्गो नाम सारमेयः । तत्र च चिरकालं दुर्भिक्षं (व) पतितम् । अन्नाभावात् सारमेयादयो निष्कुलतां (श) गन्तुम् आरब्धाः । अथ चित्राङ्गः क्षुत्क्षामकण्ठः तद्भयात् (ष) देशान्तरं गतः । तत्र च कस्मिंश्चित् पुरे कस्यचित् गृहमेधिनो (स) गृहिण्या प्रमादेन प्रतिदिनं गृहं प्रविश्य विविधान्नानि भक्षयन् परां तृप्तिं गच्छति । परं तद्गृहात् वहिर्निष्क्रान्तोऽन्यैः मदोद्धतसारमेयैः सर्वदिक्षु परिवृत्य (ह) सर्वाङ्गं दंष्ट्राभिः विदार्य्यते । ततः तेन विचिन्तितम्, अहो ! वरं स्वदेशो यत्र दुर्भिक्षेऽपि सुखेन स्थीयते, न च कोऽपि युद्धं करोति, तदेव, स्वनगरं व्रजामि ।

---

भावः स्त्रीषु चापल्यं चाञ्चल्यं सम्भाव्यं स्त्रियश्चपला इति प्रसिद्धेरिति भावः । जातितः स्वजातीयात् भयं सम्भाव्यं परस्परैकवस्त्वभिलाषादिति भावः ॥ ८० ॥

सुभिक्षाणीति । सुभिक्षाणि विचित्राणि विविधानि सुलभानि अन्नानि इत्यर्थः पौरयोषितः शिथिला मुक्तहस्ता इत्यर्थः । विदेशस्य एको दोषः यत् स्वजातिः विरुध्यते स्वजातयः न सहन्ते इति भावः ॥ ८१ ॥

(व) दुर्भिक्षम् अन्नकष्टम् । सारमेयाः कुक्कुराः ।

(श) निष्कुलतां यूथभ्रंशमित्यर्थः अन्योऽन्यमनपेक्षमाणा यथायथं देशं गन्तुं प्रवृत्ता इत्यर्थः ।

(ष) तद्भयात् दुर्भिक्षभयात् ।

(स) गृहमेधिनः गृहस्थस्य । प्रमादेन अनवधानेन ।

(ह) परिवृत्य आवेष्ट्य ।

इति अवधार्य्य स्वस्थानं प्रति जगाम। अथ असौ देशान्तरात् समायातः सर्वैरपि स्वजनैः पृष्टः, भोः चित्राङ्ग! कथय अस्माकं देशान्तरवार्त्ताम्, कीदृग्देशः? किं चेष्टितं लोकस्य? कः आहारः, कश्च व्यवहारः तत्रेति। स आह, किं कथ्यते विदेशस्य स्वरूपविषयः।

सुभिक्षाणि विचित्राणि शिथिलाः पौरयोषितः।
एको दोषो विदेशस्य स्वजातिर्यद्विरुध्यते॥ ८२॥

सोऽपि मकरः तदुपदेशं श्रुत्वा कृतमरणनिश्चयो वानरम् अनुज्ञाप्य स्वाश्रयं गतः। तत्र च तेन स्वगृहप्रविष्टेन आततायिना (च) सह विग्रहं कृत्वा दृढ़सत्त्वावष्टम्भनाच्च तं व्यापाद्य स्वाश्रयञ्च लब्ध्वा सुखेन चिरकालम् अतिष्ठत्। साधु इदमुच्यते,

अकृत्य पौरुषं या श्रीः किं तयापि सुभोग्यया।
जरद्गवः समश्नाति दैवादुपगतं तृणम्॥ ८३॥

इति श्रीविष्णुशर्म्मविरचिते पञ्चतन्त्रके लब्धप्रणाशं नाम चतुर्थं तन्त्रं समाप्तम्।

---

(च) आततायिना शत्रुणा। दृढ़ेति। दृढ़म् उग्रं यत् सत्त्वं बलं तस्य अवष्टम्भनात् आश्रयात्।

अकृत्येति। पौरुषं पराक्रमम् अकृत्वा या श्रीः सम्पद् लभ्यते इति शेषः सुभोग्यया अनायासलभ्ययापि तया श्रिया किम्? न किमपि प्रयोजनमित्यर्थः, जरद्गवः वृद्धः गौः दैवात् उपगतं प्राप्तं तृणं समश्नाति भक्षयति॥ ८३॥

# अथ पञ्चमं तन्त्रम् ।

अथ इदमारभ्यतेऽपरीक्षितकारकं नाम पञ्चमं तन्त्रं तस्य अयम् आदिमः श्लोकः ।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्त्तव्यं नापितेनात्र यत् कृतम् ॥ १ ॥

तद्यथा अनुश्रूयते ।

## कथा ।

अस्ति दाक्षिणात्ये जनपदे पाटलिपुत्रं नाम नगरम् । तत्र मणिभद्रो नाम श्रेष्ठी प्रतिवसति स्म । तस्य च धर्मार्थकाममोक्षकर्माणि कुर्वतो विधिवशात् धनक्षयः (क) सञ्जातः । ततो विभवक्षयात् अपमानपरम्परया परं विषादं गतः । रात्रौ सुप्तः चिन्तितवान्, अहो धिक् इयं दरिद्रता । उक्तञ्च,

शीलं शौचं क्षान्तिर्दाक्षिण्यं मधुरता कुले जन्म ।
न विराजन्ति हि सर्वे वित्तहीनस्य पुरुषस्य ॥ २ ॥

---

कुदृष्टमिति । अत्र संसारे नापितेन क्षुरकर्मिणा केनचिदित्यर्थः यत् कुदृष्टं कुपरिज्ञातं कुश्रुतं, कुपरीक्षितं किं बहुना यत् कृतं नरेण तत् न कर्त्तव्यम् ॥ १ ॥

(क) धनक्षयः अर्थव्ययः ।

शीलमिति । वित्तविहीनस्य निर्धनस्य पुरुषस्य शीलं चारित्रं, शौचं वाह्याभ्यन्तरमलशुद्धिः, क्षान्तिः क्षमा अपराधसहनम् इत्यर्थः । दाक्षिण्यं सारल्यं मधुरता मिष्टभाषिता, सौन्दर्य्यादिना मनोहारित्वं वा तथा कुले महतीति भावः जन्म एते सर्वे गुणा इति शेषः न हि विराजन्ति नैव शोभन्ते । आर्य्यावृत्तम् ॥ २ ॥

मानो वा दर्पो वा विज्ञानं विभ्रमः सुबुद्धिर्वा ।
सर्वं प्रणश्यति समं वित्तविहीनो यदा पुरुषः ॥ ३ ॥
प्रतिदिवसं याति लयं वसन्तवाताहतेव शिशिरश्रीः ।
बुद्धिर्बुद्धिमतामपि कुटुम्बभरचिन्तया सततम् ॥ ४ ॥
नश्यति विपुलमतेरपि बुद्धिः पुरुषस्य मन्दविभवस्य ।
घृतलवणतैलतण्डुलवस्त्रेन्धनचिन्तया सततम् ॥ ५ ॥
गगनमिव नष्टतारं शुष्कं सरः श्मशानमिव रौद्रम् ।
प्रियदर्शनमपि रूक्षं भवति गृहं धनहीनस्य ॥ ६ ॥
न विभाव्यन्ते लघवो वित्तहीनाः पुरोऽपि निवसन्तः ।
सततं जातविनष्टाः पयसामिव बुद्बुदाः पयसि ॥ ७ ॥

---

मान इति । यदा पुरुषः वित्तविहीनः निर्धनः स्यादिति शेषः तदा मानो वा दर्पो वा विज्ञानं विशेषज्ञानं विभ्रमः विलासित्वं वा सुबुद्धिः शोभना प्रज्ञा एतत् सर्वं समं युगपत् नश्यति नाशं गच्छति । आर्य्यावृत्तम् ॥ ३ ॥

प्रतिदिवसमिति । वसन्तवातेन मलयमरुता आहता शिशिरस्य ऋतोः श्रीरिव शोभेव बुद्धिमतामपि बुद्धिः सततं कुटुम्बभरचिन्तया परिवारभरणभावनया लयं चयं याति धनराहित्येनेति शेषः । आर्य्यावृत्तम् ॥ ४ ॥

नश्यतीति । विपुलमतेः महाबुद्धेरपि मन्दविभवस्य निर्धनस्य पुरुषस्य बुद्धिः सततं घृतलवणतैलतण्डुलवस्त्रेन्धनानां चिन्तया भावनया नश्यति । आर्य्यावृत्तम् ॥ ५ ॥

गगनमिति । धनहीनस्य गृहं प्रियदर्शनमपि सुदर्शनमपि नष्टास्तिरोहिताः ताराः यस्मात् तथाविधं विलीननक्षत्रमित्यर्थः गगनमिव शुष्कं सर इव रौद्रं भीषणम् अप्रीतिकरमिति यावत् श्मशानमिव रूक्षं कर्कशम् अप्रियम् इत्यर्थः लोकस्येति भावः भवति । आर्य्यावृत्तम् ॥ ६ ॥

नेति । वित्तहीनाः अतएव लघवः क्षुद्रत्वेन गण्या इति भावः जनाः पुरः अग्रतः निवसन्तोऽपि तिष्ठन्तोऽपि सततं पयसि जले जाता एव विनष्टाः लयं गताः पयसां बुद्बुदा इव जलस्फोटा इव न विभाव्यन्ते न लक्ष्यन्ते कैरपीति शेषः । आर्य्यावृत्तम् ॥ ७ ॥

सुकुलं कुशलं सुजनं विहाय कुलकुशलशीलविकलेऽपि ।
आढ्ये कल्पतराविव नित्यं रज्यन्ति जननिवहाः ॥ ८ ॥
विफलमिह पूर्वसुकृतं विद्यावन्तोऽपि कुलसमुद्भूताः ।
यस्य यदा विभवः स्यात्तस्य तदा दासतां यान्ति ॥९॥
लघुरयमाह न लोकः कामं गर्जन्तमपि पतिं पयसाम् ।
सर्वमलज्जाकरमिह यत् कुर्वन्तीह परिपूर्णाः ॥ १० ॥

एवं सम्प्रधार्य्य भूयोऽपि अचिन्तयत्, यदहम् अनशनं कृत्वा प्राणान् उत्सृजामि, किमनेन नो व्यर्थजीवितव्यसनेन ? (ख) एवं निश्चयं कृत्वा सुप्तः। अथ तस्य स्वप्ने पद्मनिधिः क्षपणकरूपी (ग) दर्शनं गत्वा प्रोवाच, भोः श्रेष्ठिन् ! मा

---

सुकुलमिति। जननिवहाः लोकनिचयाः सुकुलं सत्कुलोत्पन्नं कुशलं कार्य्यदक्षं विज्ञमित्यर्थः सुजनं निर्धनमिति शेषः विहाय परित्यज्य कुलकुशलशीलविकले अकुलीने अकुशले दुःशीलेऽपि इत्यर्थः आढ्ये धनिनि कल्पतराविव नित्यं सततं रज्यन्ति अनुरागं दर्शयन्ति इत्यर्थः। आर्य्यावृत्तम् ॥ ८ ॥

विफलमिति। इह संसारे पूर्वसुकृतं पूर्वोपकारः विफलम् अगण्यमित्यर्थः। न हि कोऽपि पूर्वोपकारी अयमिति कृत्वा निर्धनमुपसेवते इति भावः विद्यावन्तः विद्वांसः अपि कुलप्रसूताः सत्कुलोद्भवा अपि यस्य यदा विभवः सम्पत् स्यात् तदा तस्य दासताम् आनुगत्यमित्यर्थः यान्ति गच्छन्ति। आर्य्यावृत्तम् ॥ ९ ॥

लघुरिति। लोकः कामं गर्जन्तमपि परुषं नदन्तमपि पयसां पतिं समुद्रं धनिनमिति ध्वनिः। अयं लघुः क्षुद्रो नेति आह धनवान् निष्ठुरोऽपि महानिति भावः। परिपूर्णाः धनवन्त इति भावः इह संसारे यत् कुर्वन्ति तत् सर्वम् अलज्जाकरं न लज्जां जनयति तेषाम् इत्यर्थः प्रत्युत श्लाघाकरमिति भावः। आर्य्यावृत्तम् ॥ १० ॥

(ख) नः अस्माकम्। व्यर्थेति। व्यर्थेन विफलेन जीवितव्यसनेन जीवनं प्रति ममत्वेन इत्यर्थः।

(ग) पद्मनिधिः पद्माख्यो रत्नविशेषः। क्षपणकरूपी बौद्धसन्यासिवेशवान्।

त्वं वैराग्यं गच्छ। अहं पद्मनिधिः तव पूर्वपुरुषोपार्जितः, तदनेन एव रूपेण प्रातः त्वद्गृहम् आगमिष्यामि। तत् त्वया अहं लगुड़प्रहारेण शिरसि ताड़नीयो, येन कनकमयो भूत्वा अक्षयो भवामि। अथ प्रातः प्रबुद्धः सन् 'स्वप्नं' स्मरन् चिन्ताचक्रम् (घ) आरूढ़ः तिष्ठति। अहो! सत्योऽयं स्वप्नः किंवा असत्यो भविष्यति न ज्ञायते? अथवा नूनं मिथ्या भाव्यं यतोऽहं केवलं वित्तमेव चिन्तयामि। उक्तञ्च,

व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना।
कामार्त्तेनाथ मत्तेन दृष्टः स्वप्नो निरर्थकः॥ ११॥

एतस्मिन् अन्तरे तस्य भार्य्यया कश्चित् नापितः पाद-प्रक्षालनाय आहूतः। अत्रान्तरे च यथानिर्दिष्टः क्षपणकः सहसा प्रादुर्बभूव। अथ स तमालोक्य प्रहृष्टमना यथा आसन्नकाष्ठदण्डेन तं शिरसि अताड़यत्। सोऽपि सुवर्णमयो भूत्वा तत्क्षणात् भूमौ निपतितः। अथ स श्रेष्ठी निभृतं स्वगृहमध्ये कृत्वा नापितं सन्तोष्य प्रोवाच, तदेतत् धनं वस्त्राणि च मया दत्तानि गृहाण। भद्र! पुनः कस्यचित् न आख्येयो वृत्तान्तः, नापितोऽपि स्वगृहं गत्वा व्यचिन्तयत्, नूनमेते सर्वेऽपि नग्नकाः (ङ) शिरसि दण्डहताः काञ्चन-मया भवन्ति। तदहमपि प्रातः प्रभूतानाहूय लगुड़ैः शिरसि

---

(घ) चिन्ताचक्रं गाढ़चिन्ताम् इत्यर्थः।

व्याधितेनेति। व्याधितेन रोगिणा सशोकेन शोकार्त्तेन चिन्ताग्रस्तेन भाव-नाकुलेन अथवा कामार्त्तेन वा मत्तेन जनेन दृष्टः स्वप्नः सुप्तौ विषयसन्दर्शनादि-व्यापारः निरर्थकः निष्फलः न सत्यो भवति इत्यर्थः॥ ११॥

(ङ) नग्नकाः विवसना बौद्धसन्न्यासिनः।

हन्मि, येन प्रभूतं हाटकं (च) मे भवति। एवं चिन्तयतो महता कष्टेन निशा अतिचक्राम। अथ प्रभाते अभ्युत्थाय वृहल्लगुड़मेकं प्रगुणीकृत्य क्षपणकविहारं गत्वा जिनेन्द्रस्य (छ) प्रदक्षिणत्रयं विधाय जानुभ्याम् अवनिं गत्वा वक्तद्वार-न्यस्तोत्तरीयाञ्चलः (ज) तारस्वरेण इमं श्लोकम् अपठत्।

जयन्ति ते जिना येषां केवलज्ञानशालिनाम्।
आजन्मनः स्मरोत्पत्तौ मानसेनोषरायितम्॥ १२॥

अन्यच्च, सा जिह्वा या जिनं स्तौति तच्चित्तं यज्जिने रतम्।
तावेव च करौ श्लाघ्यौ यौ तत्पूजाकरौ करौ॥१३॥

तथाच, ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणं
पश्यानङ्गशरातुरञ्जनमिमं त्रातापि नो रक्षसि।

---

(च) हाटकं काञ्चनम्।

(छ) प्रगुणीकृत्य दृढ़ीकृत्येत्यर्थः। क्षपणकविहारं क्षपणकानाम् आश्रमम्। जिनेन्द्रस्य वौद्धाधिपतेः।

(ज) वक्रेति। वक्तस्य मुखस्य द्वारे गले इत्यर्थः न्यस्तम् अर्पितम् उत्तरीयाञ्चलम् उत्तरीयवसनप्रान्तं येन तथाभूतः गललग्नीकृतोत्तरीय इत्यर्थः।

जयन्तीति। केवलज्ञानशालिनां निरवच्छिन्नज्ञानमयानाम् इत्यर्थः येषां मानसेन चित्तेन आजन्मनः जन्मन आरभ्य स्मरोत्पत्तौ कामजनने ऊषरायितम् ऊषरेणेव क्षारमृत्तिकयेव आचरितं यथा क्षारभूमौ न किमपि प्ररोहति तथा येषां चित्ते कदापि कामाविर्भावो न भवतीति भावः ते जिनाः क्षपणकाः जयन्ति सर्वोत्कर्षेण वर्त्तन्ते॥ १२॥

सेति! या जिनं वौद्धं स्तौति प्रशंसति सा जिह्वा, यत् जिने वौद्धे रतम् आसक्तं तत् चित्तं यौ च करौ हस्तौ तस्य वौद्धस्य पूजाकरौ, तदेव करौ श्लाघ्यौ प्रशस्तौ॥ १३॥

ध्यानेति। ध्यानव्याजं समाधिरूपं कपटम् उपेत्य आश्रित्य कां कान्तामिति भावः चिन्तयसि, क्षणं चक्षुः उन्मील्य प्रकाश्य अनङ्गशरातुरं कामवाणविद्धम् इमं

मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः कुतोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बौद्धो जिनः पातु वः ॥१४॥

एवं संस्तुत्य ततः प्रधानक्षपणकम् आसाद्य क्षितिनिहित जानुचरणो नमोऽस्तु वन्दे इति उच्चार्य्य लब्धधर्मवृद्ध्याशीर्वादः (झ) सुखमालिकानुग्रहलब्धव्रतादेश उत्तरीयनिबद्धग्रन्थिः (ञ) सप्रश्रयम् इदमाह, भगवन्! अद्य विहरणक्रिया (ट) समस्तमुनिसमेतेन अस्मद्गृहे कर्त्तव्या। स आह, भोः श्रावक! (ठ) धर्मज्ञोऽपि किमेवं वदसि, किं वयं ब्राह्मणसमानाः? यत आमन्त्रणं (ड) करोषि। वयं सदैव तत्काल-परिचर्य्यया भ्रमन्तो भक्तिभाजं (ढ) श्रावकम् अवलोक्य तस्य गृहे गच्छामः तेन कृच्छ्रादभ्यर्थिताः (ण) तद्गृहे

---

जनं पश्य अवलोकय, वातापि वाणचमोऽपि इत्यर्थः नो रक्षसि? अतस्त्वं मिथ्याकारुणिकः अलीकदयाशीलः असि, त्वां यत् लोकाः कारुणिकं वदन्ति तदलीकमित्यर्थः त्वत्तः निर्घृणतरः अतिनिर्दयः अन्यः पुमान् कुतः? न कुत्रास्ति योऽस्मान् एवम्भूतान् दृष्ट्वा न दयते इति भावः। मारवधूभिः कामाङ्गनाभिः सेर्ष्यम् ईर्ष्यया इत्यर्थः इति अभिहितः उक्तः बौद्धः बुद्धदेवोपासकः जिनः तदाख्यः बौद्धधर्मप्रवर्त्तकः कश्चित् वः युष्मान् पातु रक्षतु संसारादिति भावः व इत्यत्र न इत्यपि पाठः। शार्दूलविक्रीड़ितं वृत्तम् ॥ १४ ॥

(झ) वन्दे प्रणमामि। लब्धेति। लब्धः तस्मात् क्षपणकात् प्राप्त इत्यर्थः धर्मवृद्धये आशीर्वादः धर्मवृद्धिस्ते भवतु इत्येवमाशीर्वाद इत्यर्थः येन तथाभूतः।

(ञ) सुखेति। सुखेन मालिकस्य प्रधानक्षपणकस्य अनुग्रहात् लब्धः प्राप्तः व्रतादेशः धर्मदीक्षा येन तादृशः। उत्तरीयेति। उत्तरीये निबद्धः ग्रन्थिः येन तथोक्तः रुगलवस्त्र इति भावः। सप्रश्रयं सविनयम्।

(ट) विहरणक्रिया भिक्षापर्य्यटनक्रिया इत्यर्थः।

(ठ) श्रावक! धर्मशील।

(ड) आमन्त्रणम् आह्वानम्।

(ढ) तत्कालेति। तत्काले यथोक्तकाले या परिचर्य्या सेवा तया हेतुना भ्रमन्तः पर्य्यटन्तः। भक्तिभाजं भक्तं श्रावकं शिष्यं कमपि इत्यर्थः।

(ण) कृच्छ्रात् क्लेशात् अतियत्नादित्यर्थः अभ्यर्थिताः प्रार्थिताः।

प्राणधारणमात्राम् अशनक्रियां (त) कुर्मः। तत् गम्यतां नैवं भूयोऽपि वाच्यम्। तच्छ्रुत्वा नापित आह, भगवन्! वेद्मि अहं युष्मद्धर्मम्, परं भवतो बहुश्रावका आह्वयन्ति, साम्प्रतं पुनः पुस्तकाच्छादनयोग्यानि कर्पटानि (थ) बहुमूल्यानि प्रगुणीकृतानि (द) तथा पुस्तकानां लेखनाय लेखकानाञ्च वित्तं (ध) सञ्चितम् आस्ते, तत्सर्वथा कालोचितं कार्य्यम्। ततो नापितोऽपि स्वगृहं गतः। तत्र च गत्वा खादिरमयं (न) लगुडं सज्जीकृत्य कपाटयुगलं द्वारे समाधाय सार्द्धप्रहरैकसमये भूयोऽपि विहारद्वारम् आश्रित्य सर्वान् क्रमेण निष्क्रामतो (प) गुरुप्रार्थनया (फ) स्वगृहम् आनयत्, तेऽपि सर्वे कर्पटवित्तलोभेन भक्तियुक्तानपि परिचितश्रावकान् परित्यज्य प्रहृष्टमनसस्तस्य पृष्ठतो ययुः। अथ साधु इदमुच्यते,

एकाकी गृहसन्त्यक्तः पाणिपात्रो दिगम्बरः।
सोऽपि संवाह्यते लोके तृष्णया पश्य कौतुकम्॥ १५॥
जीर्य्यन्ते जीर्य्यतः केशा दन्ता जीर्य्यन्ति जीर्य्यतः।

---

(त) प्राणधारणमात्रां केवलं यथा प्राणा रक्ष्यन्ते तदुपयोगिनीमिति भावः। अशनक्रियाम् आहारम्।

(थ) पुस्तकाच्छादनयोग्यानि पुस्तकबन्धनोपयुक्तानि कर्पटानि वस्त्राणि।

(द) प्रगुणीकृतानि प्रस्तुतानि।

(ध) वित्तं वेतनस्वरूपम् इत्यर्थः।

(न) खादिरमयं खादिर दारुमयम्।

(प) निष्क्रामतः आश्रमात् निर्गच्छतः।

(फ) गुरुप्रार्थनया महत्या प्रार्थनया आग्रहेण इत्यर्थः।

एकाकीति। यः एकाकी परिजनहीनः, गृहसन्त्यक्तः गृहशून्यः पाणिपात्रः करपात्रसहाय इत्यर्थः दिगम्बरः नग्नः सोऽपि लोके संसारे तृष्णया किञ्चिद्धनलोभेन संवाह्यते क्रियते कौतुकम् आश्चर्यं पश्य॥ १५॥

चक्षुः श्रोत्रे च जीर्य्येते तृष्णैका तरुणायते ॥ १६ ॥

अपरं गृहमध्ये तान् प्रवेश्य द्वारं निभृतं विधाय लगुड़-प्रहारैः शिरसि अताड़यत्, तेऽपि ताड्यमाना एके मृताः, अन्ये भिन्नमस्तकाः फूत्कर्त्तुम् (व) उपचक्रमिरे। अत्रान्तरे तमाक्रन्दम् आकर्ण्य कोटरक्षपालैः (भ) अभिहितं, भो भोः! किम् अयं महान् कोलाहलो नगरमध्ये? तद्गम्यतां गम्यताम्। ते च सर्वे तदादेशकारिणः तत्सहिता वेगात् तद्गृहं गताः तावत् रुधिरप्लावितदेहाः पलायमाना नग्नका (म) दृष्टाः। तैः स नापितो बद्धः। हतशेषैः सह धर्माधिष्ठानं नीतः। तैः नापितः पृष्टः, भोः किमेतत् भवता कुकृत्यम् अनुष्ठितम्? स आह, किं करोमि? मया श्रेष्ठिमणिभद्रगृहे दृष्ट एवंविधो व्यतिकरः (य) सोऽपि सर्वं मणिभद्रवृत्तान्तं यथादृष्टम् अकथयत्। ततः श्रेष्ठिनम् आहूय भणितवन्तः, भोः श्रेष्ठिन्! किं त्वया कश्चित् क्षपणको व्यापादितः? ततः तेनापि सर्वः क्षपणकवृत्तान्तः तेषां निवेदितः अथ तैः अभिहितम्,

अहो! शूलम् आरोप्यताम् असौ दुष्टात्मा कुपरीक्षितकारी नापितः। तथा अनुष्ठिते तैः अभिहितम्,

---

जीर्य्यन्ते इति। जीर्य्यतः वृद्धस्य केशाः जीर्य्यन्ते पक्वतया शैथिल्यं व्रजन्तीति भावः। तथा जीर्य्यतः जनस्य दन्ता जीर्य्यन्ति शिथिलीभवन्ति इत्यर्थः त्रुट्यन्तीति वा। चक्षुः श्रोत्रे च दर्शनेन्द्रियं श्रवणेन्द्रियञ्च इत्यर्थः जीर्य्येते निस्तेजसी भवत इत्यर्थः, एका केवला तृष्णा लालसा तरुणायते नवीनेवाचरतीत्यर्थः तृष्णा न जीर्य्यतीति भावः।

(व) फूत्कर्त्तुं चीत्कर्त्तुम्।

(भ) कोटरक्षपालैः नगररक्षकैः।

(म) नग्नकाः क्षपणकाः।

(य) व्यतिकरः व्यापारः।

कुदृष्टं कुपरिज्ञातं कुश्रुतं कुपरीक्षितम् ।
तन्नरेण न कर्त्तव्यं नापितेनात्र यत्कृतम् ॥ १७ ॥

अथवा साधु इदमुच्यते ।

अपरीक्ष्य न कर्त्तव्यं कर्त्तव्यं सुपरीक्षितम् ।
पश्चाद्भवति सन्तापो ब्राह्मण्यां नकुलार्थतः ॥ १८ ॥

मणिभद्र आह, कथमेतत् ? ते धर्माधिकारिणः प्रोचुः,

## कथा २ ।

कस्मिंश्चित् अधिष्ठाने देवशर्मा नाम ब्राह्मणः प्रतिवसति स्म, तस्य भार्य्या प्रसूता सुतम् अजनयत्, तस्मिन् एव दिने नकुली नकुलं प्रसूता । अथ सा सुतवत्सला दारकवत्तमपि नकुलं स्तन्यदानाभ्यङ्गमर्दनादिभिः (२) पुपोष । परं तस्य न विश्वसिति यत् कदाचित् एष स्वजातिदोषवशात् अस्य दारकस्य (ल) विरुद्धम् आचरिष्यतीति, एवं जानाति स्वचित्ते । उक्तञ्च,

कुपुत्रोऽपि भवेत् पुंसां हृदयानन्दकारकः ।
दुर्विनीतः कुरूपोऽपि मूर्खोऽपि व्यसनी खलः ॥१९॥

---

अपरीक्ष्येति । अपरीक्ष्य परीक्षामकृत्वा न कर्त्तव्यं किमपि कार्य्यमिति शेषः, सुपरीक्षितं कर्त्तव्यं सुष्ठु परीक्ष्य कार्य्यं करणीयम् इत्यर्थः । ब्राह्मण्यां नकुलार्थतः नकुलनिमित्तं पश्चात् सन्तापः अनुतापः भवति अभूदिति भावः ॥१८॥

(२) स्तन्येति । स्तन्यं स्तनदुग्धं तस्य दानं तथा अभ्यङ्गमर्दनं गात्रेषु तैलादिम्रक्षणं तदादिभिः तत्प्रभृतिभिः ।

(ल) दारकस्य बालकस्य ।

कुपुत्र इति । दुर्विनीतः अशान्तः दुरन्त इत्यर्थः कुरूपोऽपि कुत्सिताकारोऽपि मूर्खोऽपि, व्यसनी कामाद्यासक्तोऽपि खलो दुर्जनोऽपि कुपुत्रः दुष्टः पुत्रः पुंसां हृदयानन्दकारकः चित्तानन्दजनकः भवेत् ॥ १९ ॥

एवं च भाषते लोकश्चन्दनं किल शीतलम्।
पुत्रगात्रस्य संस्पर्शश्चन्दनादतिरिच्यते ॥ २० ॥
सौहृदस्य न वाञ्छन्ति जनकस्य हितस्य च।
लोकाः प्रपालकस्यापि यथा पुत्रस्य बन्धनम् ॥ २१ ॥

अथ सा कदाचित् शय्यायां पुत्रं शाययित्वा जलकुम्भम् आदाय पतिमुवाच, ब्राह्मण! जलार्थम् अहं तड़ागे यास्यामि, त्वया पुत्रोऽयं नकुलात् रक्षणीयः। अथ तस्यां गतायां पृष्ठे ब्राह्मणोऽपि शून्यं गृहं मुक्त्वा भिक्षार्थं क्वचित् निर्गतः। अत्रान्तरे दैववशात् कृष्णसर्पो बिलात् निष्क्रान्तः। नकुलोऽपि तं स्वभाववैरिणं मत्वा भ्रातुः रक्षणार्थं सर्पेण सह युद्धा सर्पं खण्डशः कृतवान्। ततो रुधिराप्लावितवदनः सानन्दं स्वव्यापारप्रकाशनार्थं मातुः (व) सम्मुखो गतः। मातापि तं रुधिरक्लिन्नमुखम् अवलोक्य शङ्कितचित्ता यदनेन दुरात्मना दारको भक्षित इति विचिन्त्य कोपात् तस्योपरि तं जलकुम्भं चिक्षेप। एवं सा नकुलं व्यापाद्य यावत् प्रलपन्ती गृहे आगच्छति, तावत् सुतः तथैव सुप्तः तिष्ठति। समीपे कृष्णसर्पं खण्डशः कृतम् अवलोक्य पुत्रवधशोकेन आत्मशिरो वक्षः-

---

एवमिति। लोकः एवं भाषते कथयति च यथा चन्दनं शीतलं किल, किन्तु पुत्रगात्रस्य संस्पर्शः चन्दनादपि चन्दनस्पर्शादपि अतिरिच्यते अतिरिक्तः शीतलो भवति इत्यर्थः ॥ २० ॥

सौहृदस्येति। लोकाः सौहृदस्य मैत्रस्य जनकस्य पितुः हितस्य हितकारकस्य यस्य कस्यचिदपि इत्यर्थः तथा प्रपालकस्य प्रकर्षेण पालयितुरपि तथा बन्धनं न वाञ्छन्ति नाभिलषन्ति यथा पुत्रस्य। पुत्रस्य प्रणयबन्धनं सर्वबन्धनात् श्रेष्ठमिति भावः ॥ २१ ॥

(व) स्वेति। स्वस्य आत्मनः व्यापारस्य कृष्णसर्पेण सह संग्रामस्य प्रकाशनार्थं ज्ञापनार्थम्। मातुः ब्राह्मण्या इत्यर्थः।

स्थलं च ताड़यितुम् आरब्धा। अत्रान्तरे ब्राह्मणो गृहीतनिर्वापः (श) समायातो यावत् पश्यति, तावत् पुत्रशोकाभितप्ता ब्राह्मणी प्रलपति। भो भो लोभात्मन्! लोभाभिभूतेन त्वया न कृतं मद्वचः, तदनुभव साम्प्रतं पुत्रमृत्युदुःखवृक्षफलम् (ष)। अथवा साधु इदमुच्यते,

अतिलोभो न कर्त्तव्यो लोभं नैव परित्यजेत्।
अतिलोभाभिभूतस्य चक्रं भ्रमति मस्तके॥ २२॥

ब्राह्मण आह, कथमेतत्? सा प्राह,

## कथा ३।

कस्मिंश्चित् अधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रतां गता वसन्ति स्म, ते चापि दारिद्र्योपहताः परस्परं मन्त्रं चक्रुः, अहो! धिक् इयं दरिद्रता। उक्तञ्च,

वरं वनं व्याघ्रगजादिसेवितं
जनेन हीनं बहुकण्टकावृतम्।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवितम्॥ २३॥

---

(श) गृहीतनिर्वापः लब्धभिक्षः।

(ष) तत् तस्मात् अनुभव भुङ्क्ष्व। पुत्रेति। पुत्रस्य नकुलस्य इत्यर्थः मृत्युरेव वृक्षः तस्य फलम् अनुशयदुःखातिशयरूपमिति भावः।

अतिलोभे इति। अतिलोभः लोभातिशयः न कर्त्तव्यः, लोभं नैव परित्यजेत् यथासम्भवमिति भावः। अतिलोभेन अभिभूतस्य जनस्य मस्तके चक्रं भ्रमति॥ २२॥

वरमिति। व्याघ्रगजादिसेवितं शार्दूलहस्त्यादिभिरध्युषितं जनेन हीनं बहुभिः कण्टकैः आवृतम् आकीर्णं वनं तृणानि शय्या तृणोपरिशयनम् इत्यर्थः तथा परिधानं वल्कलं वरं मनाक् प्रियम्। बन्धूनां मध्ये धनहीनजीवनं निर्धनजीवनं न। वंशस्थविलं वृत्तम्॥ २३॥

तथा च,

स्वामी द्वेष्टि सुसेवितोऽपि सहसा प्रोज्झन्ति सद्बान्धवा
राजन्ते न गुणास्त्यजन्ति तनुजाः स्फारीभवन्त्यापदः ।
भार्य्या साधु सुवंशजापि भजते नो यान्ति मित्राणि च
न्यायारोपितविक्रमाण्यपि नृणां येषां न हि स्याद्धनम् ॥ २४ ॥

शूरः सुरूपः सुभगश्च वाग्मी
शस्त्राणि शास्त्राणि विदांकरोति ।
अर्थं विना नैव यशश्च मानं
प्राप्नोति मर्त्त्योऽत्र मनुष्यलोके ॥ २५ ॥

तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।

---

स्वामीति । येषां नृणां धनं न स्यात् सुसेवितोऽपि स्वामी प्रभुः तान् द्वेष्टि नाद्रियते इत्यर्थः धनवति भृत्ये प्रभोर्गौरवं सम्मानना च दृश्यते अन्यथा भृत्यत्वं त्यक्ष्यतीति भिया धनवन्तम् आद्रियते न तु निर्धनमिति भावः । सन्तः बान्धवाः सहसा प्रोज्झन्ति त्यजन्ति नाद्रियन्ते इति भावः । गुणा दयादाक्षिण्यादयः न राजन्ते न शोभन्ते तेषामिति शेषः । तनुजाः पुत्राश्च त्यजन्ति तानिति शेषः, आपदः स्फारीभवन्ति विस्तारं गच्छन्ति तेषामिति शेषः । सुवंशजा सत्कुलोत्पन्नापि भार्य्या साधु यथा तथा नो भजते तानिति शेषः । न्यायेन नीतिमार्गेण आरोपिताः प्रवर्त्तिताः विक्रमाः पुरुषकारा यैः तादृशानि न्यायपराणीति भावः मित्राण्यपि यान्ति अपसरन्ति तेभ्य इति शेषः । शार्दूलविक्रीड़ितं वृत्तम् ॥ २४ ॥

शूर इति । शूरः बलवान् सुरूपः रूपवान् सुभगः सौभाग्यवान् तथा वाग्मी वचनचतुरो जनः शस्त्राणि शास्त्राणि च विदाङ्करोति वेत्ति जानाति इत्यर्थः । किन्तु अत्र मनुष्यलोके मर्त्त्यः मानवः अर्थं विना यशश्च मानञ्च नैव प्राप्नोति । विना धनं शस्त्रशास्त्रपारदर्शिनामपि न यशः मानश्च भवतीति भावः । इन्द्रवज्रावृत्तम् ॥ २५ ॥

तानीति । तानि इन्द्रियाणि चक्षुरादीनि अविकलानि समभावानीत्यर्थः तिष्ठन्तीति शेषः, तदेव नाम तिष्ठतीति शेषः, सा च अप्रतिहता तीक्ष्णा बुद्धिर-

अर्थोष्मणा विरहितः पुरुषः स एव
वाह्यः क्षणेन भवतीति विचित्रमेतत् ॥ २६ ॥

तद्गच्छामः कुत्रचित् अर्थाय, इति संमन्त्र्य स्वदेशं पुरं च स्वसुहृत्सहितं बान्धवयुतं गृहं च परित्यज्य प्रस्थिताः, अथवा साधु इदमुच्यते ।

सत्यं परित्यजति मुञ्चति बन्धुवर्गं
शीघ्रं विहाय जननीमपि जन्मभूमिम् ।
सन्त्यज्य गच्छति विदेशमभीष्टलोकं
चिन्ताकुलीकृतमतिः पुरुषोऽत्र लोके ॥ २७ ॥

एवं क्रमेण गच्छन्तोऽवन्तीं प्राप्ताः, तत्र सिप्राजले (स) कृतस्नाना महाकालं (ह) प्रणम्य यावत् निर्गच्छन्ति, तावत् भैरवानन्दो नाम योगी सम्मुखो बभूव। ततस्तं ब्राह्मणोचितविधिना सम्भाव्य तेनैव सह तस्य मठं (च) जग्मुः। अथ तेन ते पृष्टाः, कुतो भवन्तः समायाताः ? क्व यास्यथ ? किं प्रयोजनम् ? ततः तैः अभिहितम्, वयं सिद्धियात्रिकाः

स्तीति शेषः तदेव च वचनं वाक्यम् अस्तीति शेषः, किन्तु स एव पुरुषः अर्थोष्मणा धनीत्तापेन विरहितश्चेत् क्षणेन वाह्यः सर्वेषां निष्कार्य्य इत्यर्थः भवति इत्येतत् विचित्रम् आश्चर्य्यम् । वसन्ततिलकं वृत्तम् ॥ २६ ॥

सत्यमिति । अत्र लोके संसारे पुरुषः चिन्तया अर्थानामिति भावः आकुलीकृता मतिर्यस्य तादृशः सन् सत्यं परित्यजति मिथ्या साक्ष्यादिकं ददातीति भावः, बन्धुवर्गं मुञ्चति त्यजति, तथा जननीं जन्मभूमिमपि विहाय शीघ्रम् अभीष्टाः वाञ्छिता लोका जनाः यस्मिन् तादृशं विदेशं गच्छति । वसन्ततिलकं वृत्तम् ॥ २७ ॥

(स) अवन्तीं तदाख्यां नगरीम् । सिप्राजले सिप्रा नाम तत्रत्या नदी तस्या जले ।

(ह) महाकालं तदाख्यं तत्रत्यशिवमूर्त्तिभेदम् इत्यर्थः ।

(च) मठम् आश्रमम् ।

तत्र (क) यास्यामो यत्र धनाप्तिः मृत्युर्वा भविष्यतीति एष निश्चयः (ख)। उक्तञ्च,

दुष्प्राप्याणि बहूनि च लभ्यन्ते वाञ्छितानि द्रविणानि।
अवसरतुलिताभिरलं तनुभिः साहसिकपुरुषाणाम्॥ २८॥

तथा च, पतति कदाचिन्नभसः खाते पातालतोऽपि जलमेति।
दैवमचिन्त्यं बलवद्बलवान्नतु पुरुषकारोऽपि॥ २९॥

अभिमतसिद्धिरशेषा भवति हि पुरुषस्य पुरुषकारेण।
दैवमिति यदपि कथयसि पुरुषगुणः सोऽप्यदृष्टाख्यः॥३०॥

भयमतुलं गुरुलोकात्तृणमिव तुलयन्ति साधु साहसिकाः।
प्राणानद्भुतमेतच्चरितं चरितं ह्युदाराणाम्॥ ३१॥

क्लेशस्याङ्गमदत्त्वा सुखमेव सुखानि नेह लभ्यन्ते।

---

(क) सिद्धीति। सिद्धये कार्य्यसिद्धये यात्रिकाः कृतयात्रा इत्यर्थः।

(ख) धनाप्तिः धनार्जनम्। निश्चयः प्रतिज्ञा।

दुष्प्राप्याणीति। साहसिकपुरुषाणाम् अध्यवसायिनां नराणाम् अवसरे यथासमये तुलिताभिः चेष्टिताभिः तनुभिः शरीरैः दुष्प्राप्याणि दुर्लभानि बहूनि वाञ्छितानि च द्रविणानि धनानि अलं यथेष्टं लभ्यन्ते। आर्य्यावृत्तम्॥ २८॥

पततीति। नलं खाते पुष्करिण्यादौ कदाचित् नभसः आकाशात् पतति कदाचिद्वा पातालतः पातालात् एति उत्तिष्ठति इत्यर्थः। दैवम् अचिन्त्यम् अभावनीयं बलवच्च अपि किन्तु पुरुषकारः न तु बलवान्। दैवे विमुखे पुरुषकारी विफल इति भावः। आर्य्यावृत्तम्॥ २९॥

अभिमतेति। पुरुषस्य अशेषा अभिमतसिद्धिः इष्टलाभः पुरुषकारेण हि पुरुषप्रयत्नेनैव भवति, यदपि दैवमिति कथयसि, सोऽपि अदृष्टाख्यः अदृष्टनामा पुरुषस्य गुणः। पापपुण्यजनितमपूर्वं हि अदृष्टं तच्च पुरुषप्रयत्नसाध्यमिति पुरुषगुणत्वमिति भावः। आर्य्यावृत्तम्॥ ३०॥

भयमिति। साहसिकाः जनाः गुरुलोकात् अतुलम् असमं भयं तथा प्राणान् तृणमिव साधु सम्यक् तुलयन्ति तुल्यं मन्यन्ते इत्यर्थः। उदाराणां महताम् एतत् चरितम् अद्भुतम् आश्चर्य्यं यथा तथा चरितम् अनुष्ठितम्। आर्य्यावृत्तम्॥ ३१॥

क्लेशस्येति। इह संसारे अङ्गं शरीरं क्लेशस्य अदत्त्वा अक्लेशयित्वेत्यर्थः

मधुभिन्मथनायस्तैराश्लिष्यति बाहुभिर्लक्ष्मीम् ॥ ३२ ॥
तस्य कथं न चला स्यात् पत्नी ? विष्णोर्नृसिंहकस्यापि ।
मासांश्चतुरो निद्रां यः सेवति जलगतः सततम् ॥ ३३ ॥
दुरधिगमः परभागो यावत्पुरुषेण साहसं न कृतम् ।
जयति तुलामधिरूढ़ो भास्वानिह जलदपटलानि ॥३४॥

तत्कथ्यताम् अस्माकं कश्चित् धनोपायो विवरप्रवेशशाकिनीसाधनश्मशानसेवनमहामांसविक्रयसाधकवर्त्तिप्रभृतीनामेकतम (ग) इति । अद्भुतशक्तिर्भवान् श्रूयते । वयमपि अतिसाहसिकाः । उक्तञ्च,

महान्त एव महतामर्थं साधयितुं क्षमाः ।

---

सुखानि सुखं यथा तथा नैव लभ्यन्ते । मधुभित् मधुसूदनः मथनायस्तैः समुद्रमन्थनेन आयस्तैः श्रान्तैः बाहुभिः लक्ष्मीम् आश्लिष्यति आलिङ्गति । न हि सुखं दुःखैर्विना लभ्यते इति भावः । आर्य्यावृत्तम् ॥ ३२ ॥

तस्येति । नृसिंहकस्य असुरनिधनार्थं नरसिंहमूर्त्तेः तस्य विष्णोरपि पत्नी लक्ष्मीरित्यर्थः कथं चला चपला न स्यात् ? यः जलगतः जले स्थितः सन् चतुरो मासान् आषाढ़ादीन् सततं निद्रां सेवति । अत्र सेवतेरात्मनेपदित्वेऽपि परस्मैपदमिच्छन्ति आत्मनेपदिनां क्वचिदिति नियमात् परस्मैपदित्वं बोध्यम् । पुरुषकारविहीनस्य लक्ष्मीर्न तिष्ठेदिति भावः । आर्य्यावृत्तम् ॥ ३३ ॥

दुरधिगम इति । पुरुषेण यावत् साहसं पौरुषं न कृतं तावत् परभागः उत्कर्षः दुरधिगमः दुष्प्रापः न उत्कर्षो लभ्यते इति भावः । इह जगति तुलां तदाख्यं राशिमित्यर्थः अधिरूढ़ः आश्रितः भास्वान् सूर्य्यः जलदपटलानि मेघवृन्दानि जयति । सूर्य्येणापि पुरुषकारमाश्रितेन शत्रवो जीयन्ते न तु विना पुरुषकारं का कथान्येषामिति भावः । आर्य्यावृत्तम् ॥ ३४ ॥

(ग) विवरेति । विवरप्रवेशः पातालगमनं शाकिनीसाधनं शाकिनी नाम योगिनीविशेषः तस्याः साधनं परिचरणं श्मशानसेवनं श्मशाने स्थित्वा मन्त्रादीनां साधनं महामांसस्य विक्रयः, साधकः कार्य्यसाधकः यो वर्त्तिः द्रव्यविशेषः तत् प्रभृतीनाम् एकतमः अन्यतमः ।

महान्त इति । महान्त एव जनाः महतामर्थं कार्य्यं साधयितुं सम्पादयितु

ऋते समुद्रादन्यः को बिभर्त्ति बड़वानलम् ॥ ३५ ॥

भैरवानन्दोऽपि तेषां सिद्धर्थं बहु उपायं सिद्धवर्त्तिचतुष्टयं कृत्वा अर्पयत्। आह, च गम्यतां हिमालयदिशि, तत्र सम्प्राप्तानां यत्र वर्त्तिः पतिष्यति, तत्र निधानम् असन्दिग्धं (घ) प्राप्स्यथ तत्र स्थानं खनित्वा निधिं गृहीत्वा व्याघुष्यताम् (ङ)। तथा अनुष्ठिते तेषां गच्छताम् एकतमस्य हस्ताद्वर्त्तिर्निपपात। अथ असौ यावत् तं प्रदेशं खनति तावत् ताम्रमयी भूमिः। ततः तेन अभिहितम्। अहो! गृह्यतां स्वेच्छया ताम्रम्। अन्ये प्रोचुः, भो मूढ़! किमनेन क्रियते? तत् प्रभूतमपि दारिद्र्यं (च) न नाशयति। तदुत्तिष्ठ अग्रतो गच्छामः। सोऽब्रवीत्, यान्तु भवन्तो न अहमग्रे यास्यामि। एवम् अभिधाय ताम्रं यथेच्छया गृहीत्वा प्रथमो निवृत्तः। ते त्रयोऽपि अग्रे प्रस्थिताः। अथ किञ्चिन्मात्रं गतस्य अग्रेसरस्य (छ) वर्त्तिः निपपात। सोऽपि यावत् खनितुम् आरब्धः तावत् रूप्यमयी क्षितिः। ततः प्रहर्षितः प्राह, यत् भो! गृह्यतां यथेच्छया रूप्यम्। न अग्रे गन्तव्यम्। तौ ऊचतुः। भो! पृष्ठतः ताम्रमयी भूमिरग्रतो रूप्यमयी। तत् नूनम् अग्रे सुवर्णमयी भविष्यति। तदनेन प्रभूतेनापि दारिद्र्यनाशो न भवति। तत् आवाम् अग्रे यास्यावः। एवमुक्त्वा

---

क्षमाः शक्ताः। समुद्रात् ऋते विना अन्यः कः वड़वानलं बिभर्त्ति? धारयति? न कोऽपि इत्यर्थः ॥ ३५ ॥

(घ) सम्प्राप्तानाम् उपस्थितानाम्। निधानं रत्नविशेषः। असन्दिग्धं निश्चितम्।

(ङ) व्याघुष्यतां प्रकाश्यताम्।

(च) प्रभूतं प्रचुरमपि तत् ताम्रम्। दारिद्र्यं न नाशयति अल्पमूल्यत्वादिति भावः।

(छ) अग्रेसरस्य अग्रयायिनः।

द्वौ अपि अग्रे प्रस्थितौ। सोऽपि स्वशक्त्या रूप्यम् आदाय निवृत्तः। तयोरपि गच्छतोः एकस्य अग्रे वर्त्तिः पपात। सोऽपि प्रहृष्टो यावत् खनति तावत् सुवर्णभूमिं दृष्ट्वा द्वितीयं प्राह, भो! गृह्यतां स्वेच्छया सुवर्णम्। सुवर्णादन्यत् न किञ्चित् उत्तमं भविष्यति स प्राह, मूढ़! न किञ्चित् वेत्सि। प्राक् ताम्रं, ततो रूप्यं, ततः सुवर्णं, तन्नूनमतः परं रत्नानि भविष्यन्ति येषाम् एकतमेनापि दारिद्र्यनाशो भवति। तदुत्तिष्ठ अग्रे गच्छावः। किमनेन भारभूतेनापि प्रभूतेन। स आह, गच्छतु भवान्। अहमत्र स्थितस्त्वां प्रतिपालयिष्यामि। तथानुष्ठिते सोऽपि गच्छन् एकाकी ग्रीष्मार्कप्रतापसन्तप्ततनुः पिपासाकुलितः सिद्धिमार्गच्युत (ज) इतश्चेतश्च बभ्राम। अथ भ्राम्यन् स्थलोपरि पुरुषमेकं रुधिरप्लावितगात्रं भ्रमच्चक्रमस्तकमपश्यत् (झ)। ततो द्रुततरं गत्वा तम् अवोचत्, भो! को भवान्? किमेवं चक्रेण भ्रमता शिरसि तिष्ठसि। तत्कथय मे यदि कुत्रचित् जलमस्ति? एवं तस्य प्रवदतः तच्चक्रं तत्क्षणात् तस्य शिरसो ब्राह्मणमस्तके चटितम् (ञ)। स आह, भद्र! किमेतत्? स आह, मन्ममापि एवमेव एतत् शिरसि चटितम्। तत्कथय, कदा एतत् उत्तरिष्यति (ट)। महती मे वेदना वर्त्तते। स आह, यदा त्वमिव कश्चिद् धृतसिद्धिवर्त्तिः (ठ) एवमागत्य त्वाम् आलापयिष्यति तदा तस्य मस्तके चटिष्यति। स आह, कियान् कालस्तव एवं स्थितस्य?

---

(ज) सिद्धिमार्गच्युतः सिद्धिपथात् भ्रष्टः।

(झ) भ्रमत् चक्रं यस्मिन् तादृशं मस्तकं यस्य तथोक्तं भ्रमच्चक्रमस्तकम्।

(ञ) चटितं पतितम्।

(ट) उत्तरिष्यति। मम मस्तकात् गमिष्यति इत्यर्थः।

(ठ) धृतेति। धृता सिद्धिवर्त्तिर्येन तथोक्तः।

स आह, साम्प्रतं को राजा धरणीतले? स आह, वीणावत्सः राजः। स आह, अहं तावत् कालसंख्यां न जानामि। परं यदा रामो राजा आसीत् तदाहं दारिद्र्योपहतः सिद्धि-वर्त्तिम् आदाय अनेन पथा समायातः। ततो मया अन्यो नरो मस्तकधृतचक्रो दृष्टः पृष्टश्च। ततश्च एतत् जातम्। स आह, भद्र! कथं तव एवं स्थितस्य भोजनजलप्राप्तिः आसीत्। स आह, भद्र! धनदेन (ड) निधानहरणभयात् (ढ) सिद्धानामेतत् भयं दर्शितम् तेन कश्चिदपि न आगच्छति। यदि कश्चित् आयाति स क्षुत्पिपासानिद्रारहितो जरामरणवर्जितः केवलमेवं वेदनाम् अनुभवतीति। तदाज्ञापय मां स्वगृहाय, इत्युक्त्वा गतः। अथ तस्मिन् चिरयति स सुवर्णसिद्धिः तस्य अन्वेषणपरः तत्पदपंक्त्या यावत् किञ्चित् वनान्तरम् आगच्छति तावत् रुधिरप्लावितशरीरः तीक्ष्णचक्रेण मस्तके भ्रमता सवेदनः (ण) क्वणन् उपविष्टः तिष्ठति। तत्समीपवर्त्तिना भूत्वा सवाष्पं पृष्टः भद्र! किमेतत्? स आह, विधि-नियोगः (त)। स आह, कथं तत्? कथय कारणमेतस्य। सोऽपि तेन पृष्टः सर्वं चक्रवृत्तान्तम् अकथयत्। तत् श्रुत्वा असौ तं विगर्हयन् इदमाह। भो! निषिद्धः त्वं मया अनेकशो न शृणोषि मे वाक्यम्। तत् किं क्रियते? विद्यावानपि कुलीनोऽपि बुद्धिरहितः। अथवा साधु इदमुच्यते,

वरं बुद्धिर्न सा विद्या विद्याया बुद्धिरुत्तमा।

---

(ड) धनदेन कुवेरेण।

(ढ) निधानहरणभयात् निधिहरणत्रासात्।

(ण) सवेदनः वेदनया अत्यर्दितः। क्वणन् विलपन्।

(त) विधिनियोगः दुर्दैवाज्ञा।

वरमिति। बुद्धिर्वरं सा विद्या न, बुद्धिः विद्याया विद्यामपेक्ष्य उत्तमा

बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ ३६ ॥

चक्रधर आह, कथमेतत् ? सुवर्णसिद्धिः आह,

## कथा ४ ।

कस्मिंश्चित् अधिष्ठाने चत्वारो ब्राह्मणपुत्राः परस्परं मित्रभावम् उपगता वसन्ति स्म। तेषां त्रयः शास्त्रपारं गताः परन्तु बुद्धिरहिताः। एकस्तु बुद्धिमान्, केवलं शास्त्रपराङ्मुखः (थ)। अथ तैः कदाचित् मित्रैः मन्त्रितम्। को गुणो विद्याया येन (द) देशान्तरं गत्वा भूपतीन् परितोष्य अर्थोपार्जना न क्रियते ? तत्पूर्वदेशं गच्छामः। तथानुष्ठिते किञ्चिन्मार्गं गत्वा तेषां ज्येष्ठतरः प्राह, अहो ! अस्माकमेकः चतुर्थो मूढ़ः केवलं बुद्धिमान्। न च राजप्रतिग्रहो (ध) बुद्ध्या लभ्यते विद्यां विना। तन्न अस्मै स्वोपार्जितं दास्यामि। तद्गच्छतु गृहम्। ततो द्वितीयेन अभिहितम्। भोः सुबुद्धे ! गच्छ त्वं स्वगृहे यतः ते विद्या नास्ति। ततः तृतीयेन अभिहितम्, अहो ! न युज्यते एवं कर्त्तुं यतो वयं बाल्यात् प्रभृति एकत्र क्रीड़िताः। तत् आगच्छतु महानुभावोऽस्मदुपार्जितवित्तस्य समभागी भविष्यतीति। उक्तञ्च,

किं तया क्रियते लक्ष्म्या या वधूरिव केवला।
या न वेश्येव सामान्या पथिकैरुपभुज्यते ॥ ३७ ॥

---

श्रेष्ठा। अपेक्षार्थे पञ्चमी। बुद्धिहीना जना ते सिंहकारका यथा विनश्यन्ति विनाशं यान्ति इत्यर्थः ॥ ३६ ॥

(थ) शास्त्रपराङ्मुखः शास्त्रानभिज्ञः।

(द) येन यदि इत्यर्थः।

(ध) राजप्रतिग्रहः राज्ञः सकाशात् दानग्रहणम्।

किमिति। या वधूरिव केवला अन्यभोगवर्जितेति भावः तिष्ठति, या च

तथाच, अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥ १८ ॥

तदागच्छतु एषोऽपीति। तथा अनुष्ठिते तैः मार्गाश्रितैः (न) अटव्यां मृतसिंहस्य अस्थीनि दृष्टानि। ततश्च एकेन अभिहितम्, अहो! अद्य विद्याप्रत्ययः क्रियते। किञ्चिदेतत् सत्वं (प) मृतं तिष्ठति, तद्विद्याप्रभावेण जीवनसहितं कुर्मः, अहम् अस्थिसञ्चयं(फ) करोमि, ततश्च एकेन औत्सुक्यात् अस्थिसञ्चयः कृतः। द्वितीयेन चर्ममांसरुधिरं संयोजितम्। तृतीयोऽपि यावज्जीवनं सञ्चारयति, तावत् सुबुद्धिना निषिद्धः। भो! तिष्ठतु भवान्, एष सिंहो निष्पाद्यते (ब) यदि एनं सजीवं करिष्यसि ततः सर्वानपि व्यापादयिष्यति। इति तेन अभिहितः स आह, धिक् मूर्ख! नाहं विद्याया विफलतां करोमि। ततः तेनाभिहितम् तर्हि प्रतीक्षस्व क्षणं यावदहं वृक्षमारोहामि। तथानुष्ठिते यावत् सजीवः कृतः तावत् ते त्रयोऽपि सिंहेन उत्थाय व्यापादिताः स च पुनः वृक्षात् अवतीर्य्य गृहे गतः। अतोऽहं ब्रवीमि।

---

सामान्या साधारणी वेश्येव पथिकैः न उपभुज्यते, तया लक्ष्म्या किं क्रियते? न किमपि इत्यर्थः ॥ १७

अयमिति। अयं जनः निजः आत्मीयः परो वा इति इत्थं लघुचेतसां क्षुद्रचित्तानां गणना विचारः। उदारं चरितं येषां तथोक्तानां जनानां महात्मनाम् इत्यर्थः वसुधा पृथिवी एव कुटुम्बकं परिवारः स्वजनः इत्यर्थः। आत्मवत् सर्वभूतेषु यः पश्यति स पण्डित इति भावः ॥ १८ ॥

(न) मार्गाश्रितैः अध्वगामिभिः।

(प) विद्याप्रत्ययः विद्यायाः शिक्षिताया इति भावः प्रत्ययः परीक्षणम्। सत्वं जीवविशेषः।

(फ) अस्थिसञ्चयम् अस्थ्नां कङ्कालानां सञ्चयं संयोजनम्।

(ब) निष्पाद्यते सृज्यते।

वरं बुद्धिर्न सा विद्या या विद्याया बुद्धिरुत्तमा।
बुद्धिहीना विनश्यन्ति यथा ते सिंहकारकाः ॥ ३९ ॥

अतः परमुक्तञ्च।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥ ४० ॥

चक्रधर आह, कथमेतत्? सोऽब्रवीत्।

## कथा ५।

कस्मिंश्चित् अधिष्ठाने चत्वारो ब्राह्मणाः परस्परं मित्रत्वम् आपन्ना वसन्ति स्म। बालभावे (भ) तेषां मतिः अजायत। भो! देशान्तरं गत्वा विद्याया उपार्जनं क्रियते। अथ अन्यस्मिन् दिवसे ब्राह्मणाः परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जे गताः, तत्र च विद्यामठे (म) गत्वा पठन्ति। एवं द्वादशाब्दानि यावत् एकचित्ततया विद्याकुशलास्ते सर्वे सञ्जाताः। ततः तैः चतुर्भिर्मिलित्वा उक्तम्। वयं सर्वविद्यापारे गताः। तदुपाध्यायम् उत्कलापयित्वा (य) स्वदेशे गच्छामः। तथैव क्रियताम् इत्युक्त्वा ब्राह्मणा उपाध्यायमुत्कलापयित्वा अनुज्ञां लब्ध्वा पुस्तकानि नीत्वा प्रचलिताः। यावत् किञ्चित् मार्गं यान्ति तावत् द्वौ पन्थानौ समायातौ। उपविष्टाः सर्वे। तत्रैकः प्रोवाच, केन मार्गेण

---

अपीति। ये शास्त्रेषु कुशला निपुणा अपि लोकाचारविवर्जिताः लौकिकव्यवहारहीना भवन्तीति शेषः ते सर्वे ते मूर्खाश्च ते पण्डिताश्चेति मूर्खपण्डिता यथा हास्यताम् उपहासास्पदत्वं यान्ति ॥ ४० ॥

(भ) बालभावे शैशवे।

(म) विद्यामठे चतुष्पाठ्याम्।

(य) उत्कलापयित्वा परितोष्य।

गच्छामः ? एतस्मिन् समये तस्मिन् पत्तने (र) कश्चित् वणिक्-पुत्रो मृतः। तस्य दाहार्थं महाजनो गतोऽभूत्। ततः चतुर्णां मध्यात् एकेन पुस्तकम् अवलोकितम् महाजनो (ल) येन गतः स पन्था इति तत् महाजनमार्गेण (व) गच्छामः। अथ ते पण्डिता यावत् महाजनमेलापथिकेन (श) सह यान्ति तावत् रासभः कश्चित् तत्र श्मशाने दृष्टः। अथ द्वितीयेन पुस्तकम् उद्घाट्य अवलोकितम्।

उत्सवे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥ ४१॥

तत् अहो! अयम् अस्मदीयो बान्धवः। ततः कश्चित् तस्य ग्रीवायां लगति। कोऽपि पादौ प्रक्षालयति। अथ यावत् ते पण्डिताः दिशाम् अवलोकनं कुर्वन्ति तावत् कश्चित् उष्ट्रो दृष्टः। तैश्च उक्तम्, एतत् किम्? तावत् तृतीयेन पुस्तकम् उद्घाट्य उक्तम्, धर्मस्य त्वरिता गतिः, एष धर्मः तावत्। चतुर्थेन उक्तम्, इष्टं (ष) धर्मेण योजयेत्। अथ तैश्च रासभ उष्ट्रग्रीवायां बद्धः। केनचित् रजकस्य अग्रे कथितम्। यावत् रजकः तेषां मूर्खपण्डितानां प्रहारकरणाय समायातः तावत्

(र) पत्तने नगरे।

(ल) महाजनः बहुसंख्यकलोकः।

(व) महाजनो येनेति। महान् जनः साधुरित्यर्थः येन मार्गेण आचारेणेति भावः गतः प्रचलितः स पन्थाः मार्गः शिष्टाचार इत्यर्थः।

(श) महाजनेति। महाजनानां मेला सङ्गः, स एव पथिकः अध्वगः तेन।

उत्सवे इति। यः उत्सवे माङ्गलिके आनन्दजनकव्यापारे, व्यसने विपदि, दुर्भिक्षे अन्नकष्टसमये शत्रुसङ्कटे वैरिसमागमे च प्राप्ते उपस्थिते तथा राजद्वारे श्मशाने च यः तिष्ठति साहाय्यं करोति, स बान्धवः॥ ४१॥

(ष) इष्टं प्रियम्।

ते प्रनष्टाः (स) यावदग्रे किञ्चित् स्तोकं मार्गं यान्ति तावत् काचित् नदी समासादिता। तत् तस्या जलमध्ये पलाशपत्रम् (ह) आयातं दृष्ट्वा पण्डितेन एकेन उक्तम्।

आगमिष्यति यत्पत्रं तदस्मांस्तारयिष्यति।

एतत् कथयित्वा तत्पत्रस्य उपरि पतितो यावत् नद्या नीयते तावत् तं नीयमानम् अवलोक्य अन्येन पण्डितेन केशान्तं गृहीत्वा उक्तम्।

सर्वनाशे समुत्पन्ने अर्द्धं त्यजति पण्डितः।
अर्द्धेन कुरुते कार्य्यं सर्वनाशो हि दुःसहः॥ ४२॥

इत्युक्त्वा तस्य शिरश्छेदो विहितः। अथ तैश्च पश्चात् गत्वा कश्चिद्ग्राम आसादितः। तेऽपि ग्रामीणैः (च) निमन्त्रिताः पृथक् पृथक् गृहेषु नीताः ततः एकस्य सूत्रिका घृतखण्डसंयुक्ता (क) भोजने दत्ता। ततो विचिन्त्य पण्डितेन उक्तम्। यद्दीर्घसूत्री विनश्यति (ख)। एवमुक्त्वा भोजनं परित्यज्य गतः। तथा द्वितीयस्य मण्डका (ग) दत्ताः। तेनापि

---

(स) प्रनष्टाः पलायिताः।

(ह) तत् तदा इत्यर्थे अव्ययम्। पलाशपत्रं किंशुकाख्यतरोः पत्रम्।

सर्वेति। पण्डितो जनः सर्वनाशे समुत्पन्ने सति अर्द्धं त्यजति, अर्द्धेन च कार्य्यं कुरुते, हि यतः सर्वनाशः दुःसहः सोढ़ुमशक्यः॥ ४३॥

(च) ग्रामीणैः ग्रामाध्यक्षैः।

(क) सूत्रिका सूत्रखण्डम्। घृतखण्डेति। घृतखण्डेन घृतांशेन संयुक्ता। घृतमध्ये सूत्रिकाखण्डं दैवात् स्थितमिति भावः।

(ख) दीर्घसूत्री दीर्घं दीर्घकालं सूत्रयति कर्म करोतीति तथोक्तः चिरक्रिय इत्यर्थः। विनश्यति विनाशं प्राप्नोति कार्य्यमसमापय्येति भावः।

(ग) मण्डकाः मिष्टान्नविशेषा मण्डा इति ख्याताः। अन्नस्य काथा वा। अतीति। अतिविस्तारेण विस्तीर्णं प्रभूतं यत् भोजनमिति भावः तत् न चिरायुष्यं दीर्घजीवनप्रदं न भवति इत्यर्थः।

उक्तम् । अतिविस्तारविस्तीर्णं न तद्भवेत् चिरायुषम् । स च भोजनं त्यक्त्वा गतः । अथ तृतीयस्य वटिकाभोजनं (घ) दत्तम् । तत्रापि पण्डितेन उक्तम् । छिद्रेषु अनर्था बहुलीभवन्ति (ङ) । एवं तेऽपि त्रयः पण्डिताः क्षुत्क्षामकण्ठा लोकैः हास्यमानाः ततः स्थानात् स्वदेशं गताः । अथ सुवर्णसिद्धिः आह । यत्त्वं लोकव्यवहारम् अजानन् मया वार्य्यमाणोऽपि न स्थितः तत ईदृशीम् अवस्थाम् उपगतः । अतोऽहं ब्रवीमि ।

अपि शास्त्रेषु कुशला लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्खपण्डिताः ॥४३॥

तत् श्रुत्वा चक्रधर आह । अहो ! अकारणमेतत् ।

बहुबुद्धयोऽपि विनश्यन्ति दुष्टदैवेन नाशिताः ।
स्वल्पबुद्धयोऽप्येकस्मिन् कुले नन्दन्ति सन्ततम् ॥ ४४ ॥

उक्तञ्च,　अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ ४५ ॥

---

(घ) वटिकेति । वटिका पिष्टकविशेषः सा एव भोजनं भक्ष्यम् ।

(ङ) छिद्रेष्विति । छिद्रेषु छिद्रयुक्तेषु पिष्टकविशेषेषु इति भावः दोषेष्विति प्रकृतार्थः । अनर्थाः विपदः बहुलीभवन्ति विस्तारं गच्छन्ति ।

बहुबुद्धय इति । बहुबुद्धयः महामतयः अपि दुष्टदैवेन दुर्दैवेन नाशिताः आक्रान्ता इति भावः विनश्यन्ति, तथा स्वल्पबुद्धयोऽपि एकस्मिन् कुले वंशे सन्ततं निरन्तरं नन्दन्ति ॥ ४४ ॥

अरक्षितमिति । अरक्षितं जनेन इति शेषः दैवरक्षितं सत् तिष्ठति जीवति, तथा सुरक्षितं सम्यक् लालितं जनेन इति शेषः दैवेन हतं विनाशितं सत् विनश्यति वने विसर्जितः परित्यक्तः अनाथोऽपि निराश्रयोऽपि जीवः जीवति दैवानु-

तथाच, शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः ।
एकबुद्धिरहं भद्रे ! क्रीड़ामि विमले जले ॥४६॥
सुवर्णसिद्धिः आह, कथमेतत् ? स आह,

## कथा ६ ।

कस्मिंश्चित् जलाशये शतबुद्धिः सहस्रबुद्धिश्च द्वौ मत्स्यौ निवसतः स्म । अथ तयोः एकबुद्धिर्नाम मण्डूको मित्रतां गतः । एवं ते त्रयोऽपि जलतीरे कञ्चित् कालं वेलायां (च) सुभाषितसुखम् अनुभूय भूयोऽपि सलिलं प्रविशन्ति । अथ कदाचित् तेषां गोष्ठीगतानां (छ) जालहस्तधीवराः प्रभूतैः मत्स्यैः व्यापादितैः मस्तके विधृतैः अस्तमनवेलायां तस्मिन् जलाशये समायाताः । ततः सलिलाशयं दृष्ट्वा मिथः प्रोचुः । अहो ! बहुमत्स्योऽयं ह्रदो दृश्यते स्वल्पसलिलश्च । तत्प्रभाते अत्र आगमिष्यामः । एवमुक्त्वा स्वगृहं गताः । मत्स्याश्च विषण्णवदना मिथो मन्त्रं चक्रुः । ततो मण्डूक आह, भोः ! शतबुद्धे ! श्रुतं धीवरोक्तं भवता ? तत् किमत्र युज्यते कर्त्तुम् ? पलायनम् अवष्टम्भो (ज) वा ? यत्कर्त्तुं युक्तं भवति तत् आदिश्यताम् अद्य । तत् श्रुत्वा

---

कूल्यात् इति भावः । ग्टहे कृतः प्रयत्नः प्रकृष्टः प्रयासः यस्य तथाविधोऽपि न जीवति । वंशस्थविलं वृत्तम् ॥ ४५ ॥

शतबुद्धिरिति । हे भद्रे ! अयं शतबुद्धिः शिरसि तिष्ठति इत्यर्थः, अयञ्च सहस्रधीः लम्बते लम्बमानः नीयते इति भावः । अहन्तु एकबुद्धिः विमले निर्मले जले क्रीड़ामि विहरामि ॥ ४६ ॥

(च) वेलायां जलतीरे । वेला स्यात्तीरनीरयोरित्यमरः ।

(छ) गोष्ठीगतानां सभागतानाम् । तेषामिति जलाशयेन सम्बन्धः ।

(ज) अवष्टम्भः स्तम्भीभूय अचलितभावेनावस्थानम् इत्यर्थः ।

सहस्रबुद्धिः प्रहस्य प्राह, भोः मित्र! मा भैषीर्यतो वचन-श्रवणमात्रादेव भयं न कार्य्यम्। न भेतव्यम्। उक्तञ्च,

सर्पाणाञ्च खलानाञ्च सर्वेषां दुष्टचेतसाम्।
अभिप्राया न सिद्ध्यन्ति तेनेदं वर्त्तते जगत्॥ ४७॥

तत् तावत् तेषाम् आगमनमपि न सम्पत्स्यते, भविष्यति वा, तर्हि त्वां बुद्धिप्रभावेण आत्मसहितं रक्षयिष्यामि यतोऽनेकां सलिलगतिचर्य्याम् (झ) अहं जानामि। तत् आकर्ण्य शतबुद्धिः आह, भो! युक्तमुक्तं भवता, सहस्रबुद्धिरेव भवान्। अथवा साधु इदमुच्यते।

बुद्धेर्बुद्धिमतां लोके नास्त्यगम्यं हि किञ्चन।
बुद्ध्या यतो हता नन्दाश्चाणक्येनासिपाणयः॥ ४८॥

तथाच, न यत्रास्ति गतिर्वायो रश्मीनाञ्च विवस्वतः।
तत्रापि प्रविशत्याशु बुद्धिर्बुद्धिमतां सदा॥ ४९॥

ततो वचनश्रवणमात्रादपि पितृपर्य्यायागतं (ञ) जन्मस्थानं त्यक्तुं न शक्यते। उक्तञ्च,

न तत् स्वर्गेऽपि सौख्यं स्यात् दिव्यस्पर्शनशोभने।

---

सर्पाणामिति। सर्पाणां खलानां सर्वेषां दुष्टचेतसां दुर्जनानाम् अभिप्रायाः अभिसन्धयः न सिद्ध्यन्ति न सफला भवन्ति, तेन इदं जगत् वर्त्तते तिष्ठति। यदि एषामभिलाषः सिद्ध्यति तदा जगत् अविलम्बमेव नश्यतीति भावः॥ ४७॥

(झ) सलिलगतिचर्य्यां जले गत्वा विहरणम्।

बुद्धेरिति। लोके जगति बुद्धिमतां बुद्धेः अगम्यम् अविषयम् इत्यर्थः किञ्चन किमपि वस्तु इति शेषः नास्ति, यतः चाणक्येन बुद्ध्या असिपाणयः खड्गधारिणः नन्दाः नन्दवंशीया राजानः हताः विनाशं नीताः॥ ४८॥

नेति। यत्र वायोः विवस्वतः सूर्य्यस्य रश्मीनाञ्च गतिः प्रवेशो न अस्ति, बुद्धिमतां बुद्धिः तत्रापि आशु शीघ्रं सदा प्रविशति॥ ४९॥

(ञ) पितृपर्य्यायागतं पितृक्रमायातम्।

कुस्थानेऽपि भवेत् पुंसां जन्मनो यत्र सम्भवः ॥ ५० ॥

तत्र कदाचिदपि गन्तव्यम्। अहं त्वां सुबुद्धिप्रभावेण रक्षयिष्यामि मण्डूक आह, भद्रौ ! मम तावत् एका एव बुद्धिः परायनपरा, तत् अहम् अन्यं जलाशयम् अद्य एव सभार्य्यो यास्यामि। एवमुक्त्वा स मण्डूको रात्रौ एव अन्यजलाशयं गतः। धीवरैः (ट) अपि प्रभाते आगत्य जघन्यमध्यमोत्तम-जलचरा मत्स्यकूर्ममण्डूककर्कटादयो गृहीताः तौ अपि शतबुद्धिसहस्रबुद्धी सभार्य्यौ पलायमानौ चिरम् आत्मानं गतिविशेषविज्ञानैः कुटिलचारेण रक्षन्तौ जाले पतितौ व्यापादितौ च। अथ अपराह्णसमये प्रहृष्टास्ते धीवराः स्वगृहं प्रति प्रस्थिताः। गुरुत्वात् च एकेन शतबुद्धिः स्कन्धे कृतः। सहस्रबुद्धिः प्रलम्बमानो नीयते। ततश्च वापीकण्ठोप-गतेन (ठ) मण्डूकेन तौ तथा नीयमानौ दृष्ट्वा अभिहिता स्वपत्नी। प्रिये ! पश्य पश्य।

शतबुद्धिः शिरस्थोऽयं लम्बते च सहस्रधीः।
एकबुद्धिरहं भद्रे ! क्रीड़ामि विमले जले ॥५१॥

अतोऽहं ब्रवीमि। न एकान्ते बुद्धिरपि प्रमाणम् (ड) सुवर्णसिद्धिः आह, यद्यपि एतदस्ति तथापि मित्रवचनम्

---

नेति। यत्र जन्मनः सम्भवः, तस्मिन् कुस्थानेऽपि पुंसां यत् सौख्यं भवेत्, दिव्यस्पर्शनशोभने दिव्यानां दिवि भवानां स्वर्गीयाणाम् इत्यर्थः वस्तूनां स्पर्शनेन शोभने मनोरमे स्वर्गेऽपि तत् सौख्यं न स्यात् ॥ ५० ॥

(ट) धीवरैः जालजीविभिः।

(ठ) वापीति। वाप्याः दीर्घिकायाः कण्ठम् उपगतः तेन।

(ड) न एकान्ते इति। एकान्ते एकान्ततः अवश्यमेव इत्यर्थः बुद्धिरपि न प्रमाणं न प्रमाणतया गण्यते व्यभिचारदर्शनादिति भावः।

अनुल्लङ्घनीयम् । परं किं क्रियते । निवारितोऽपि मया न स्थितोऽतिलौल्यात् विद्याहङ्काराच्च । अथवा साधु इदमुच्यते,

साधु मातुल ! गीतेन मया प्रोक्तोऽपि न स्थितः ।
अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम् ॥ ५२ ॥

चक्रधरः आह, कथमेतत् ? सोऽब्रवीत्,

## कथा ७ ।

कस्मिंश्चित् अधिष्ठाने उद्धतो नाम गर्दभः प्रतिवसति स्म । स सदैव रजकगृहे भारोद्वाहनं कृत्वा रात्रौ स्वेच्छया पर्यटति । ततः प्रत्यूषे बन्धनभयात् स्वयमेव रजकगृहम् आयाति । रजकोऽपि ततस्तं बन्धनेन नियुनक्ति । अथ तस्य रात्रौ पर्यटतः क्षेत्राणि कदाचित् शृगालेन सह मैत्री सञ्जाता । स च पीवरत्वात् वृतिभङ्गं कृत्वा कर्कटिकाक्षेत्रे (ढ) शृगालसहितः प्रविशति । एवं तौ यदृच्छया चिर्भटिकाभक्षणं (ण) कृत्वा प्रत्यहं प्रत्यूषे स्वस्थानं व्रजतः । अथ कदाचित् तेन मदोद्धतेन रासभेन क्षेत्रमध्यस्थितेन शृगालोऽभिहितः । भो भगिनीसुत ! पश्य पश्य, अतीव निर्मला रजनी । तदहं गीतं करिष्यामि । तत् कथय कतमेन

---

साध्विति । हे मातुल ! साधु भद्रमस्तु ते इति शेषः, मया प्रोक्तोऽपि सङ्केतितोऽपि गीतेन गीतप्रियतया न स्थितः, न तूष्णीमासीः तेन अयम् अपूर्वो मणिः उदूखलमिति भावः बद्धः, गीतलक्षणं गीतस्य पुरस्कारः सम्प्राप्तम् ॥ ५२ ॥

(ढ) पीवरत्वात् स्थूलकायत्वात् दृढ़कायत्वाद्वा । वृतिभङ्गं वेष्टनभेदम् । कर्कटिकाक्षेत्रे कर्कटिका नाम फलविशेषः ( काँकुर इति भाषा ) तस्य क्षेत्रे भूमौ ।

(ण) चिर्भटिकाभक्षणं कर्कटिकाभक्षणम् ।

रागेण (त) करोमि ? स आह, माम ! किमनेन वृथा अनर्थप्रचालनेन (थ) यतः चौरकर्मप्रवृत्तौ आवां निभृतैश्च (द) चौरजारैः अत्र स्थातव्यम्। उक्तञ्च,

कासीयुक्तस्त्यजेत् चौर्य्यं निद्रालुश्चेत् स चौरिकाम्।
जिह्वालौल्यं रुजाक्रान्तो जीवितं योऽत्र वाञ्छति ॥५३॥

अपरं त्वदीयं गीतं न मधुरस्वरम्। शङ्खशब्दानुकारं दूरादपि श्रूयते। तदत्र क्षेत्रे रक्षापुरुषाः सन्ति। ते उत्थाय वधं बन्धं वा करिष्यन्ति। तद्भक्षय तावत् अमृतमयाः चिर्भटीः। मा त्वम् अत्र गीतव्यापारपरो भव। तत् श्रुत्वा रासभ आह, भो ! वनाश्रयत्वात् त्वं गीतरसं न वेत्सि। तेन एतद्ब्रवीषि। उक्तञ्च,

शरज्ज्योत्स्नाहते दूरं तमसि प्रियसन्निधौ।
धन्यानां विशति श्रोत्रे गीतझङ्कारजा सुधा ॥ ५४ ॥

शृगाल आह, माम ! अस्ति एतत्, परं न वेत्सि त्वं गीतं

---

(त) रागेण स्वरविशेषेण।

(थ) अनर्थप्रचालनेन निरर्थकव्यापारेण।

(द) निभृतैः निःशब्दैः चौरजारैः तस्करोपपतिभिरित्यर्थः। अत्र संसारे।

कासीति। अत्र संसारे यः जीवितं वाञ्छति अभिलषति, स कासीयुक्तः कासरोगाक्रान्तश्चेत् चौर्य्यं स निद्रालुश्चेत्, चौरिकां चौर्य्यवृत्तिं त्यजेत्। तथा स रुजाक्रान्तः रोगी चेत् जिह्वाल्यौल्यं रसनाचापल्यं त्यजेत् त्यजतु चौर्य्ये प्रवृत्ते यदि तदानीं कासोपस्थितिः स्यात् तदा गृहस्थनिद्राभङ्गेन महान् अनर्थः स्यात्, निद्रागमे तत्रैव निद्रितः पतेत्, रोगसत्त्वे लोभात् आहारव्यतिक्रमे तदवस्थया मृत्युरपि सम्भवेदिति भावः ॥ ५३ ॥

शरज्ज्योत्स्नेति। शरदि या ज्योत्स्ना चन्द्रकिरणः तया तमसि तिमिरे दूरम् अत्यर्थं हते नाशिते सति प्रियसन्निधौ प्रेमास्पदजनसमीपे गीतस्य झङ्कारः स्वनः तस्मात् जाता सुधा धन्यानां पुण्यभाजां श्रोत्रे कर्णविवरे विशति ॥ ५४ ॥

केवलम् उन्नदसि। तत् किं तेन स्वार्थभ्रंशकेन ? (ध) रासभ आह, धिक् धिक् मूर्ख ! किमहं न जानामि गीतम् ? तद्यथा तस्य (न) भेदाः (प) शृणु।

सप्त स्वरास्त्रयो ग्रामा मूर्च्छनाश्चैकविंशतिः।
तालास्त्वेकोनपञ्चाशत् तिस्रो मात्रा लयास्त्रयः ॥५४॥
स्थानत्रयं यतीनाञ्च षडास्यानि रसा नव।
रागाः षट्त्रिंशतिर्भावाश्चत्वारिंशत्ततः स्मृताः ॥५५॥
पञ्चाशीत्यधिकं ह्येतद्गीताङ्गानां शतं स्मृतम्।
स्वयमेव पुरा प्रोक्तं भरतेन श्रुतेः परम् ॥ ५६ ॥
नान्यद्गीतात्प्रियं लोके देवानामपि दृश्यते।
शुष्कस्नायुस्वराह्लादात्त्र्यक्षं जग्राह रावणः ॥ ५७ ॥

तत् कथं भगिनीसुत ! माम् अनभिज्ञं वदन् निवारयसि ?

---

(ध) उन्नदसि उच्चैर्ध्वनसि। स्वार्थभ्रंशकेन स्वकार्य्यध्वंसिना व्यापारेणेति शेषः।

(न) तस्य गीतस्य।

(प) भेदाः प्रकाराः।

सप्तेति। स्वराः निषादादयः सप्त, निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः। ग्रामाः त्रयः। एकविंशतिः मूर्च्छनाः स्वरा आरोहावरोहक्रमभेदाः। तालास्तु एकपञ्चाशत्। मात्राः तिस्रः, लयाः त्रयः। यतीनां विरामाणां स्थानानि त्रीणि। आस्यानि मुखानि षट्। रसाः शृङ्गारहास्यकरुणरौद्रवीरभयानका वीभत्साद्भुतवत्सलाख्याः नव। रागाः षट्त्रिंशतिः, भावाः चत्वारिंशत् एतत् गीतस्य पञ्चाशीत्यधिकं शतम् अङ्गं स्मृतम्। पुरा भरतेन मुनिना श्रुतेः परम् एतत् गीताङ्गं सर्वं स्वयमेव प्रोक्तम्। लोके जगति देवानामपि गीतात् अन्यत् प्रियं न दृश्यते। तथाहि रावणः शुष्काः कठिनतपश्चरणात् नीरसाः स्नायवः यस्य तथाभूतस्य शरीरस्य इत्यर्थः यः स्वरः तेन आह्लादात् आनन्दात् आनन्दजननादिति भावः त्र्यक्षं त्रिलोचनं जग्राह वशीचकार स्तुतिसूचकसङ्गीतेन हरं प्रीणयामासेति भावः ॥ ५५ ॥ ५६ ॥ ५७ ॥

शृगाल आह, माम ! यदि एवं तदहं तावद्वृतेः द्वारस्थितः क्षेत्रपालम् अवलोकयामि। त्वं पुनः स्वेच्छया गीतं कुरु। तथा अनुष्ठिते रासभरटनम् आकर्ण्य क्षेत्रपः क्रोधात् दन्तान् घर्षयन् (फ) प्रधावितः। यावत् रासभो दृष्टः तावत् लगुड़-प्रहारैः तथा हतो, यथा प्रताड़ितो भूपृष्ठे पतितः। ततश्च सच्छिद्रम् उलूखलं (ब) गले बद्धा क्षेत्रपालः प्रसुप्तः। रासभोऽपि स्वजातिस्वभावात् गतवेदनः क्षणेन अभ्युत्थितः।

उक्तञ्च, सारमेयस्य चाश्वस्य रासभस्य विशेषतः।

मुहूर्त्तात्परतो न स्यात् प्रहारजनिता व्यथा॥ ५८॥

ततः तमेव उलूखलम् आदाय वृतिं चूर्णयित्वा पलायितुम् आरब्धः। अत्रान्तरे शृगालोऽपि दूरादेव तं दृष्ट्वा सस्मितम् आह,

साधु मातुल ! गीतेन हया प्रोक्तोऽपि न स्थितः।

अपूर्वोऽयं मणिर्बद्धः सम्प्राप्तं गीतलक्षणम्॥ ५९॥

तद्भवानपि मया वार्य्यमाणोऽपि न स्थितः ( भ )। तत् श्रुत्वा चक्रधर आह, भो मित्र ! सत्यमेतत्। अथवा साधु इदमुच्यते,

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः।

---

(फ) रासभरटनं गर्द्दभचीत्कारम्। क्षेत्रपः क्षेत्रस्वामी। घर्षयन् दशन्नित्यर्थः।

(ब) उलूखलं गले बद्धं कृत्वा इति शेषः।

सारमेयस्येति। सारमेय ग कुकुरस्य अश्वस्य विशेषतः रासभस्य गर्द्दभस्य प्रहारजनिता व्यथा मुहूर्त्तात् परतः क्षणभावात् परं न स्यात् न तिष्ठेत्॥ ५८॥

(भ) न स्थितः न मम वाक्यं श्रुतवानिति भावः।

स एव निधनं याति यथा मन्थरकौलिकः ॥ ६० ॥

सुवर्णसिद्धिः आह, कथमेतत् ? सोऽब्रवीत् ।

## कथा ८ ।

कस्मिंश्चित् अधिष्ठाने मन्थरको नाम कौलिकः (म) प्रतिवसति स्म ; तस्य कदाचित् पट्टकर्माणि कुर्वतः सर्वपट्टकर्मकाष्ठानि (य) भग्नानि । ततः स कुठारम् आदाय वने काष्ठार्थं गतः । स च समुद्रतटं यावत् भ्रमन् प्रयातः, ततश्च तत्र शिंशपापादपस्तेन दृष्टः । ततः चिन्तितवान्, महान् अयं वृक्षो दृश्यते । तदनेन कर्त्तितेन (र) प्रभूतानि पट्टकर्मोपकरणानि भविष्यन्ति । इति अवधार्य्य तस्योपरि कुठारमुत्क्षिप्तवान् । अथ तत्र वृक्षे कश्चित् व्यन्तरः (ल) समाश्रित आसीत् । अथ तेन अभिहितं भो ! मदाश्रयोऽयं पादपः, (व) सर्वथा रक्षणीयो, यतोऽहम् अत्र महासौख्येन तिष्ठामि समुद्रकल्लोलस्पर्शनात् (श) शीतवायुना आप्यायितः (ष) । कौलिक आह, भोः ! किमहं करोमि, दारुसामग्रीं

---

यस्येति । यस्य प्रज्ञा बुद्धिर्नास्ति, यश्च स्वयं मित्रोक्तं बन्धुवाक्यं न करोति, स एव मन्थरकौलिको यथा निधनं नाशं याति प्राप्नोति ॥ ६० ॥

(म) कौलिकः तन्तुवायः ।

(य) पट्टकर्माणि वस्त्रकार्य्याणि । सर्वेति । सर्वाणि पट्टकर्मकाष्ठानि वस्त्रवयनयन्त्राणि ।

(र) कर्त्तितेन खण्डितेन ।

(ल) व्यन्तरः जीवविशेषः यक्षो वा ।

(व) मदाश्रयः ममावासः । पादपः वृक्षः ।

(श) समुद्रकल्लोलानां सागरतरङ्गाणां स्पर्शनात् ।

(ष) आप्यायितः प्रीणितः ।

(स) विना मे कुटुम्बं बुभुक्षया पीड्यते। तस्मात् अन्यत्र शीघ्रं गम्यताम्। अहम् एनं कर्त्तयिष्यामि। व्यन्तर आह, भोः! तुष्टः (ह) तव अहम्। तत् प्रार्थ्यताम् अभीष्टं किञ्चित्। रक्षैनं पादपमिति। कौलिक आह, यदि एवं तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्य्याञ्च पृष्ट्वा आगमिष्यामि। ततः त्वया देयम्। अथ तथेति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रति निवृत्तः। यावत् अग्रे गच्छति तावत् ग्रामप्रवेशे निजसुहृदं नापितम् अपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेदयामास। यदहो मित्र! मम कश्चित् व्यन्तरः सिद्धः, तत्कथय किं प्रार्थये। अहं त्वां प्रष्टुम् आगतः। नापित आह, भद्र! यदि एवं तत् राज्यं प्रार्थय येन त्वं राजा भवसि अहं त्वन्मन्त्री च। द्वौ अपि इह सुखमनुभूय परलोकसुखम् अनुभवावः। उक्तञ्च,

राजा दानपरो नित्यमिह कीर्त्तिमवाप्य च।
तत्प्रभावात्पुनः स्वर्गे स्पर्द्धते त्रिदशैः सह ॥ ६१ ॥

कौलिक आह, अस्ति एतत्परं तथापि गृहिणीं पृच्छामि। स आह, भद्र! शास्त्रविरुद्धमेतत् यत् स्त्रिया सह मन्त्रो, यतस्ताः स्वल्पमतयो भवन्ति, उक्तञ्च,

भोजनाच्छादने दद्यादृतुकाले च सङ्गमम्।

---

(स) दारुसामग्रीं काष्ठमयोपकरणम्। कुटुम्बं परिजनः।

(ह) तुष्टः प्रीतः।

राजेति। इह संसारे नित्यं सततं दानपरो राजा कीर्त्तिं यशः अवाप्य लब्ध्वा तत्प्रभावात् तस्य दानस्य प्रभावात् पुनः त्रिदशैः देवैः सह स्वर्गे स्पर्द्धते प्रतिस्पर्द्धी समकक्ष इत्यर्थः भवति इत्यर्थः ॥ ६१ ॥

भूषणाद्यञ्च नारीणां न ताभिर्मन्त्रयेत् सुधीः ॥६२॥
यत्र स्त्री यत्र कितवो बालो यत्राप्रशासितः।
तद्गृहं क्षयमायाति भार्गवो ह्यीदमब्रवीत् ॥ ६३ ॥
तावत् स्यात् सुप्रसन्नास्य स्तावत् गुरुजने रतिः।
पुरुषो योषितां यावन्न शृणोति वचो रहः ॥ ६४ ॥
एताः स्वार्थपरा नार्य्यः केवलं स्वसुखे रताः।
न तासां वल्लभः कोऽपि सुतोऽपि स्वसुखं विना ॥६५॥

कौलिक आह, तथापि प्रष्टव्या सा मया, यतः प्रतिव्रता सा। अपरं ताम् अपृष्ट्वा अहं न किञ्चित्करोमि। एवं तमभिधाय सत्वरं गत्वा ताम् उवाच, प्रिये! अद्य अस्माकं कश्चित् व्यन्तरः सिद्धः, स वाञ्छितं प्रयच्छति, तदहं त्वां प्रष्टुम् आगतः। तत्कथय किं प्रार्थये? एष तावत् मम मित्रं नापितो वदति एवं यत् राज्यं प्रार्थयस्व। सा आह, आर्य्यपुत्र! का मतिर्नापितानाम्। तत् न कार्य्यं तद्वचः।

---

भोजनेति। सुधीः पण्डितो जनः नारीणां भोजनाच्छादने अन्नवस्त्रे भूषणाद्यञ्च अलङ्कारादिकञ्च दद्यात् ऋतुकाले सङ्गमं कुर्य्यात्, किन्तु ताभिः सह न मन्त्रयेत् न मन्त्रणां कुर्य्यात् ॥ ६२ ॥

यत्रेति। यत्र स्त्री अप्रशासितेति भावः, यत्र कितवः धूर्त्तः दुर्जन इत्यर्थः यत्र अप्रशासितः अदमित इत्यर्थः बालः तिष्ठतीति शेषः, तत् गृहं ध्वंसम् आयाति प्राप्नोति। हि यतः भार्गवः भृगुतनयः भृगुर्वा इदम् अब्रवीत् ॥ ६३ ॥

तावदिति। पुरुषः यावत् रहः निर्जने योषितां वचः न शृणोति, तावदसौ सुप्रसन्नम् आस्यं मुखं यस्य तादृशः स्यात्, तावच्च अस्य गुरुजने पित्रादौ रतिः अनुरागः भक्तिरिति यावत् तिष्ठतीति शेषः ॥ ६४ ॥

एता इति। एताः नार्य्यः केवलं स्वार्थपराः स्वकार्य्यपरायणाः स्वस्य आत्मनः सुखे रताश्च। कोऽपि जनः तासां नारीणां वल्लभः प्रियो न, किं बहुना सुतोऽपि पुत्रोऽपि स्वसुखं तासामात्मसुखं विना न प्रिय इति शेषः ॥ ६५ ॥

उक्तञ्च, चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि ।
न मन्त्रं मतिमान् कुर्य्यात् सार्द्धं भिक्षुभिरेव च ॥६६॥

अपरं महती क्लेशपरम्परा एषा (च) राज्यस्थितिः, सन्धिविग्रहयानासनसंश्रयद्वैधीभावादिभिः कदाचित् पुरुषस्य सुखं न प्रयच्छतीति । यतः,

यदैव राज्ये क्रियतेऽभिषेकस्तदैव याति व्यसनेषु बुद्धिः ।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ॥६७॥

तथाच, रामस्य व्रजनं वने निवसनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम् ।
सौदासं तदवस्थमर्जुनवधं सञ्चिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ॥६८॥

यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः ।

---

चारणैरिति । मतिमान् बुद्धिमान् जनः चारणैः कुशीलवैः नटवृत्तिभिरित्यर्थः वन्दिभिः स्तुतिपाठकैः, नीचैः क्षुद्रैः नापितैः बालकैरपि तथा भिक्षुभिश्च सार्द्धं मन्त्रं न कुर्य्यात् ॥ ६६ ॥

(च) क्लेशपरम्परा क्लेशनिचयः । राज्यस्थितिः राज्यपालनम् ।

यदैवेति । यदैव राज्ये अभिषेकः क्रियते, तदैव व्यसनेषु दुराचारेषु मृगयादिषु बुद्धिर्याति । नृपाणामभिषेककाले घटाः जलकलसाः अम्भसा सहैव आपदम् उद्गिरन्ति उद्वमन्ति । इन्द्रवज्रावृत्तम् ॥ ६७ ॥

रामेति । रामस्य प्रव्रजनं तथा वने निवसनं पाण्डोः सुतानां युधिष्ठिरादीनां वनं वनगमनं वृष्णीनां यदूनां निधनं नृपतेर्नलस्य राज्यात् परिभ्रंशनं च्युतिं सौदासं तदाख्यं सूर्य्यवंशीयनरपतिविशेषं तदवस्थं गुरोरभिसम्पातेन राक्षसयोनिप्राप्तमिति भावः, अर्जुनस्य कार्त्तवीर्य्यस्य वधं तथा लङ्केश्वरं रावणं सञ्चिन्त्य राज्यकृते राज्यार्थं विडम्बनगतं विप्रलब्धञ्च सर्वं दृष्ट्वा तस्मात् कारणात् तत् राज्यं न वाञ्छयेत् कमपि राज्यग्रहणाय न प्रवर्त्तयेद् इत्यर्थः । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥

बधं राज्यकृतां राज्ञां तद्राज्यं दूरतस्त्यजेत् ॥६८॥

कौलिक आह, सत्यमुक्तं भवत्या। तत् कथय किं प्रार्थये। सा आह, त्वं तावदेकं पटं (क) नित्यमेव निष्पादयसि, तेन सर्वा व्ययशुद्धिः (ख) सम्पद्यते। इदानीं त्वम् आत्मनोऽन्यत् बाहुयुगलं द्वितीयं शिरश्च याचस्व, येन पटद्वयं सम्पादयसि पुरतः पृष्ठतश्च, (ग) एकस्य मूल्येन गृहे यथापूर्वं व्ययं सम्पादयिष्यसि। द्वितीयस्य मूल्येन विशेषकृत्यानि करिष्यसि। एवं सौख्येन स्वजातिमध्ये श्लाघ्यमानस्य कालो यास्यति। लोकद्वयस्य उपार्जना (घ) भविष्यति। सोऽपि तदाकर्ण्य प्रहृष्टः प्राह, साधु पतिव्रते! साधु, युक्तमुक्तं भवत्या; तदेवं करिष्यामि, एष मे निश्चयः। ततोऽसौ गत्वा व्यन्तरं प्रार्थयाञ्चक्रे, भो! यदि मम ईप्सितं प्रयच्छसि तत् देहि मे द्वितीयं बाहुयुगलं शिरश्च। एवम् अभिहिते तत्क्षणादेव द्विशिराः चतुर्बाहुश्च सञ्जातः। ततो हृष्टमना यावत् गृहम् आगच्छति, तावत् लोकैः राक्षसोऽयमिति मन्यमानैः लगुड़पाषाणप्रहारैः ताड़ितो मृतश्च। अतोऽहं ब्रवीमि,

यस्य नास्ति स्वयं प्रज्ञा मित्रोक्तं न करोति यः।

---

यदर्थमिति। ये निजाः भ्रातरः तथा पुत्राः, तेऽपि यदर्थं यस्य राज्यस्य कृते राज्यकृतां राज्यं पालयतां राज्ञां भ्रातॄणां पितॄणाञ्चेति भावः बधं वाञ्छन्ति प्रार्थयन्ते तत् राज्यं दूरतः त्यजेत् परिहरेत् न स्पृशेदिति भावः॥ ६८॥

(क) पटं वस्त्रम्। निष्पादयसि वयसि।

(ख) व्ययशुद्धिः व्ययनिर्वाहः।

(ग) पुरतः सम्मुखम्। पृष्ठतः पश्चाद्भागे।

(घ) लोकद्वयस्य ऐहिकपारत्रिकोभयरूपस्य। उपार्जना संसाधनम्।

स एव निधनं याति यथा मन्थरकौलिकः ॥ ७० ॥

चक्रधरः आह, भोः! सत्यमेतत्। सर्वोऽपि जनोऽत्रेया-शापिशाचिकां प्राप्य हास्यपदवीं याति। अथवा साधु इदमुच्यते, केनापि।

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ७१ ॥

सुवर्णसिद्धिः आह, कथमेतत्? सोऽब्रवीत्,

## कथा ९।

कस्मिंश्चित् नगरे कश्चित् स्वभावकृपणो नाम ब्राह्मणः प्रतिवसति स्म; तेन भिक्षार्जितैः सक्तुभिः भुक्तशेषैः (ङ) कलशः सम्पूरितः। तञ्च घटं नागदन्ते (च) अवलम्ब्य तस्य अधस्तात् खट्वां निधाय सततम् एकदृष्ट्या तम् अवलोकयति। अथ कदाचित् रात्रौ सुप्तः (छ) चिन्तयामास, यत् परिपूर्णोऽयं घटस्तावत् सक्तुभिः वर्त्तते। तद्यदि दुर्भिक्षं भवति तत् अनेन रूपकाणां (ज) शतमुत्पद्यते। ततस्तेन मया अजाद्वयं ग्रहीतव्यम्। ततः षाण्मासिकप्रसववशात् ताभ्यां (झ)

---

मन्थरेति। मन्थरः जड़ः सचासौ कौलिकश्चेति तथोक्तः मूर्खतन्तुवाय इत्यर्थः ॥ ७० ॥

अनागतवतीमिति। यः अनागतवतीम् अनुपस्थिताम् असम्भाव्यां चिन्तां करोति, स सोमशर्मणः पिता यथा पाण्डुरः सन् शेते ॥ ७१ ॥

(ङ) भुक्तशेषैः भक्षितावशिष्टैः।

(च) नागदन्ते गृहभित्तौ प्रोते दण्डविशेषे।

(छ) सुप्तः शयितः।

(ज) रूपकाणां शतं शतं रौप्यमुद्रा इत्यर्थः।

(झ) अजाद्वयं छागयुगलम्। ग्रहीतव्यं क्रेतव्यम्। षाण्मासिकेति। षड्भिः मासैः निष्पन्नः षाण्मासिकः स चासौ प्रसवश्चेति तद्वशात् तद्धेतोः।

यूथं भविष्यति। ततोऽजाभिः प्रभूता गा ग्रहीष्यामि, गोभिः महिषीर्महिषीभिः वड़वाः, (ञ) वड़वाप्रसवतः प्रभूता अश्वा भविष्यन्ति, तेषां विक्रयात् प्रभूतं सुवर्णं भविष्यति, सुवर्णेन चतुःशालं ( ट ) गृहं सम्पद्यते। ततः कश्चिद् ब्राह्मणो मम गृहम् आगत्य प्राप्तवयस्कां रूपाढ्यां कन्यां दास्यति, तत्सकाशात् पुत्रो मे भविष्यति, तस्य अहं सोमशर्मेति नाम करिष्यामि। ततः तस्मिन् जानुचलनयोग्ये सञ्जातेऽहं पुस्तकं गृहीत्वा अश्वशालायाः पृष्ठदेशे उपविष्टः तदवधारयिष्यामि। अत्रान्तरे सोमशर्मा मां दृष्ट्वा ( ठ ) जनन्युत्सङ्गात् जानुप्रचलनपरोऽश्वखुरासन्नवर्त्ती मत्समीपम् आगमिष्यति। ततोऽहं ब्राह्मणीं कोपाविष्टोऽभिधास्यामि, गृहाण तावत् बालकम्। सापि गृहकर्मव्यग्रतया अस्मत् वचनं न श्रोष्यति, ततोऽहं समुत्थाय तां पादप्रहारेण ताड़यिष्यामि। एवं तेन ध्यानस्थितेन (ड) तथा एव पादप्रहारो दत्तो, यथा स घटो भग्नः। सक्तुभिः पाण्डुरतां (ढ) गतः। अतोऽहं ब्रवीमि,

अनागतवतीं चिन्तामसम्भाव्यां करोति यः।
स एव पाण्डुरः शेते सोमशर्मपिता यथा ॥ ७२ ॥

सुवर्णसिद्धिः आह, एवमेतत्। कस्ते दोषो ? यतः सर्वोऽपि लोभेन विड़म्बितो (ण) बाध्यते। उक्तञ्च,

---

(ञ) वड़वाः अश्वाः।
(ट) चतुःशालं चतसृषु दिक्षु शाला गृहाणि यस्य तादृशं हर्म्यम् इत्यर्थः।
(ठ) जनन्युत्सङ्गात् मातुः क्रोड़ात्।
(ड) ध्यानस्थितेन चिन्तामग्नेन।
(ढ) पाण्डुरतां श्वेततां स्वयमिति शेषः।
(ण) विड़म्बितः प्रतारितः। बाध्यते पीड्यते।

यो लौल्यात् कुरुते कर्म नैवोदर्कमवेक्षते ।
विडम्बनामवाप्नोति स यथा चन्द्रभूपतिः ॥ ७३ ॥

चक्रधर आह, कथमेतत् ? स आह,

## कथा १० ।

कस्मिंश्चित् नगरे चन्द्रो नाम भूपतिः प्रतिवसति स्म, तस्य पुत्रा वानरक्रीड़ारता, वानरयूथं नित्यमेव अनेकभोजनभक्ष्यादिभिः पुष्टिं नयन्ति स्म। अथ वानरयूथाधिपो यः स औशनसवार्हस्पत्यचाणक्यमतवित्तदनुष्ठाता (त) च तान् सर्वानपि अध्यापयति स्म। अथ तस्मिन् राजगृहे लघुकुमारवाहनयोग्यं (थ) मेषयूथमस्ति, तन्मध्यात् एको जिह्वालौल्यात् (द) अहर्निशं निःशङ्कं महानसे (ध) प्रविश्य यत् पश्यति तत्सर्वं भक्षयति, ते च सूपकारा (न) यत्किञ्चित् काष्ठं मृण्मयं भाजनं कांस्यपात्रं ताम्रपात्रं वा पश्यन्ति तेनाशु ताड़यन्ति सोऽपि वानरयूथपः तद्दृष्ट्वा व्यचिन्तयत्, अहो ! मेषसूपकारकलहोऽयं वानराणां क्षयाय भविष्यति यतोऽन्नास्वादलम्पटो-

---

य इति। यः लौल्यात् चापल्यात् कर्म कुरुते, उदर्कम् उत्तरकालिकं फलं परिणामम् इत्यर्थः नैव अवेक्षते पश्यति, स चन्द्रभूपतिर्यथा विड़म्बनां प्रतारणाम् अवाप्नोति लभते ॥ ७३ ॥

(त) औशनसेति। उशनस इदम् औशनसं शुक्रप्रणीतम् इत्यर्थः बृहस्पतेरिदं वार्हस्पत्यं बृहस्पतिप्रणीतम् इत्यर्थः चाणक्यमतञ्च वेत्तीति तथोक्तः विविधनीतिशास्त्रज्ञ इत्यर्थः। तदनुष्ठाता नयमार्गानुसारी इत्यर्थः।

(थ) लघ्विति। लघूनां क्षुद्राणां कुमाराणां शिशूनां वाहनयोग्यं यानोपयोगि।

(द) एकः मेष इत्यर्थः। जिह्वालौल्यात् रसनाचापल्यात् लोभात् इत्यर्थः।

(ध) महानसे पाकशालायाम्।

(न) सूपकाराः पाचकाः।

ऽयं (प) मेषो महाकोपाश्च सूपकारा यथासन्नवस्तुना (फ) प्रहरन्ति। तद्यदि वस्तुनोऽभावात् कदाचित् उल्मुकेन (ब) ताड़यिष्यन्ति तदा ऊर्णाप्रचुरोऽयं मेषः स्वल्पेनापि वह्निना प्रज्वलिष्यति। तत् दह्यमानः पुनः अश्वकुट्यां (भ) समीपवर्त्तिन्यां प्रवेक्ष्यति, सापि तृणप्राचुर्य्यात् ज्वलिष्यति। ततोऽश्वा वह्निदाहम् अवाप्स्यन्ति। शालिहोत्रेण पुनः एतदुक्तम्, यत् वानरवसया अश्वानां वह्निदाहदोषः (म) प्रशाम्यति तत् नूनम् एतेन भाव्यम् अत्र निश्चयः। एवं निश्चित्य सर्वान् वानरान् आहूय रहसि प्रोवाच। यत्,

मेषेण सूपकाराणां कलहो यत्र जायते।
स भविष्यत्यसन्दिग्धं वानराणां क्षयावहः॥ ७४॥

तस्मात् स्यात् कलहो यत्र गृहे नित्यमकारणः।
तद्गृहं जीवितं वाञ्छन् दूरतः परिवर्जयेत्॥ ७५॥

तथाच, कलहान्तानि हर्म्याणि कुवाक्यान्तञ्च सौहृदम्।

---

(प) अन्नेति। अन्नस्य आस्वादे लम्पटः लालसः।

(फ) यथासन्नवस्तुना निकटस्थेन येन केनचित् वस्तुना इत्यर्थः।

(ब) उल्मुकेन ज्वलत्काष्ठेन। ऊर्णाप्रचुरः लोमपूर्णः।

(भ) अश्वकुट्याम् अश्वशालायाम्। सापि अश्वकुटी। तृणप्राचुर्य्यात् तृणबाहुल्यात्।

(म) शालिहोत्रेण केनचित् अश्वशास्त्रविज्ञेन। वानरवसया वानरमेदसा। मेषेणेति। यत्र मेषेण सूपकाराणां पाचकानां कलहः जायते, तत्र स कलह इति शेषः असन्दिग्धं निःसंशयं वानराणां क्षयावहः भविष्यति॥ ७४॥

तस्मादिति। तस्मात् यत्र गृहे नित्यं सततम् अकारणः निरर्थकः कलहः स्यात्, जीवितं वाञ्छन् जनः तद् गृहं दूरतः परिवर्जयेत् परित्यजेत्। तत्र गृहे न स्थातव्यमिति भावः॥ ७५॥

कलहान्तानीति। हर्म्याणि अट्टानि कलहः अन्ते अवसाने ध्वंसावस्थायाम् इत्यर्थः येषु तानि, यत्र हर्म्ये कलहस्तिष्ठति तत् शीघ्रं क्षयं यातीति भावः।

कुराजान्तानि राष्ट्राणि कुकर्मान्तं यशो नृणाम् ॥७६॥

तत्र यावत् सर्वेषां संचयो भवति तावदेतत् राजगृहं सन्त्यज्य वनं गच्छामः। अथ तत् तस्य वचनम् अश्रद्धेयं श्रुत्वा मदोद्धता वानराः प्रहस्य प्रोचुः भो! भवतो वृद्धभावात् बुद्धिवैकल्यं (य) सञ्जातं येन एतद्ब्रवीषि। उक्तञ्च,

वदनं दशनैर्हीनं लाला स्रवति नित्यशः।
न मतिः स्फुरति क्वापि बाले वृद्धे विशेषतः ॥ ७७ ॥

न वयं स्वर्गसमानोपभोगान् नानाविधान् भक्ष्यविशेषान् राजपुत्रैः स्वहस्तदत्तान् अमृतकल्पान् परित्यज्य तत्र अटव्यां कषायकटुतिक्तक्षाररूक्षफलानि भक्षयिष्यामः। तच्छ्रुत्वा अश्रुकलुषां (र) दृष्टिं कृत्वा स प्रोवाच, रे रे मूर्खाः! यूयम् एतस्य सुखस्य परिणामं न जानीथ। किं न पापरसास्वादनप्रायम् एतत् सुखम्, परिणामे (ल) विषवत् भविष्यति? तदहं कुलक्षयं स्वयं न अवलोकयिष्यामि, साम्प्रतं वनं यास्यामि। उक्तञ्च, मित्रं व्यसनसम्प्राप्तं स्वस्थानं परपीड़ितम्।

---

सौहृदं मैत्रं कुवाक्यम् अन्ते यस्य तथोक्तं कुवाक्ये सौहार्दं नश्यतीति भावः। राष्ट्राणि कुराजान्तानि राजदोषेणैव राष्ट्रं ध्वंसं गच्छतीति भावः। नृणां यशः कुकर्मान्तं दुष्कर्मावसानं दुष्कर्मणा यशो नश्यतीति भावः ॥ ७६ ॥

(य) बुद्धिवैकल्यं मतिभ्रंशः।

वदनमिति। वदनं मुखं वृद्धस्य बालकस्य चेति शेषः दशनैः दन्तैः हीनं पतनादनुत्थानाच्चेति भावः। नित्यशः सततं लाला स्रवति गलति। तथा क्वापि बाले शिशौ विशेषतः वृद्धे मतिः न स्फुरति न विकाशते ॥ ७७ ॥

(र) अश्रुकलुषां नेत्रजलैराविलाम्।

(ल) पापेति। पापस्य दुष्कर्मणः व्यसनस्येति भावः यः रसः अनुभवप्रीतिरित्यर्थः तस्य आस्वादनप्रायम् आस्वादनसदृशम्। आपाततः व्यसनसुखं मनोरमं भवति परिणामे अतिविरसमिति भावः।

मित्रमिति। ये जनाः व्यसनसम्प्राप्तं व्यसनासक्तं मित्रं परैः शत्रुभिः पीड़ि-

धन्यास्ते ये न पश्यन्ति देशभङ्गं कुलक्षयम् ॥ ७८ ॥

एवम् अभिधाय सर्वान् तान् परित्यज्य स यूथाधिपोऽटव्यां गतः।

अथ तस्मिन् गतेऽन्यस्मिन् अहनि स मेषो महानसे प्रविष्टो यावत् सूपकारेण न अन्यत् किञ्चित् समासादितं, तावत् अर्द्धज्वलितकाष्ठेन ताड्यमानो जाज्वल्यमानशरीरः शब्दायमानोऽश्वकुट्यां प्रत्यासन्नवर्त्तिन्यां प्रविष्टः। तत्र तृणप्राचुर्य्ययुक्तायां क्षितौ तस्य प्रलुठतः सर्वत्रापि वह्निज्वालाः तथा समुत्थिता यथा केचिदश्वाः स्फुटितलोचनाः पञ्चत्वं गताः केचित् बन्धनानि त्रोटयित्वा अर्द्धदग्धशरीरा इतश्चेतश्च ह्रेषायमाणा (व) धावमानाः सर्वमपि जनसमूहम् आकुलीचक्रुः। अत्रान्तरे राजा सविषादः शालिहोत्रज्ञान् वैद्यान् आहूय प्रोवाच, भोः! प्रोच्यताम् एषाम् अश्वानां कश्चित् दाहोपशमनोपायः। तेऽपि शास्त्राणि विलोक्य प्रोचुः, देव! प्रोक्तमत्र विषये भगवता शालिहोत्रेण। यत्,

कपीनां मेदसा दोषो वह्निदाहसमुद्भवः।
अश्वानां नाशमभ्येति तमः सूर्य्योदये यथा ॥ ७९ ॥

तत्क्रियताम् एतत् चिकित्सितं (श) द्राक् यावत् एते न दाहदोषेण विनश्यन्ति। सोऽपि तदाकर्ण्य समस्तवानरवधम्

---

तम् उपद्रुतं स्वस्थानं जन्मभूमिं स्वगृहं वा, देशभङ्गं तथा कुलक्षयं वंशनाशं न पश्यन्ति, ते धन्याः पुण्यवन्तः ॥ ७८ ॥

(व) ह्रेषायमाणा ह्रेषाध्वनिं कुर्वन्त इत्यर्थः।

कपीनामिति। अश्वानां वह्निदाहसमुद्भवः दोषः सूर्य्योदये तमो यथा कपीनां वानराणां मेदसा वसया नाशम् उपशमम् अभ्येति प्राप्नोति ॥ ७९ ॥

(श) द्राक् झटिति।

आदिष्टवान्। किं बहुना सर्वेऽपि ते वानरा विविधायुधलगुड़पाषाणादिभिः व्यापादिता इति। अथ सोऽपि वानरयूथपः तं पुत्रपौत्रभ्रातृसुतभागिनेयादिसंक्षयं ज्ञात्वा परं विषादम् उपागतः। स त्यक्ताहारक्रियो वनात् वनं पर्य्यटति, अचिन्तयच्च, कथमहं तस्य नृपापसदस्य अनृणताकृत्येन अपकृत्यं (ष) करिष्यामि। उक्तञ्च,

मर्षयेद्धर्षणां योऽत्र वंशजां परनिर्मिताम्।
भयाद्वा यदि वा कामात् स ज्ञेयः पुरुषाधमः॥८०॥

अथ तेन वृद्धवानरेण कुत्रचित्पिपासाकुलेन भ्रमता पद्मिनीखण्डमण्डितं सरः समासादितम्। तत् यावत् सूक्ष्मेक्षिकया (स) अवलोकयति तावत् वनचरमनुष्याणां पदपंक्तिप्रवेशोऽस्ति न निष्क्रमणम्। ततः चिन्तितम् नूनम् अत्र जलान्ते (ह) दुष्टग्राहेण भाव्यम्, (च) तत् पद्मिनीनालम् आदाय दूरस्थोऽपि जलं पिबामि। तथानुष्ठिते तन्मध्यात् राक्षसो निष्क्रम्य रत्नमालाविभूषितकण्ठः (क) तमुवाच, भो!

---

(ष) नृपापसदस्य राजाधमस्य। अनृणताकृत्येन आनृण्यसम्पादनेन अपकृत्यं वैरनिर्य्यातनमिति भावः।

मर्षयेदिति। यः अत्र संसारे परनिर्मिताम् अन्यकृतां वंशजां कुलसंक्रान्ताम् इत्यर्थः धर्षणाम् अवमाननां भयाद्वा कामाद् यदि वा मर्षयेत् क्षमेत, सः पुरुषाधमः ज्ञेयः॥८०॥

(स) पद्मिनीति। पद्मिनीनां खण्डं सङ्घः तेन मण्डितम् अलङ्कृतम्। सरः। सूक्ष्मेक्षिकया सूक्ष्मदृष्ट्या।

(ह) जलान्ते जलमध्ये। दुष्टग्राहेण दुष्टेन दारुणेन ग्राहेण जलचरेण।

(च) भाव्यं स्थातव्यम् इत्यर्थः।

(क) तथा तस्मिन् प्रकारे अनुष्ठिते कृते सति। तन्मध्यात् जलमध्यात् निष्क्रम्य निर्गत्य रत्नमालया रत्नहारेण विभूषितः शोभितः कण्ठो यस्य स तथोक्तः।

अत्र यः सलिले प्रवेशं करोति स मे भक्ष्य इति। तत् नास्ति धूर्त्ततरस्त्वत्समो(ख)ऽन्यो यत् पानीयम् अनेन विधिना (ग) पिबसि। ततः तुष्टोऽहम्, प्रार्थयस्व हृदयवाञ्छितम्। कपि-राह, भोः! कियती ते भक्षणशक्तिः, स आह, शतसहस्रायुत-लक्षाणि अपि जलप्रविष्टानि भक्षयामि। वाह्यतः(घ) शृगालो-ऽपि मां दूषयति (ङ)। वानर आह अस्ति मे केनचित् भूप-तिना सह अत्यन्तं वैरम्, यदि एनां रत्नमालां मे प्रयच्छसि तत् सपरिवारमपि तं भूपतिं वाक्प्रपञ्चेन ( च ) लोभयित्वा अत्र सरसि प्रवेशयामि सोऽपि श्रद्धेयं वचस्तस्य श्रुत्वा रत्नमालां दत्त्वा प्राह, भो मित्र! यत् समुचितं भवति तत्कर्त्तव्यमिति। वानरोऽपि रत्नमालाविभूषितकण्ठो वृक्षप्रासादेषु ( छ ) परि-भ्रमन् जनैः दृष्टः पृष्टश्च, भो यूथप! भवान् इयन्तं कालं कुत्र स्थितः? भवता ईदृक् रत्नमाला कुत्र लब्धा? या दीप्त्या सूर्य्यमपि तिरस्करोति। वानरः प्राह, अस्ति कुत्रचित् अरण्ये गुप्ततरं महत्सरो धनदनिर्मितम्; तत्र सूर्य्येऽर्द्धोदिते रविवारे यः कश्चित् निमज्जति स धनदप्रसादात् ईदृक् रत्नमालाविभू-षितकण्ठो निःसरति। अथ भूभुजा तदाकर्ण्य स वानरः समाहूतः पृष्टश्च। भो यूथाधिप! किं सत्यमेतत्? रत्नमाला-सनाथं सरोऽस्ति क्वापि? कपिराह, स्वामिन्! एष प्रत्यक्ष-तया मत्कण्ठस्थितया रत्नमालया प्रत्ययस्ते। तद्यदि रत्न-

---

(ख) धूर्त्ततरः अतिधूर्त्तः। त्वत्समः त्वत्तुल्यः।

(ग) विधिना प्रकारेण पद्मिनीनालग्रहणेनेति भावः।

(घ) वाह्यतः वहिः प्रदेशे स्थले इति शेषः।

(ङ) दूषयति पराभवति।

(च) वाक्प्रपञ्चेन वाग्जालेन।

(छ) वृक्षप्रासादेषु वृक्षेषु प्रासादेषु राजभवनेषु च।

मालया प्रयोजनं तन्मया सह कमपि प्रेषय येन दर्शयामि। तत् श्रुत्वा नृपतिः आह, यदि एवं तदहं सपरिजनः स्वयम् एष्यामि येन प्रभूता रत्नमाला सम्पद्यन्ते। वानर आह, एवं क्रियताम्। तथा अनुष्ठिते भूपतिना सह रत्नमालालोभेन सर्वे कलत्रभृत्याः प्रस्थिताः। वानरोऽपि राज्ञा दोलाधिरूढेन स्वोत्सङ्गे आरोपितः (ञ) सुखेन प्रीतिपूर्वम् आनीयते। अथवा साधु इदमुच्यते,

तृष्णे देवि! नमस्तुभ्यं यया वित्तान्विता अपि।
अकृत्येषु नियोज्यन्ते भ्राम्यन्ते दुर्गमेष्वपि॥ ८१॥

तथाच, इच्छति शती सहस्रं सहस्री लक्षमीहते।
लक्षाधिपस्तथा राज्यं राज्यस्थः स्वर्गमीहते॥ ८२॥

जीर्यन्ते जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः।
जीर्यतश्चक्षुषी श्रोत्रे तृष्णैका तरुणायते॥ ८३॥

अथ तत्सरः समासाद्य वानरः प्रत्यूषसमये राजानम् उवाच, देव! अत्र अर्द्धोदिते सूर्य्येऽत्र प्रविष्टानां सिद्धिर्भवति। तत्सर्वोऽपि जन एकदा एव प्रविशतु, त्वया पुनः मया सह प्रविष्टव्यं येन पूर्वदृष्टस्थानम् आसाद्य प्रभूतास्ते (झ) रत्नमाला

---

(ञ) दोलाधिरूढ़ेन दोलामधिरूढ़ेन। स्वोत्सङ्गम् आत्मक्रोड़म्। आरोपितः नीतः।

तृष्णे इति। हे तृष्णे! देवि! तुभ्यं नमः, त्वां प्रणमामि इत्यर्थः। यया त्वयेति शेषः वित्तान्विता धनवन्तोऽपि अकृत्येषु अकरणीयेषु विषयेषु नियोज्यन्ते नियुक्ताः क्रियन्ते, तथा दुर्गमेषु अपि स्थानेषु भ्राम्यन्ते भ्रान्ताः क्रियन्ते॥ ८१॥

इच्छतीति। शती शतसंख्यकधनवान् सहस्रम् इच्छति, सहस्री सहस्रसंख्यकधनवान् लक्षम् ईहते वाञ्छति। लक्षाधिपः राज्यं तथा राज्यस्थः स्वर्गम् ईहते अभिलषति॥ ८२॥

जीर्यत इति। पूर्वं व्याख्यातम्॥ ८३॥

(झ) ते तुभ्यम्।

दर्शयामि। अथ प्रविष्टाः ते लोकाः सर्वे भक्षिता राक्षसेन। अथ तेषु चिरायमाणेषु राजा वानरमाह, भो यूथाधिप! किमिति चिरायते मे जनः। तत्श्रुत्वा वानरः सत्वरं वृक्षम् आरुह्य राजानम् उवाच, भो दुष्टनरपते! राक्षसेन अन्तः-सलिलस्थितेन भक्षितस्ते परिजनः साधितं मया कुलक्षयजं वैरम्, तत् गम्यताम्। त्वं स्वामीति मत्वा न अत्र प्रवेशितः। उक्तञ्च,

कृते प्रतिकृतिं कुर्य्याद्धिंसिते प्रतिहिंसितम्।
न तत्र दोषं पश्यामि दुष्टे दुष्टं समाचरेत्॥ ८४॥

तत्त्वया मम कुलक्षयः कृतो मया पुनस्तवेति। अथ एतदाकर्ण्य राजा कोपाविष्टः पदातिः एकाकी यथायात-मार्गेण निष्क्रान्तः। अथ तस्मिन् भूपतौ गते राक्षसः तृप्तो जलात् निष्क्रम्य सानन्दम् इदमाह,

हतः शत्रुः कृतं मित्रं रत्नमाला न हारिता।
नालेनापिवता तोयं भवता साधु वानर!॥ ८५॥

अतोऽहं ब्रवीमि,

यो लौल्यात् कुरुते कर्म नैवोदर्कमवेक्षते।
विड़म्बनामवाप्नोति स यथा चन्द्रभूपतिः॥ ८६॥

---

कृते इति। कृते उपकारे वा अपकारे इति भावः प्रतिकृतिं प्रत्युपकारं प्रत्यपकारं वा, तथा हिंसिते हिंसनं कुर्य्यात्, तत्र प्रतिहिंसने इति शेषः दोषं न पश्यामि, यतः दुष्टे जने दुष्टं समाचरेत् अनुतिष्ठेत् शठे शाठ्यं समाचरेदिति भावः॥ ८४॥

हत इति। हे वानर! नालेन पद्मनालग्रहणेन तोयम् आपिवता भवता साधु यथा तथा अनायासेनेति भावः। शत्रुः हतः विनाशितः, मित्रं मया सहेति शेषः कृतं रत्नमाला मदीयेति शेषः न हारिता न विनाशिता न हस्तान्तरं नीता इत्यर्थः॥ ८५॥

एवमुक्त्वा भूयोऽपि स चक्रधरमाह, भो मित्र ! प्रेषय मां येन स्वगृहं गच्छामि। चक्रधर आह, भद्र! आपदर्थं धनमित्रसंग्रहः क्रियते। तत् माम् एवंविधं त्यक्त्वा क्व यास्यसि। उक्तञ्च,

यस्त्यक्त्वा सापदं मित्रं याति निष्ठुरतां सुहृत्।
कृतघ्नस्तेन पापेन नरके यात्यसंशयम् ॥ ८७ ॥

सुवर्णसिद्धिः आह, भोः ! सत्यमेतत् यदि गम्यस्थाने (ञ) शक्तिर्भवति। एतत्पुनः मनुष्याणाम् अगम्यस्थानम्। नास्ति कस्यापि त्वाम् उन्मोचयितुं शक्तिः। अपरं यथा यथा चक्रभ्रमवेदनया तव मुखविकारं पश्यामि तथा तथा अहमेतत् जानामि यत् द्राक् गच्छामि मा कश्चित् ममापि अनर्थो (ट) भवति। यतः,

यादृशी वदनच्छाया दृश्यते तव वानर !।
विकालेन गृहीतोऽसि यः परैति स जीवति ॥ ८८ ॥

चक्रधर आह, कथमेतत् ? सोऽब्रवीत्,

## कथा ११।

कस्मिंश्चित् नगरे भद्रसेनो नाम राजा प्रतिवसति स्म, तस्य सर्वलक्षणसम्पन्ना रत्नवती नाम कन्या अस्ति। तां

---

य इति। यः सुहृत् सापदम् आपद्ग्रस्तं मित्रं त्यक्त्वा निष्ठुरतां याति गच्छति, स कृतघ्नः तेन पापेन असंशयं नरके याति ॥ ८७ ॥

(ञ) गम्यस्थाने सुगमे प्रदेशे इत्यर्थः।

(ट) द्राक् शीघ्रम्। अनर्थः अनिष्टपातः।

यादृशीति। हे वानर ! यादृशी तव वदनस्य मुखस्य छाया कान्तिः दृश्यते, तयेति शेषः त्वं विकालेन विपरीतसमयेन दौर्भाग्येनेति यावत् गृहीतोऽसि आक्रान्तोऽसि, तस्मात् यः परैति पलायते अस्मात् सङ्कटादिति भावः स जीवति ॥ ८८ ॥

कश्चित् राक्षसो जिहीर्षति। रात्रौ आगत्य उपभुङ्क्ते। परं कृतरक्षोपधानां (ठ) हर्त्तुं न शक्नोति। सापि तत्समये रक्षःसान्निध्यजामवस्थाम् (ड) अनुभवति कम्पादिभिः। एवम् अतिक्रामति काले कदाचित् स राक्षसो मध्यनिशायां गृहकोणे स्थितः। सापि राजकन्या स्वसखीम् उवाच, सखि! पश्य एष विकालः समये नित्यमेव मां कदर्थयति (ढ)। अस्ति तस्य दुरात्मनः प्रतिषेधोपायः (ण) कश्चित्। तच्छ्रुत्वा राक्षसोऽपि व्यचिन्तयत्, नूनं यथा अहं तथा अन्योऽपि कश्चित् विकालनामा अस्या हरणाय नित्यमेव आगच्छति। परं सोऽपि एनां हर्त्तुं न शक्नोति। तत् तावत् अश्वरूपं कृत्वा अश्वमध्यगतो निरीक्षयामि किं रूपः सः किम्प्रभावश्च इति। एवं राक्षसोऽश्वरूपं कृत्वा अश्वानां मध्ये तिष्ठति। तथानुष्ठिते निशीथसमये राजगृहे कश्चित् अश्वचौरः प्रविष्टः। स च सर्वान् अश्वान् अवलोक्य तं राक्षसम् अश्वतमं विज्ञाय अधिरूढः। अत्रान्तरे राक्षसः चिन्तयामास। नूनमेष विकालनामा मां चौरं मत्वा कोपात् निहन्तुम् आगतः। तत् किं करोमि? एवं चिन्तयन् सोऽपि तेन खलीनं (त) मुखे निधाय कशाघातेन (थ) ताड़ितः। अथ असौ भयत्रस्त-

---

(ठ) जिहीर्षति हर्त्तुमिच्छति। कृतेति। कृतं रक्षायै उपधानम् उपायः यस्याः तथोक्ताम्।

(ड) तत्समये राक्षससम्भोगकाले। रक्षसः सान्निध्यजां संसर्गजनिताम् अवस्थां दशाम्।

(ढ) कदर्थयति क्लिश्यति।

(ण) प्रतिषेधोपायः निवारणोपायः।

(त) खलीनं वल्गां मुखरज्जुम् इत्यर्थः।

(थ) कशाघातेन कशा अश्वादिताड़नोपकरणविशेषः अश्वादिताड़नी कशेत्यमरः।

मना: प्रधावितुम् आरब्ध:। चौरोऽपि दूरं गत्वा खलीनाकर्षणेन तं स्थिरं कर्त्तुम् आरब्धवान्। स तु केवलं वेगाद्वेगतरं गच्छति। अथ तं तथागणितखलीनाकर्षणं (द) मत्वा चौर: चिन्तयामास। अहो न एवंविधा वाजिनो भवन्ति अगणितखलीना: तन्नूनम् अनेन अश्वरूपेण राक्षसेन भवितव्यम्। तद्यदि कञ्चित् पांशुलं (ध) भूमिदेशम् अवलोकयामि तदा आत्मानं तत्र पातयामि। न अन्यथा मे जीवितव्यमस्ति। एवं चिन्तयत इष्टदेवतां स्मरतस्तस्य सोऽश्वो वटवृक्षस्य तले निष्क्रान्त: (न)। चौरोऽपि वटप्ररोहम् आसाद्य तत्रैव विलग्न: (प)। ततो द्वौ अपि तौ पृथग्भूतौ परमानन्दभाजौ जीवितविषये लब्धप्रत्याशौ सम्पन्नौ। अथ तत्र वटे कश्चित् राक्षससुहृत् वानर: स्थित आसीत्। तेन राक्षसं त्रस्तम् आलोक्य व्याहृतम्। भो मित्र! किमेवं पलाय्यतेऽलीकभयेन, त्वद्भक्ष्योऽयं मानुष: भक्ष्यताम्। सोऽपि वानरवचो निशम्य स्वरूपम् आधाय शङ्कितमना: स्खलितगति: निवृत्त:। चौरोऽपि तं वानराहूतं ज्ञात्वा कोपात् तस्य लाङ्गूलं लम्बमानं मुखे निधाय चर्वितवान्। वानरोऽपि तं राक्षसाभ्यधिकं मन्यमानो भयात् न किञ्चिदुक्तवान् केवलं व्यथार्त्तो निमीलितनयन: तिष्ठति। राक्षसोऽपि तं तथाभूतम् अवलोक्य श्लोकमिमम् अपठत्।

---

(द) अगणितेति। अगणितम् अखचितं खलीनेन आकर्षणं येन तादृशम्।

(ध) पांशुलं धूलिपूर्णं धूलिराशेरुपरि पाते न काचित् शरीरव्यथा भवतीति भाव:।

(न) निष्क्रान्त: उपस्थित:।

(प) वटप्ररोहं न्यग्रोधाङ्कुरम्। आसाद्य अवलम्ब्य विलग्न: अश्वात् निष्क्रम्य स्थित इत्यर्थ:।

याद‍ृशी वदनच्छाया दृश्यते तव वानर ! ।
विकालेन गृहीतोऽसि यः परैति स जीवति ॥७९॥

प्रनष्टश्च ।

तत्प्रेषय मां येन गृहं गच्छामि । त्वं पुनः अनुभुङ्क्ष्व अत्र स्थित एव लोभवृक्षफलम् । चक्रधरः प्राह, भोः ! अकारणमेतत्, दैववशात् सम्पद्यते नृणां शुभाशुभम् । उक्तञ्च,

दुर्गस्त्रिकूटः परिखा समुद्रो रक्षांसि योधा धनदाच्च वित्तम् ।
शास्त्रञ्च यस्योशनसा प्रणीतं स रावणो दैववशाद्विपन्नः ॥९०॥

तथाच, अन्धकः कुब्जकश्चैव त्रिस्तनी राजकन्यका ।
त्रयोऽप्यन्यायतः सिद्धाः सम्मुखे कर्मणि स्थिते ॥९१॥

सुवर्णसिद्धिः आह, कथमेतत् ? सोऽब्रवीत्,

## कथा १२ ।

अस्ति उत्तरापथे मधुपुरं नाम नगरम् । तत्र मधुसेनो नाम राजा बभूव । तस्य कदाचित् विषयसुखम् अनुभवतः त्रिस्तनी कन्या बभूव । अथ तां त्रिस्तनीं जातां श्रुत्वा स राजा कञ्चुकिनः प्रोवाच, यद् भोः त्यज्यतामियं त्रिस्तनी गत्वा दूरेऽरण्ये यथा कश्चित् न जानाति । तच्छ्रुत्वा कञ्चुकिनः

---

दुर्ग इति । त्रिकूटः तदाख्यो गिरिः दुर्गः, यः परैर्न लङ्घ्यते इति भावः, समुद्रः परिखा दुर्गचतुष्पार्श्वेषु स्थितो जलराशिरित्यर्थः यः शत्रुभिर्नोत्तीर्य्यते इति भावः । रक्षांसि राक्षसाः योधाः सैन्यानि, धनदात् कुवेरात् वित्तं धनं यावत् प्रयोजनं तावदेव धनदाल्लभ्यते इति भावः । उशनसा शुक्रेण प्रणीतं शास्त्रं नीतिशास्त्रम् इत्यर्थः चक्षुरिति शेषः यस्येति सर्वत्र सम्बध्यते स रावणः अपि दैववशात् विपन्नः नाशं गत इत्यर्थः । उपजातिवृत्तम् ॥ ९० ॥

अन्धक इति । सम्मुखे कर्मणि स्थिते सति अन्धकः कुब्जकः तथा त्रिस्तनी राजकन्यका एते त्रयोऽपि अन्यायतः अन्यायेन अवैधरूपेण इत्यर्थः सिद्धाः सिद्धिं गताः ॥ ९१ ॥

प्रोचुः, महाराज! ज्ञायते यत् अनिष्टकारिणी त्रिस्तनी कन्या भवति। तथापि ब्राह्मणा आहूय प्रष्टव्या येन लोकद्वयं न विरुद्ध्यते (फ)। यतः,

य: सततं परिपृच्छति शृणोति सन्धारयत्यनिशम्।
तस्य दिवाकरकिरणैर्नलिनीव विवर्द्धते बुद्धिः॥ ९२॥

तथाच, पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विजः पुरा॥९३॥

राजा आह, कथमेतत्? ते प्रोचुः,

## कथा १३।

देव! कस्मिंश्चित् वनोद्देशे चण्डकर्मा नाम राक्षसः प्रतिवसति स्म, एकदा तेन भ्रमता अटव्यां कश्चिद् ब्राह्मणः समासादितः। ततः तस्य स्कन्धमारुह्य प्रोवाच, भोः! अग्रेसरो गम्यताम्। ब्राह्मणोऽपि भयत्रस्तमनाः तमादाय प्रस्थितः। अथ तस्य कमलोदरकोमलौ पादौ दृष्ट्वा ब्राह्मणो राक्षसम् अपृच्छत्। भोः किमेवंविधौ ते पादौ अतिकोमलौ। राक्षस आह, भो! व्रतमस्ति, नाहम् आर्द्रपादो (ब) भूमिं

---

(फ) लोकद्वयं न विरुध्यते यथा इहलोके निन्दा न भवेत् परत्र च नरकपाती न स्यादिति भावः।

य इति। यः जनः सततं परिपृच्छति, संशयनिर्णयार्थमिति भावः शृणोति सत्परामर्शमिति भावः, अनिशं सततं सन्धारयति अभिनिवेशेन धारयति, दिवाकरकिरणैः सूर्य्यमयूखैः नलिनीव तस्य जनस्य बुद्धिः विवर्द्धते विशेषेण वृद्धिं गच्छति। आर्य्यावृत्तम्॥ ९२॥

पृच्छकेनेति। विजानता विज्ञेन पुरुषेण सदा पृच्छकेन प्रश्नकारिणा भाव्यम्। पुराः पूर्वं राक्षसेन्द्रेण गृहीतोऽपि धृतोऽपि प्रश्नात् प्रश्नकरणादित्यर्थः मुक्तः उत्तीर्णः॥ ९३॥

(ब) व्रतं नियमः। आर्द्रपादः प्रक्षालितचरणः।

स्थास्यामि। ततः तच्छ्रुत्वा आत्मनो मोक्षोपायं (भ) चिन्तयन् सरः प्राप्तः। ततो राक्षसेन अभिहितम्, भो! यावदहं स्नानं कृत्वा देवतार्चनविधिं विधाय आगच्छामि तावत् त्वया अतः स्थानात् अन्यत्र न गन्तव्यम्। तथानुष्ठिते द्विजः चिन्तयामास, नूनं देवतार्चनविधेरूर्ध्वं मामेष भक्षयिष्यति। तत् द्रुततरं गच्छामि येन एष आर्द्रपादो न मम पृष्ठम् एष्यति। तथानुष्ठिते राक्षसो व्रतभङ्गभयात् तस्य पृष्ठं न गतः। अतोऽहं ब्रवीमि।

पृच्छकेन सदा भाव्यं पुरुषेण विजानता।
राक्षसेन्द्रगृहीतोऽपि प्रश्नान्मुक्तो द्विजः पुरा ॥९४॥

अथ तेभ्यः तच्छ्रुत्वा राजा द्विजान् आहूय प्रोवाच, भो ब्राह्मणाः! त्रिस्तनी मे कन्या समुत्पन्ना। तत् किं तस्याः प्रतिविधानम् अस्ति न वा? प्रोचुः। देव! श्रूयताम्।

हीनाङ्गी वाधिकाङ्गी वा या भवेत् कन्यका नृणाम्।
भर्त्तुः स्यात् सा विनाशाय स्वशीलनिधनाय च ॥९५॥
या पुनस्त्रिस्तनी कन्या याति लोचनगोचरम्।
पितरं नाशयत्येव सा द्रुतं नात्र संशयः ॥ ९६ ॥

तस्मात् अस्या दर्शनं परिहरतु (म) देवः। तथा यदि कश्चित् उद्वाहयति (य) तदेनां तस्मै दत्त्वा देशत्यागेन नियो-

(भ) मोक्षोपायम् उद्धारोपायम्।

हीनाङ्गीति। नृणां नराणां या कन्या हीनाङ्गी वा अधिकाङ्गी वा भवेत्, सा कन्या भर्त्तुः स्वामिनो विनाशाय स्वस्य शीलं चारित्रं तस्य निधनाय ध्वंसाय स्यात् ॥ ९५ ॥

येति। या त्रिस्तनी कन्या पुनः लोचनगोचरं दृष्टिविषयं याति, सा अत्र संसारे द्रुतं शीघ्रं पितरं नाशयति एव, अत्र संशयो न अस्तीति शेषः ॥ ९६ ॥

(म) परिहरतु परित्यज्यतु।

(य) उद्वाहयति उद्वाहेन गृहीतुमिच्छति इत्यर्थः।

जयितव्य इति। एवं कृते लोकद्वयाविरुद्धता भवति। अथ तेषां तद्वचनम् आकर्ण्य स राजा पटहशब्देन (र) सर्वत्र घोषणाम् आज्ञापयामास। अहो! त्रिस्तनीं राजकन्यां यः कश्चित् उद्वाहयति स सुवर्णलक्षम् आप्नोति देशत्यागञ्च। एवं तस्याम् आघोषणायां क्रियमाणायां महान् कालो व्यतीतः। न कश्चित् तां प्रतिगृह्णाति। सापि यौवनोन्मुखी सञ्जाता सुगुप्तस्थानस्थिता यत्नेन रक्ष्यमाणा तिष्ठति। अथ तत्रैव नगरे कश्चित् अन्धः तिष्ठति। तस्य च मन्थरकनामा कुब्जोऽग्रेसरो यष्टिग्राही (ल)। ताभ्यां तं पटहशब्दम् आकर्ण्य मिथो मन्त्रितम्। स्पृश्यते(व)ऽयं पटहो यदि कथमपि दैवात् कन्या लभ्यते तथा सुवर्णप्राप्तिश्च भवति, सुखेन सुवर्णप्राप्त्या कालो व्रजति। अथ यदि तस्या दोषतो मृत्युर्भवति दारिद्र्योपात्तस्य (श) अस्य क्लेशस्य पर्य्यन्तो (ष) भवति। उक्तञ्च,

लज्जा स्नेहः स्वरमधुरता बुद्धयो यौवनश्रीः
कान्तासङ्गो स्वजनममता दुःखहानिर्विलासः।
धर्मः शास्त्रं सुरगुरुमतिः शौचमाचारचिन्ता
पूर्णे सर्वे जठरपिठरे प्राणिनां सम्भवन्ति॥ ९७॥

---

(र) पटहशब्देन वाद्यविशेषशब्देन।

(ल) यष्टिग्राही यष्टिधरः।

(व) स्पृश्यते घोष्यते इति यावत्।

(श) तस्याः त्रिस्तन्याः। दारिद्र्योपात्तस्य दारिद्र्यकृतस्य।

(ष) पर्य्यन्तः शेषः।

लज्जेति। जठरपिठरे जठरानले पूर्णे शान्ते सति इत्यर्थः प्राणिनां लज्जा, स्नेहः, स्वरमधुरता सुस्वरता, बुद्धयः यौवनश्रीः, कान्तया सङ्गः स्वजनेषु आत्मीयजनेषु ममता, दुःखहानिः विलासः सुखाभिलाषः धर्मः शास्त्रं सुरगुरुमतिः

एवमुक्त्वा अन्धेन गत्वा स पटहः स्पृष्टः। भो! अहं तां कन्याम् उद्वाहयामि यदि राजा मे प्रयच्छति। ततस्तैः राजपुरुषैः गत्वा राज्ञे निवेदितम्, देव! अन्धकेन केनचित् पटहः स्पृष्टः। तदत्र विषये देवः प्रमाणम्। राजा प्राह,

अन्धो वा वधिरो वापि कुष्ठी वाप्यन्त्यजोऽपि वा।
प्रतिगृह्णातु तां कन्यां सलक्षां स्याद्विदेशजः॥ ९८॥

अथ राजादेशात् तैः रक्षापुरुषैः तं नदीतीरे नीत्वा सुवर्णलक्षेण समं विवाहविधिना त्रिस्तनीं तस्मै दत्त्वा जलयाने (स) निधाय कैवर्त्ताः (ह) प्रोक्ताः। भोः देशान्तरं नीत्वा कस्मिंश्चित् अधिष्ठाने अन्धः सपत्नीकः कुब्जकेन सह मोचनीयः (च)। तथानुष्ठिते विदेशम् आसाद्य कस्मिंश्चित् अधिष्ठाने कैवर्त्तदर्शिते त्रयोऽपि मूल्येन गृहं प्राप्ताः सुखेन कालं नयन्ति स्म, केवलम् अन्धः पर्य्यङ्के सुप्तः तिष्ठति। गृहव्यापारं मन्थरकः करोति, एवं गच्छता कालेन त्रिस्तन्याः कुब्जकेन सह विकृतिः (क) समपद्यत। अथवा साधु इदमुच्यते,

यदि स्यात् शीतलो वह्निश्चन्द्रमा दहनात्मकः।

---

देवगुरुषु भक्तिः, शौचं पवित्रता, आचारचिन्ता सदाचारानुष्ठानम् इत्यर्थः एते सर्वे सम्भवन्ति। मन्दाक्रान्तावृत्तम्॥ ९७॥

अन्ध इति। अन्धो वा वधिरो वा कुष्ठी वा अन्त्यजः नीचकुलोत्पन्नो वा विदेशजो वा स्यात् यः कोऽपि भवेद्वा स तां सलक्षां लक्षमुद्रासमेतां कन्यां प्रतिगृह्णातु॥ ९८॥

(स) जलयाने नौकायाम्।

(ह) कैवर्त्ताः धीवराः नौजीविनः कर्णधारादय इत्यर्थः।

(च) मोचनीयः त्यक्तव्यः।

(क) विकृतिः व्यभिचार इत्यर्थः।

यदीति। यदि वह्निः शीतलः, चन्द्रमाः दहनात्मकः दहनशक्तिमान् तथा

सुखादः सागरः क्षीणां तत्सतीत्वं प्रजायते ॥ ९९ ॥

अथ अन्येद्युः त्रिस्तन्या मन्थरकोऽभिहितः। भोः सुभग! यदि एषः अन्धः कथञ्चिद्दग्रापाद्यते तत् आवयोः सुखेन कालो याति, तदन्विष्यतां कुत्रचित् विषं येन अस्मै तत्प्रदाय सुखिनी भवामि। अन्यदा कुब्जकेन परिभ्रमता मृतः कृष्णसर्पः प्राप्तः। तं गृहीत्वा प्रहृष्टमना गृहमभ्येत्य त्वामाह, सुभगे! लब्धोऽयं कृष्णसर्पः। तदेनं खण्डशः कृत्वा प्रभूतशुण्ठ्यादिभिः संस्कार्य्य अस्मै विकलनेत्राय मत्स्यामिषं (ख) भणित्वा प्रयच्छ येन द्राक् विनश्यति यतोऽस्य मत्स्यस्य आमिषं सदा प्रियम्। एवमुक्त्वा मन्थरको बाह्ये गतः। सापि प्रदीप्ते वह्नौ कृष्णसर्पं खण्डशः कृत्वा तक्रम् आदाय गृहव्यापाराकुला तं विकलाक्षं सप्रश्रयम् उवाच, आर्य्यपुत्र! तव अभीष्टं मत्स्यमांसं समानीतं यतः त्वं सदा एव तत् पृच्छसि। ते च मत्स्या वह्नौ पाचनाय तिष्ठन्ति। तद्यावत् अहं गृहकृत्यं (ग) करोमि तावत् त्वं दर्वीम् (घ) आदाय क्षणमेकं तान् प्रचालय। सोऽपि तदाकर्ण्य हृष्टमनाः सृक्कणी परिलिहन् द्रुतम् उत्थाय दर्वीम् आदाय प्रमथितुम् आरब्धः। अथ तस्य मत्स्यात् मथतो (ङ) विषगर्भवाष्पेण संस्पृष्टं नीलपटलं (च)

---

सागरः सुखादः सुखपेयः स्यात् तत् तदा स्त्रीणां सतीत्वं प्रजायते सम्भवति ॥ ९९ ॥

(ख) शुण्ठ्यादिभिः शुण्ठी द्रव्यविशेषः तत्प्रभृतिभिः सहेति शेषः संस्कार्य्य पाचयित्वा। विकलनेत्राय अन्धाय। मत्स्यामिषं मत्स्यमांसं भणित्वा उक्त्वा। द्राक् झटिति।

(ग) पाचनाय तिष्ठन्ति पच्यन्ते इत्यर्थः। गृहकृत्यं गेहकार्य्यम्।

(घ) दर्वीं पाकद्रव्यप्रचालनयन्त्रम्।

(ङ) मथतः प्रचालयतः। तस्य अन्धस्य।

(च) नीलपटलं कालिमचयः दर्शनेन्द्रियावरकमिति शेषः।

चक्षुर्भ्याम् अगलत्। असौ अपि अन्धो बहुगुणं (छ) मन्यमानो विशेषात् नेत्राभ्यां वाष्पग्रहणम् अकरोत्। ततो लब्धदृष्टिर्जातो यावत् पश्यति तावत् तक्रमध्ये कृष्णसर्पखण्डानि केवलानि एव अवलोकयति। ततो व्यचिन्तयत्, अहो! किमेतत्? मम मत्स्यामिषं कथितम् आसीत् अनया, एतानि तु कृष्णसर्पखण्डानि। तत् तावत् विजानामि सम्यक्, त्रिस्तन्याः चेष्टितं किं मम बधोपायक्रमः कुब्जस्य वा, उताहो अन्यस्य वा कस्यचित्? एवं विचिन्त्य स्वाकारं गूहन् अन्धवत् कर्म करोति यथा पुरा (ज)। अत्रान्तरे कुब्जः समागत्य निःशङ्कतया आलिङ्गनचुम्बनादिभिः त्रिस्तनीं सेवितुम् उपचक्रमे। सोऽपि अन्धः तम् अवलोकयन् अपि यावत् न किञ्चित् शस्त्रं पश्यति तावत् कोपव्याकुलमनाः पूर्ववत् शयनं गत्वा कुब्जं चरणाभ्यां संगृह्य सामर्थ्यात् (झ)। स्वमस्तकोपरि भ्रामयित्वा त्रिस्तनीं हृदये व्यताड़यत् (ञ)। अथ कुब्जप्रहारेण तस्याः तृतीयः स्तन उरसि (ट) प्रविष्टः। तथा बलात् मस्तकोपरि भ्रामणेन कुब्जः प्राञ्जलतां (ठ) गतः। अतोऽहं ब्रवीमि,

अन्धकः कुब्जकश्चैव राजकन्या च त्रिस्तनी।
न्यायोऽप्यन्यायतः सिद्धः सम्मुखे कर्मणि स्थिते॥ १००॥

---

(छ) बहुगुणं बहूपकारकम्।

(ज) गूहन् गोपायन् अप्रकाशयन् इत्यर्थः। यथा पुरा पूर्ववत्।

(झ) सामर्थ्यात् बलात्।

(ञ) व्यताड़यत् विशेषेण ताड़यामास।

(ट) उरसि वक्षसि तदभ्यन्तरे इत्यर्थः। सा द्विस्तनी जातेति भावः।

(ठ) प्राञ्जलतां सरलताम्। कुब्जदोषरहितोऽभवदिति भावः।

सम्मुखे अनुकूले। कर्मणि कर्मोपात्ते दैवे इति भावः॥ १००॥

सुवर्णसिद्धिः आह, भोः सत्यमेतत्, दैवानुकूलतया सर्वं कल्याणं सम्पद्यते। तथापि पुरुषेण सतां वचनं कार्य्यम्। न पुनः एवमेव वर्त्तते स (ड) त्वमिव विनश्यति।

तथाच, एकोदराः पृथगग्रीवा अन्योऽन्यफलभक्षिणः।
असंहता विनश्यन्ति भारण्डा इव पक्षिणः॥ १०१॥

चक्रधर आह, कथमेतत्? सोऽब्रवीत्,

## कथा १४।

कस्मिंश्चित् सरोवरे भारण्डनामा पक्षी एकोदरः पृथग्ग्रीवः प्रतिवसति स्म। तेन च समुद्रतीरे परिभ्रमता किञ्चित् फलम् अमृतकल्पं तरङ्गाक्षिप्तं (ढ) सम्प्राप्तम्। सोऽपि भक्षयन् इदमाह, अहो! बहूनि मया अमृतप्रायाणि समुद्रकल्लोलाहृतानि फलानि भक्षितानि। परमपूर्वोऽस्य आस्वादः, तत् किं पारिजातहरिचन्दनतरुसम्भवं किं वा किञ्चित् अमृतमयफलम् अव्यक्तेनापि (ण) विधिना पतितम्। एवं तस्य ब्रुवतो द्वितीयमुखेन अभिहितम्। भो! यदि एवं तत् ममापि स्तोकं प्रयच्छ येन जिह्वासौख्यम् अनुभवामि। ततो विहस्य प्रथमवक्त्रेण अभिहितम्, आवयोः तावदेकम् उदरम् एका तृप्तिश्च भवति। ततः किं पृथग्भक्षितेन, वरमनेन शेषेण प्रिया तोष्यते। एवम् अभिधाय तेन शेषं भारण्ड्याः (त) प्रदत्तम्।

---

(ड) स पुरुषः।

एकोदरा इति। एकोदराः एककुक्षयः पृथक्ग्रीवाः द्विमुखा इति भावः अन्योन्यफलकाङ्क्षिणः परस्परहिताभिलाषिणः किन्तु असंहता अमिलिताः सन्तः भारण्डाः तदाख्याः पक्षिण इव विनश्यन्ति विनाशं गच्छन्ति॥ १०१॥

(ढ) तरङ्गाक्षिप्तं तरङ्गवशात् वेलां गतम् इत्यर्थः। अमृतकल्पम् अमृततुल्यम्।

(ण) अव्यक्तेन अस्फुटेन अप्रकाशेन विधिना दैवेन मम शुभादृष्टेन हेतुना।

(त) शेषेण भुक्तावशिष्टेन इत्यर्थः। प्रिया भार्य्या। भारण्ड्याः स्वप्रियायाः।

सापि तत् आस्वाद्य प्रहृष्टतमा आलिङ्गनचुम्बनसम्भावनानेकचाटुपरा बभूव। द्वितीयं मुखं तद्दिनादेव प्रभृति सोद्वेगं सविषादञ्च तिष्ठति। अथ अन्येद्युः द्वितीयमुखेन विषफलं प्राप्तम्। तद्दृष्ट्वा अपरमाह, भो! निस्त्रिंशपुरुषाधम! (थ) निरपेक्ष! (द) मया विषफलम् आसादितम्। तत् तवापमानात् भक्षयामि। अपरेण अभिहितम्, मूर्ख! मा मा एवं कुरु, एवं कृते द्वयोरपि विनाशो भविष्यति। अथ एवं वदता तेन अपमानेन फलं भक्षितं किं बहुना, द्वौ अपि विनष्टौ। अतोऽहं ब्रवीमि,

एकोदराः पृथग्ग्रीवा अन्योऽन्यफलभक्षिणः।
असंहता विनश्यन्ति भारुण्डा इव पक्षिणः॥ १०२॥

चक्रधर आह, सत्यमेतत्। तद्गच्छ गृहम्, परमेकाकिना न गन्तव्यम्। उक्तञ्च,

एकः स्वादु न भुञ्जीत नैकः सुप्तेषु जागृयात्।
एको न गच्छेदध्वानं नैकश्चार्थान् प्रचिन्तयेत् ॥१०३॥

अपिच, अपि कापुरुषो मार्गे द्वितीयः क्षेमकारकः।

---

(थ) निस्त्रिंशपुरुषाधम! निस्त्रिंशः खड्गः तत्तुल्यः अतिनिष्ठुर इति भावः पुरुषेषु अधमः नीचः तत्सम्बुद्धौ।

(द) निरपेक्ष! अपरसुखानपेक्षिन् इत्यर्थः।

एक इति। एको जनः स्वादु सुस्वादं द्रव्यं न भुञ्जीत अन्यस्मै किञ्चित् दत्त्वा भुञ्जीतेति भावः। एको जनः सुप्तेषु निद्रितेषु जनेषु मध्ये न जागृयात् न जागरितः तिष्ठेत्। एको जनः अध्वानं पन्थानं न गच्छेत्। एको जनः अर्थान् कार्याणि च न प्रचिन्तयेत् स्वस्य भ्रान्तिसम्भावनावशात् अपरेण सम्मन्त्र्य कार्यं कुर्य्यादिति भावः॥ १०३॥

कर्कटेन द्वितीयेन जीवितं परिरक्षितम् ॥ १०४ ॥

सुवर्णसिद्धिः आह, कथमेतत्? सोऽब्रवीत्,

## कथा १५ ।

कस्मिंश्चित् अधिष्ठाने ब्रह्मदत्तनामा ब्राह्मणः प्रतिवसति स्म, स च प्रयोजनवशात् ग्रामे प्रस्थितः स्वमात्रा (ध) अभिहितः। यत् वत्स! कथमेकाकी व्रजसि तदन्विष्यतां कश्चित् द्वितीयः, सहायः, स आह, अम्ब! मा भैषीः। निरुपद्रवो-(न)ऽयं मार्गः, कार्य्यवशात् एकाकी गमिष्यामि। अथ तस्य तं निश्चयं ज्ञात्वा समीपस्थवाप्याः सकाशात् कर्कटम् (प) आदाय मात्रा अभिहितः, वत्स! अवश्यं यदि गन्तव्यं तदेष कर्कटोऽपि सहायः भवतु। तत् एनं गृहीत्वा गच्छ। सोऽपि मातुर्वचनात् उभाभ्यां पाणिभ्यां तं संगृह्य कर्पूरपुटिका-मध्ये (फ) निधाय पात्रमध्ये संस्थाप्य शीघ्रं प्रस्थितः। अथ गच्छन् ग्रीष्मोष्मणा (ब) सन्तप्तः कञ्चित् मार्गस्थं वृक्षम् आसाद्य तत्रैव प्रसुप्तः। अत्रान्तरे वृक्षकोटरात् निर्गत्य सर्पस्तत्समीपम् आगतः। सोऽपि कर्पूरसुगन्धसहजप्रिय-

---

अपीति। मार्गे पथि कापुरुषोऽपि द्वितीयो जनः सङ्गीत्यर्थः क्षेमकारकः हितकरः। तथाहि द्वितीयेन कर्कटेन कुलीरेण जीवितं परिरक्षितम् ॥ १०४ ॥

(ध) स्वमात्रा स्वजनन्या।

(न) निरुपद्रवः उपद्रवरहितः आशङ्काया अनास्पदम् इत्यर्थः।

(प) कर्कटं कुलीरम्।

(फ) कर्पूरपुटिकेति। कर्पूरस्थलिकामध्ये इत्यर्थः।

(ब) ग्रीष्मोष्मणा निदाघतापेन।

